

स्मरन्ती गौतमवचः प्रतिजग्राह सा च तौ ।

मम रूपं समास्थाय कृतवानसि दुर्मते ।
अकर्तव्यमिदं यस्माद् विफलस्त्वं भविष्यसि ।।

तथा शप्त्वा च वै शक्रं भार्यामपि च शप्तवान् ।
इह वर्षसहस्राणि बहूनि निवसिष्यसि ।।

वातभक्षा निराहारा तप्यन्ती भस्मशायिनी ।
अदृश्या सर्वभूतानामाश्रमेऽस्मिन् वसिष्यसि ।।

यदा त्वेतद् वनं घोरं रामो दशरथात्मजः ।
आगमिष्यति दुर्धर्षस्तदा पूता भविष्यसि ।।

इममाश्रममुत्सृज्य सिद्धचारणसेविते ।
हिमवच्छिखरे रम्ये तपस्तेपे महातपाः ।।

तदागच्छ महातेज आश्रमं पुण्यकर्मणः ।
तारयैनां महाभागामहल्यां देवरूपिणीम् ।।

विश्वामित्र वचः श्रुत्वा राघवः सहलक्ष्मणः ।
विश्वामित्रं पुरस्कृत्य आश्रमं प्रविवेश ह ।।

ददर्श च महाभागां तपसा द्योतितप्रभाम् ।
सा हि गौतमवाक्येन दुर्निरीक्ष्या बभूव ह ।।

त्रयाणामपि लोकानां यावद् रामस्य दर्शनम् ।
शापस्यान्तमुपागम्य तेषां दर्शनमागता ।।

पाद्यमर्घ्यं तथाऽऽतिथ्यं चकार सुसमाहिता ।
प्रतिजग्राह काकुत्स्थो विधिदृष्टेन कर्मणा ।। 49.18

गौतमोऽपि महातेजा अहल्यासहितःसुखी ।
रामं सम्पूज्य विधिवत् तपस्तेपे महातपाः ।।

रामोऽपि परमां पूजां गौतमस्य महामुनेः ।
सकाशाद् विधिवद् प्राप्य जगाम मिथिलां ततः ।।

ततः प्रागुत्तरां गत्वा रामः सौमित्रिणा सह ।
विश्वामित्रं पुरस्कृत्य यज्ञवाटमुपागमत् ।।

विश्वामित्रमनुप्राप्तं श्रुत्वा नृपवरस्तदा ।
शतानन्दं पुरस्कृत्य पुरोहितमनिन्दितः ।।

विश्वामित्राय धर्मेण ददौ धर्मपुरस्कृतम् ।
पुनस्तं परिपप्रच्छ प्राञ्जलिः प्रयतो नृपः ।
इमौ कुमारौ भद्रं ते देवतुल्यपराक्रमौ ।।

वरायुधधरौ वीरौ कस्य पुत्रौ महामुने ।
भूषयन्ताविमं देशं चन्द्रसूर्याविवाम्बरम् ।।

तस्य तद्वचनं श्रुत्वा जनकस्य महात्मनः ।
न्यवेदयदमेयात्मा पुत्रौ दशरथस्य तौ ।।

सिद्धाश्रमनिवासं च राक्षसानां वधं तथा ।
तत्रागमनमव्यग्रं विशालायाश्च दर्शनम् ।।

अहल्यादर्शनं चैव गौतमेन समागमम् ।
महाधनुषि जिज्ञासां कर्तुमागमनं तथा ।।

एतत्सर्वं महातेजा जनकाय महात्मने ।
निवेद्य विररामाथ विश्वामित्रो महामुनिः ।। 50.25

तच्छ्रुत्वा वचनं तस्य विश्वामित्रस्य धीमतः ।
शतानन्दो महातेजा रामं वचनमब्रवीत् ।।

नास्ति धन्यतरो राम त्वत्तोऽन्यो भुवि कश्चन ।
गोप्ता कुशिकपुत्रस्ते येन तप्तं महत्तपः ।।

श्रूयतां चाभिधास्यामि कौशिकस्य महात्मनः ।
यथाबलं यथातत्त्वं तन्मे निगदतः शृणु ।।

विश्वामित्रो महातेजाः पालयामास मेदिनीम् ।
बहुवर्षसहस्राणि राजा राज्यमकारयत् ।।

नगराणि च राष्ट्राणि सरितश्च महागिरीन् ।
आश्रमान्क्रमशो राजा विचरन्नाजगाम ह ।।

वसिष्ठस्याश्रमपदं नानापुष्पलताद्रुमम् ।
नानामृगगणाकीर्णं सिद्धचारणसेवितम् ।।

तं दृष्ट्वा परमप्रीतो विश्वामित्रो महाबलः ।
प्रणतो विनयाद् वीरो वसिष्टं जपतां वरम् ।।

उपविष्टाय च तदा विश्वामित्राय धीमते ।
यथान्यायं मुनिवरः फलमूलमुपाहरत् ।।

प्रतिगृह्य तु तां पूजां वसिष्ठाद् राजसत्तमः ।
तपोऽग्निहोत्रशिष्येषु कुशलं पर्यपृच्छत ।।

सर्वत्र कुशलं प्राह वसिष्ठो राजसत्तमम् ।
पप्रच्छ जपतां श्रेष्ठो वसिष्ठो ब्रह्मणः सुतः ।। 52.6

कच्चित्ते कुशलं राजन् कच्चिद् धर्मेण रञ्जयन् ।
प्रजाः पालयसे राजन् राजवृत्तेन धार्मिक ।।

कच्चिद् बलेषु कोशेषु मित्रेषु च परंतप ।
कुशलं ते नरव्याघ्र पुत्रपौत्रे तवाऽनघ ।।

आतिथ्यं कर्तुमिच्छामि बलस्यास्य महाबल ।
तव चैवाप्रमेयस्य यथार्हं सम्प्रतीच्छ मे ।।

सर्वथा च महाप्राज्ञ पूजार्हेण सुपूजितः ।
नमस्तेऽस्तु गमिष्यामि मैत्रेणेक्षस्व चक्षुषा ।।

एवमुक्तस्तथा तेन वसिष्ठो जपतां वरः ।
आजुहाव ततः प्रीतः कल्माषीं धूतकल्मषाम् ।।

एह्येहि शबले क्षिप्रं शृणु चापि वचो मम ।
सबलस्यास्य राजर्षेः कर्तुं व्यवसितोऽस्म्यहम् ।
भोजनेन महार्हेण सत्कारं संविधत्स्व मे ।।

यस्य यस्य यथाकामं षड्रसेष्वभिपूजितम् ।
तत् सर्वं कामधुग् दिव्ये अभिवर्ष कृते मम ।।

रसेनान्नेन पानेन लेह्यचोष्येण संयुतम् ।
अन्नानां निचयं सर्वं सृजस्व शबले त्वर ।।

एवमुक्ता वसिष्ठेन शबला शत्रुसूदन ।
विदधे कामधुक् कामान् यस्य यस्येप्सितं यथा ।।

सर्वमासीत् सुसंतुष्टं हृष्टपुष्टजनायुतम् ।
विश्वामित्रबलं राम वसिष्ठेन सुतर्पितम् ।। 53.5

विश्वामित्रो हि राजर्षिर्हृष्टपुष्टस्तदाभवत् ।
युक्तः परमहर्षेण वसिष्ठमिदमब्रवीत् ।।

पूजितोऽहं त्वया ब्रह्मन् पूजार्हेण सुसत्कृतः ।
श्रूयतामभिधास्यामि वाक्यं वाक्यविशारद ।।

गवां शतसहस्रेण दीयतां शबला मम ।
रत्नं हि भगवन्नेतद् रत्नहारी च पार्थिवः ।।

कामधेनुं वसिष्ठोऽपि यदा न त्यजते मुनिः ।
तदास्य शंबलां राम विश्वामित्रोऽन्वकर्षत ।।

नीयमाना तु शबला राम राज्ञा महात्मना ।
दुःखिता चिन्तयामास रुदन्ती शोककर्शिता ।।

किं मयापकृतं तस्य महर्षेर्भावितात्मनः ।
यन्मामनागसं दृष्ट्वा भक्तां त्यजति धार्मिकः ।।

इति संचिन्तयित्वा तु निःश्वस्य च पुनः पुनः ।
जगाम वेगेन तदा वसिष्ठं परमौजसम् ।।

भगवन् किं परित्यक्ता त्वयाहं ब्रह्मणः सुत ।
यस्माद् राजभटा मां हि नयन्ते त्वत्सकाशतः ।।

न त्वं त्यजामि शबले नापि मेऽपकृतं त्वया ।
एष त्वां नयते राजा बलान्मत्तो महाबलः ।।

नहि तुल्यं बलं मह्यं राजा त्वद्य विशेषतः ।
बली राजा क्षत्रियश्च पृथिव्याः पतिरेव च ।। 54.11

एवमुक्ता वसिष्ठेन प्रत्युवाच विनीतवत् ।
वचनं वचनज्ञा सा ब्रह्मर्षिमतुलप्रभम् ।।

अप्रमेयं बलं तुभ्यं न त्वया बलवत्तरः ।
विश्वामित्रो महावीर्यस्तेजस्तव दुरासदम् ।।

नियुङ्क्ष्व मां महातेजस्त्वं ब्रह्मबलसम्भृताम् ।
तस्य दर्पं बलं यत्नं नाशयामि दुरात्मनः ।।

इत्युक्तस्तु तया राम वसिष्ठस्तु महायशाः ।
सृजस्वेति तदोवाच बलं परबलार्दनम् ।।

तस्य तद्वचनं श्रुत्वा सुरभिः सासृजत् तदा ।
तस्या हुंभारवोत्सृष्टाः पह्लवाः शतशो नृप ।।

पह्लवान्नाशयामास शस्त्रैरुच्चावचैरपि ।
विश्वामित्रार्दितान् दृष्ट्वा पह्लवान् शतशस्तथा ।।

निर्दग्धं तद्बलं सर्वं प्रदीप्तैरिव पावकैः ।
ततोऽस्त्राणि महातेजा विश्वामित्रो मुमोच ह ।।

ततस्तानाकुलान् दृष्ट्वा विश्वामित्रास्त्रमोहितान् ।
वसिष्ठश्चोदयामास कामधुक् सृज योगतः ।।

तस्य हुङ्कारतो जाताः काम्बोजा रविसन्निभाः ।
तैस्तन्निषूदितं सर्वं विश्वामित्रस्य तत्क्षणात् ।।

दृष्ट्वा निषूदितं सैन्यं वसिष्ठेन महात्मना ।
स गत्वा हिमवत्पार्श्वे किंनरोरगसेवितम् ।
महादेवप्रसादार्थं तपस्तेपे महातपाः ।। 55.12

केनचित्वथ कालेन देवेशो वृषभध्वजः ।
दर्शयामास वरदो विश्वामित्रं महामुनिम् ।।

किमर्थं तप्यसे राजन् ब्रूहि यत्ते विवक्षितम् ।
वरदोऽस्मि वरो यस्ते काङ्क्षितः सोऽभिधीयताम् ।।

प्राप्य चास्त्राणि देवेशाद् विश्वामित्रो महाबलः ।
दर्पेण महता युक्तो दर्पपूर्णोऽभवत् तदा ।।

ततो गत्वाऽऽश्रमपदं मुमोचास्त्राणि पार्थिवः ।
यैस्तत् तपोवनं नाम निर्दग्धं चास्त्रतेजसा ।।

वसिष्ठस्य च ये शिष्या ये च वै मृगपक्षिणः ।
विद्रवन्ति भयाद्भीता नानादिग्भ्यः सहस्रशः ।।

वदतो वै वसिष्ठस्य मा भैरिति मुहुर्मुहुः ।
नाशयाम्यद्य गाधेयं नीहारमिव भास्करः ।।

वसिष्ठे जपतां श्रेष्ठे तदद्भुतमिवाऽभवत् ।
तानि सर्वाणि दण्डेन ग्रसते ब्रह्मणः सुतः ।।

तेषु शान्तेषु ब्रह्मास्त्रं क्षिप्तवान् गाधिनन्दनः ।
तदस्त्रमुद्यतं दृष्ट्वा देवाः साग्निपुरोगमाः ।।

देवर्षयश्च सम्भ्रान्ता गन्धर्वाः समहोरगाः ।
त्रैलोक्यमासीत् संत्रस्तं ब्रह्मास्त्रे समुदीरिते ।।

तदप्यस्त्रं महाघोरं ब्राह्मं ब्राह्मेण तेजसा ।
वसिष्ठो ग्रसते सर्वं ब्रह्मदण्डेन राघव ।। 56.16

ब्रह्मास्त्रं ग्रसमानस्य वसिष्ठस्य महात्मनः ।
त्रैलोक्यमोहनं रौद्रं रूपमासीत् सुदारुणम् ।।

प्राज्वलद् ब्रह्मदण्डश्च वसिष्ठस्य करोद्यतः ।
विधूम इव कालाग्नेर्यमदण्ड इवाऽपरः ।।
विश्वामित्रो विनिकृतो विनिःश्वस्येदमब्रवीत् ।।

धिग्बलं क्षत्रियबलं ब्रह्मतेजोबलं बलम् ।
एकेन ब्रह्मदण्डेन सर्वाऽस्त्राणि हतानि मे ।।

तदेतत् प्रसमिक्ष्याहं प्रसन्नेन्द्रियमानसः ।
तपो महत्समास्थास्ये यद्वै ब्रह्मत्वकारणम् ।।

स दक्षिणां दिशं गत्वा महिष्या सह राघव ।
ततार परमं घोरं विश्वामित्रो महातपाः ।।

पूर्णे वर्षसहस्रे तु ब्रह्मा लोकपितामहः ।
अब्रवीन्मधुरं वाक्यं विश्वामित्रं तपोधनम् ।
जिता राजर्षिलोकास्ते तपसा कुशिकात्मज ।।

अनेन तपसा त्वां हि राजर्षिरिति विद्महे ।
एवमुक्त्वा महातेजा जगाम सह दैवतैः ।।

देवाः सर्षिगणाः सर्वे नास्ति मन्ये तपःफलम् ।
एवं निश्चित्य मनसा भूय एव महातपाः ।।

तपश्चचार धर्मात्मा काकुत्स्थ परमात्मवान् ।
एतस्मिन्नेव काले तु सत्यवादी जितेन्द्रियः ।। 57.10

त्रिशङ्कुरिति विख्यात इक्ष्वाकुकुलवर्धनः ।
तस्य बुद्धिः समुत्पन्ना यजेयमिति राघव ।।

गच्छेयं स्वशरीरेण देवतानां परां गतिम् ।
वसिष्ठं समाहूय कथयामास चिन्तितम् ।।

अशक्यमिति चाप्युक्तो वसिष्ठेन महात्मना ।
प्रत्याख्यातो वसिष्ठेन स ययौ दक्षिणां दिशम् ।।

त्रिशङ्कुस्तु महातेजाः शतं परमभास्वरम् ।
वसिष्ठपुत्रान् ददृशे तप्यमानान् मनस्विनः ।।

अब्रवीत्स महात्मानः सर्वानेव कृताञ्जलिः ।
सशरीरो यथाऽहं वै देवलोकमवाप्नुयाम् ।।

ततस्त्रिशङ्कोर्वचनं श्रुत्वा क्रोधसमन्वितम् ।
ऋषिपुत्रशतं राम राजानमिदमब्रवीत् ।।

अशक्यमिति सोवाच वसिष्ठो भगवानृषिः ।
तं वयं वै समाहर्तुं क्रतुं शक्ताः कथञ्चन ।।

बालिशस्त्वं नरश्रेष्ठ गम्यतां स्वपुरं पुनः ।
याजने भगवाञ्शक्तस्त्रैलोक्यस्यापि पार्थिव ।।

अन्यां गतिं गमिष्यामि स्वस्ति वोऽस्तु तपोधनाः ।
ऋषिपुत्रास्तु तच्छ्रुत्वा वाक्यं घोराभिसंहितम् ।।

शेपुः परमसंक्रुद्धाश्चण्डालत्वं गमिष्यसि ।
इत्युक्त्वा ते महात्मानो विविशुः स्वं स्वमाश्रमम् ।। 58.9

अथ रात्र्यां व्यतीतायां राजा चण्डालतां गतः ।
नीलवस्त्रधरो नीलः पुरुषो ध्वस्तमूर्धजः ।।

चित्रमाल्याङ्गरागश्च आयसाभरणोऽभवत् ।
तं दृष्ट्वा मन्त्रिणः सर्वे त्यज्य चण्डालरूपिणम् ।।

प्राद्रवत्सहिता राम पौरा येऽस्यानुगामिनः ।
एको हि राजा काकुत्स्थ जगाम परमात्मवान् ।।

दह्यमानो दिवारात्रं विश्वामित्रं तपोधनम् ।
विश्वामित्रस्तु तं दृष्ट्वा राजानं विफलीकृतम् ।।

चण्डालरूपिणं राम मुनिः कारुण्यमागतः ।
कारुण्यात् स महातेजा वाक्यं परमधार्मिकः ।।

इदं जगाद भद्रं ते राजानं घोरदर्शनम् ।
किमागमनकार्यं ते राजपुत्र महाबल ।।

अब्रवीत्प्राञ्जलिर्वाक्यं वाक्यज्ञो वाक्यकोविदम् ।
प्रत्याख्यातोऽस्मि गुरुणा गुरुपुत्रस्तथैव च ।।

अनवाप्यैव तं कामं मया प्राप्तो विपर्ययः ।
सशरीरो दिवं यायामिति मे सौम्यदर्शन ।।

नान्यां गतिं गमिष्यामि नान्यच्छरणमस्ति मे ।
दैवं पुरुषकारेण निवर्तयितुमर्हसि ।।

इक्ष्वाको स्वागतं वत्स जानामि त्वां सुधार्मिकम् ।
शरणं ते प्रदास्यामि मा भैषीर्नृपपुङ्गव ।। 59.2

गुरुशापकृतं रूपं यदिदं त्वयि वर्तते ।
अनेन सह रूपेण सशरीरो गमिष्यसि ।।

सर्वाञ्शिष्यान् समाहूय वाक्यमेतदुवाच ह ।
सर्वानृषीन् सवासिष्ठानानयध्वं ममाज्ञया ।।
ऋषिमध्ये महातेजा विश्वामित्रोऽभ्यभाषत ।।

अयमिक्ष्वाकुदायादस्त्रिशङ्कुरिति विश्रुतः ।
धर्मिष्ठश्च वदान्यश्च मां चैव शरणं गतः ।।

स्वेनानेन शरीरेण देवलोकजिगीषया ।
यथायं स्वशरीरेण देवलोके गमिष्यति ।।

तथा प्रवर्त्यतां यज्ञो भवद्भिश्च मया सह ।
विश्वामित्रवचः श्रुत्वा सर्व एव महर्षयः ।।

ततः प्रवर्त्यतां यज्ञः सर्वे समधितिष्ठत ।
एवमुक्त्वा महर्षयः संजह्रुस्ताः क्रियास्तदा ।।

चक्रुः सर्वाणि कर्माणि यथाकल्पं यथाविधि ।
ततः कालेन महता विश्वामित्रो महातपाः ।।

चकारावाहनं तत्र भागार्थं सर्वदेवताः ।
नाभ्यागमंस्तदा तत्र भागार्थं सर्व देवताः ।।

पश्य मे तपसो वीर्यं स्वार्जितस्य नरेश्वर ।
एष त्वां स्वशरीरेण नयामि स्वर्गमोजसा ।।

दुष्प्रापं स्वशरीरेण स्वर्गं गच्छ नरेश्वर ।
स्वार्जितं किञ्चिदप्यस्ति मया हि तपसः फलम् ।। 60.14

राजंस्त्वं तेजसा तस्य सशरीरो दिवं व्रज ।
उक्तवाक्ये मुनौ तस्मिन् सशरीरो नरेश्वरः ।।

दिवं जगाम काकुत्स्थ मुनीनां पश्यतां तदा ।
स्वर्गलोकं गतं दृष्ट्वा त्रिशङ्कुं पाकशासनः ।।

सह सर्वैः सुरगणैरिदं वचनमब्रवीत् ।
त्रिशङ्को गच्छ भूयस्त्वं नासि स्वर्गकृतालयः ।।

गुरुशापहतो मूढ पत भूमिमवाक्शिराः ।
एवमुक्तो महेन्द्रेण त्रिशङ्कुरपतत्पुनः ।।

विक्रोशमानस्त्राहीति विश्वामित्रं तपोधनम् ।
तच्छ्रुत्वा वचनं तस्य क्रोशमानस्य कौशिकः ।।

रोषमाहारयत्तीव्रं तिष्ठ तिष्ठेति चाब्रवीत् ।
ऋषिमध्ये स तेजस्वी प्रजापतिरिवापरः ।।

सृजन्दक्षिणमार्गस्थान् सप्तर्षीनपरान् पुनः ।
नक्षत्रवंशमपरमसृजन् क्रोधमूर्च्छितः ।।

अन्यमिन्द्रं करिष्यामि लोको वा स्यादनिन्द्रकः ।
दैवतान्यपि स क्रोधात् स्रष्टुं समुपचक्रमे ।।

ततः परमसम्भ्रान्ताः सर्षिसङ्घाः सुरासुराः ।
विश्वामित्रं महात्मानमूचुः सानुनयं वचः ।।

अयं राजा महाभाग गुरुशापपरिक्षतः ।
सशरीरो दिवं यातुं नार्हत्येव तपोधन ।। 60.25

तेषां तद्वचनं श्रुत्वा देवानां मुनिपुङ्गवः ।
अब्रवीत् प्रतिज्ञातं नानृतं कर्तुमुत्सहे ।।

सशरीरस्य भद्रं वस्त्रिशङ्कोरस्य भूपतेः ।
आरोहणं प्रतिज्ञातं नानृतं कर्तुमुत्सहे ।।

स्वर्गोऽस्तु सशरीरस्य त्रिशङ्कोरस्य शाश्वतः ।
नक्षत्राणि च सर्वाणि मामकानि ध्रुवाण्यथ ।।

यावल्लोका धरिष्यन्ति तिष्ठन्त्वेतानि सर्वशः ।
यत्कृतानि सुराः सर्वे तदनुज्ञातुमर्हथ ।।

एवमुक्ताः सुराः सर्वे प्रत्यूचुर्मुनिपुङ्गवम् ।
एवं भवतु भद्रं ते तिष्ठन्त्वेदानि सर्वशः ।।

एतस्मिन्नेव काले तु अयोध्याधिपतिर्महान् ।
अम्बरीष इति ख्यातो यष्टुं समुपचक्रमे ।।

तस्य वै यजमानस्य पशुमिन्द्रो जहार ह ।
प्रणष्टे तु पशौ विप्रो राजानमिदमब्रवीत् ।।

पशुरभ्याहृतो राजन् प्रणष्टस्तव दुर्नयात् ।
अरक्षितारं राजानं घ्नन्ति दोषो नरेश्वर ।।

प्रायश्चित्तं महद्ध्येतन्नरं वा पुरुषर्षभ ।
आनयस्व पशुं शीघ्रं यावत्कर्म प्रवर्तते ।।

स पुत्रसहितं तात सभार्यं रघुनन्दन ।
भृगुतुङ्गे समासीनमृचीकं संददर्श ह ।। 61.11

पृष्ट्वा सर्वत्र कुशलमृचीकं तमिदं वचः ।
गवां शतसहस्रेण विक्रीणीषे सुतं यदि ।।

पशोरर्थं महाभाग कृतकृत्योऽस्मि भार्गव ।
सर्वे परिगता देशा यज्ञियं न लभे पशुम् ।।

प्रायेण हि नरश्रेष्ठ ज्येष्ठाः पितृषु वल्लभाः ।
मातॄणां च कनीयांसस्तस्माद् रक्ष्ये कनीयसम् ।।

उक्तवाक्ये मुनौ तस्मिन्मुनिपत्न्यां तथैव च ।
शुनःशेपः स्वयं राम मध्यमो वाक्यमब्रवीत् ।।

पिता ज्येष्ठमविक्रीयं माता चाह कनीयसम् ।
विक्रेयं मध्यमं मन्ये राजपुत्र नयस्व माम् ।।

गवां शतसहस्रेण शुनःशेपं नरेश्वरः ।
गृहीत्वा परमप्रीतो जगाम रघुनन्दन ।।

शुनःशेपं नरश्रेष्ठ गृहीत्वा तु महायशाः ।
व्यश्रमत्पुष्करे राजा मध्यान्ते रघुनन्दन ।।

तस्य विश्रममाणस्य शुनःशेपो महायशाः ।
पुष्करं ज्येष्ठमागम्य विश्वामित्रं ददर्श ह ।।

पपाताङ्के मुने राम वाक्यं चेदमुवाच ह ।
न मेऽस्ति माता न पिता ज्ञातयो बान्धवाः कुतः ।।

त्रातुमर्हसि मां सौम्य धर्मेण मुनिपुङ्गव ।
त्राता त्वं हि नरश्रेष्ठ सर्वेषां त्वं हि भावनः ।। 62.5

तस्य तद्वचनं श्रुत्वा विश्वामित्रो महातपाः ।
सान्त्वयित्वा बहुविधं पुत्रानिदमुवाच ह ।।

इमे च गाथे द्वे दिव्ये गायेथा मुनिपुत्रक ।
अम्बरीषस्य यज्ञेऽस्मिंस्ततः सिद्धिमवाप्स्यसि ।।

शुनःशेपो गृहीत्वा ते द्वे गाथे सुसमाहितः ।
त्वरया राजसिंहं तं अम्बरीषम् उवाच ह ।।

राजसिंह महाबुद्धे शीघ्रं गच्छावहे वयम् ।
निवर्तयस्व राजेन्द्र दीक्षां च समुदाहर ।।

सदस्यानुमते राजा पवित्रकृतलक्षणम् ।
पशुं रक्तांबरं कृत्वा यूपे तं समबन्धयत् ।।

स बद्धो वाग्भिरग्र्याभिरभितुष्टाव वै सुरौ ।
इन्द्रमिन्द्रानुजं चैव यथावन्मुनिपुत्रकः ।।

ततः प्रीतः सहस्राक्षो रहस्यस्तुतितोषितः ।
दीर्घमायुस्तदा प्रादाच्छुनःशेपाय वासवः ।।

स च राजा नरश्रेष्ठ यज्ञस्य च समाप्तवान् ।
फलं बहुगुणं राम सहस्राक्षप्रसादजम् ।।

विश्वामित्रोऽपि धर्मात्मा भूयस्तेपे महातपाः ।
बभूवास्य मनश्चिन्ता तपोऽपहरणे कृते ।
नैवं क्रोधं गमिष्यामि न च वक्ष्ये कथंचन ।।

एवं वर्षसहस्रस्य दीक्षां स मुनिपुङ्गवः ।
चकाराप्रतिमं राम तपः परमदुष्करम् ।। 64.20

अथ हैमवतीं राम दिशं त्यक्त्वा महामुनिः ।
पूर्वां दिशमनुप्राप्य तपस्तेपे सुदारुणम् ॥

मौनं वर्षसहस्रस्य कृत्वा व्रतमनुत्तमम् ।
चकाराप्रतिमं रामः तपः परमदुष्करम् ॥

पूर्णे वर्षसहस्रे तु काष्टभूतं महामुनिम् ।
विघ्नैर्बहुभिराधूतं क्रोधो नान्तरमाविशत् ॥

स कृत्वा निश्चयं राम तप आतिष्ठताव्ययम् ।
तस्य वर्षसहस्रस्य व्रते पूर्णे महाव्रतः ॥

न किंचिदवदद् विप्रं मौनव्रतमुपास्थितः ।
तथैवासीत्पुनर्मौनं अनुच्छ्वासं चकार ह ॥

बहुभिः कारणैर्देव विश्वामित्रो महामुनिः ।
लोभितः क्रोधितश्चैव तपसा चाभिवर्धते ॥

ततःसुरगणाः सर्वे पितामहपुरोगमाः ।
विश्वामित्रं महात्मानं वाक्यं मधुरमब्रुवन् ।
ब्रह्मर्षे स्वागतं तेऽस्तु तपसा स्म सुतोषिताः ॥

ब्राह्मण्यं तपसोग्रेण प्राप्तवानसि कौशिक ।
दीर्घमायुश्च ते ब्रह्मन् ददामि स मरुद्गणः ॥

पितामहवचः श्रुत्वा सर्वेषां त्रिदिवौकसाम् ।
कृत्वा प्रणामं मुदितो व्याजहार महामुनिः ॥

ब्रह्मपुत्रो वसिष्टो मामेवं वदतु देवताः ।
यद्येवं परमः कामः कृतो यान्तु सुरर्षभाः ॥ 64.24

ततः प्रसादितो देवैर्वसिष्ठो जपतां वरः ।
सख्यं चकार ब्रह्मर्षिरेवमस्त्विति चाब्रवीत् ।।

ब्रह्मर्षिस्त्वं न संदेहः सर्वं सम्पद्यते तव ।
इत्युक्त्वा देवताश्चापि सर्वा जग्मुर्यथागतम् ।।

विश्वामित्रोऽपि धर्मात्मा लब्ध्वा ब्राह्मण्यमुत्तमम् ।
पूजयामास ब्रह्मर्षिं वसिष्ठं जपतां वरम् ।।

एवमुक्त्वा महातेजा विरराम द्विजोत्तमः ।
शतानन्दवचः श्रुत्वा रामलक्ष्मणसंनिधौ ।।

जनकः प्राञ्जलिर्वाक्यमुवाच कुशिकात्मजम् ।
धन्योऽस्म्यनुगृहीतोऽस्मि यस्य मे मुनिपुङ्गव ।।

भगवन् स्वागतं तेऽस्तु किं करोमि तवानघ ।
भवानाज्ञापयतु मामाज्ञाप्यो भवता ह्यहम् ।।

एवमुक्तः स धर्मात्मा जनकेन महात्मना ।
प्रत्युवाच मुनिश्रेष्ठो वाक्यं वाक्यविशारदः ।।

पुत्रौ दशरथस्येमौ क्षत्रियौ लोकविश्रुतौ ।
द्रष्टुकामौ धनुः श्रेष्ठं यदेतत्त्वयि तिष्ठति ।।

एतद् दर्शय भद्रं ते कृतकामौ नृपात्मजौ ।
दर्शनादस्य धनुषो यथेष्टं प्रतियास्यतः ।।

एवमुक्तस्तु जनकः प्रत्युवाच महामुनिम् ।
श्रूयतामस्य धनुषो यदर्थमिह तिष्ठति ।। 66.7

देवरात इति ख्यातो निमेर्ज्येष्ठो महीपतिः ।
न्यासोऽयं तस्य भगवन् हस्ते दत्तो महात्मनः ।।

क्षेत्रं शोधयता लब्धा नाम्ना सीतेति विश्रुता ।
भूतलादुत्थिता सा तु व्यवर्धत ममात्मजा ।।

वीर्यशुल्केति मे कन्या स्थापितेयमयोनिजा ।
वरयामासुरागत्य राजानो मुनिपुङ्गव ।
तेषां वरयतां कन्यां सर्वेषां पृथिवीक्षिताम् ।।

वीर्यशुल्केति भगवन्न ददामि सुतामहम् ।
ततः सर्वे नृपतयः समेत्य मुनिपुङ्गवः ।।

मिथिलामप्युपागम्य वीर्यं जिज्ञासवस्तथा ।
न शेकुर्ग्रहणे तस्य धनुषस्तोलनेऽपि वा ।।

तदेतन्मुनिशार्दूल धनुः परमभास्वरम् ।
रामलक्ष्मणयोश्चापि दर्शयिष्यामि सुव्रत ।।

यद्यस्य धनुषो रामः कुर्यादारोपणं मुने ।
सुतामयोनिजां सीतां दद्यां दाशरथेरहम् ।।

जनकस्य वचः श्रुत्वा विश्वामित्रो महामुनिः ।
धनुर्दर्शय रामाय इति होवाच पार्थिवम् ।।

वत्स राम धनुः पश्य इति राघवमब्रवीत् ।
लीलया स धनुर्मध्ये जग्राह वचनान्मुनेः ।।

आरोपयित्वा मौर्वीं च पूरयामास तद्धनुः ।
तद् बभञ्ज धनुर्मध्ये नरश्रेष्ठो महायशाः ।। 67.17

तस्य शब्दो महानासीन्निर्घातसमनिःस्वनः ।
भूमिकम्पश्च सुमहान् पर्वतस्येव दीर्यतः ।।

निपेतुश्च नराः सर्वे तेन शब्देन मोहिताः ।
वर्जयित्वा मुनिवरं राजानं तौ च राघवौ ।।

मम सत्या प्रतिज्ञा सा वीर्यशुल्केति कौशिक ।
सीता प्राणैर्बहुमता देया रामाय मे सुता ।।

भवतोऽनुमते ब्रह्मन् शीघ्रं गच्छन्तु मन्त्रिणः ।
मम कौशिक भद्रं ते अयोध्यां त्वरिता रथैः ।।

राजानं प्रश्रितैर्वाक्यैरानयन्तु पुरं मम ।
प्रदानं वीर्यशुल्कायाः कथयन्तु च सर्वशः ।।

कौशिकस्तु तथेत्याह राजा चाभाष्य मन्त्रिणः ।
अयोध्यां प्रेषयामास धर्मात्मा कृतशासनात् ।।
यथावृत्तं समाख्यातुमानेतुं च नृपं तथा ।।

जनकेन समादिष्टा दूतास्ते क्लान्तवाहनाः ।
त्रिरात्रमुषिता मार्गे तेऽयोध्यां प्राविशन्पुरीम् ।।

दूतवाक्यं तु तच्छ्रुत्वा राजा परमहर्षितः ।
वसिष्ठं वामदेवं च मन्त्रिणश्चैवमब्रवीत् ।।

दृष्टवीर्यस्तु काकुत्स्थो जनकेन महात्मना ।
सम्प्रदानं सुतायास्तु राघवे कर्तुमिच्छति ।।

यदि वो रोचते वृत्तं जनकस्य महात्मनः ।
पुरीं गच्छामहे शीघ्रं मा भूत् कालस्य पर्ययः ।। 68.17

मन्त्रिणो बाढमित्याहुः सह सर्वैर्महर्षिभिः ।
सुप्रीतश्चाब्रवीद् राजा श्वो यात्रेति च मन्त्रिणः ।।

गत्वा चतुरहं मार्गं विदेहानभ्युपेयिवान् ।
राजा च जनकः श्रीमान् श्रुत्वा पूजामकल्पयत् ।।

उवाच वचनं श्रेष्ठो नरश्रेष्ठं मुदान्वितम् ।
स्वागतं ते नरश्रेष्ठ दिष्ट्या प्राप्तोऽसि राघव ।।

यज्ञस्यान्ते नरश्रेष्ठ विवाहमृषिसत्तमैः ।
अथ रामो महातेजा लक्ष्मणेन समं ययौ ।।

विश्वामित्रं पुरस्कृत्य पितुः पादावुपस्पृशन् ।
राजा च राघवौ पुत्रौ निशाम्य परिहर्षितः ।।

उवास परमप्रीतो जनकेनाभिपूजितः ।
सबन्धुरगमत्तत्र जनको यत्र वर्तते ।
राजा च मन्त्रिसहितः सोपाध्यायः सबान्धवः ।।

वाक्यं वाक्यविदां श्रेष्ठो वैदेहमिदमब्रवीत् ।
आदिवंशविशुद्धानां राज्ञां परमधर्मिणाम् ।
इक्ष्वाकुकुलजातानां वीराणां सत्यवादिनाम् ।।

रामलक्ष्मणयोरर्थे त्वत्सुते वरये नृप ।
सदृशाभ्यां नरश्रेष्ठ सदृशे दातुमर्हसि ।।

सीतां रामाय भद्रं ते ऊर्मिलां लक्ष्मणाय वै ।
वीर्यशुल्कां मम सुतां सीतां सुरसुतोपमाम् ।। 71.21

द्वितीयामूर्मिलां चैव त्रिर्वदामि न संशयः ।
ददामि परमप्रीतो वध्वौ ते मुनिपुङ्गव ।।

मघा ह्यद्य महाबाहो तृतीयदिवसे प्रभो ।
फल्गुन्यामुत्तरे राजंस्तस्मिन् वैवाहिकं कुरु ।
रामलक्ष्मणयोरर्थे दानं कार्यं सुखोदयम् ।।

तमुक्तवन्तं वैदेहं विश्वामित्रो महामुनिः ।
उवाच वचनं वीरं वसिष्ठसहितो नृपम् ।।

अचिन्त्यान्यप्रमेयाणि कुलानि नरपुङ्गव ।
इक्ष्वाकूणां विदेहानां नैषां तुल्योऽस्ति कश्चन ।।

वक्तव्यं च नरश्रेष्ठ श्रूयतां वचनं मम ।
भ्राता यवीयान् धर्मज्ञ एष राजा कुशध्वजः ।।

भरतस्य कुमारस्य शत्रुघ्नस्य च धीमतः ।
वरये ते सुते राजंस्तयोरर्थे महात्मनोः ।।

कुलं धन्यमिदं मन्ये येषां तौ मुनिपुङ्गवौ ।
सदृशं कुलसम्बन्धं यदाज्ञापयतः स्वयम् ।।

एकाह्ना राजपुत्रीणां चतसृणां महामुने ।
पाणीन् गृह्णन्तु चत्वारो राजपुत्रा महाबलाः ।।

उत्तरे दिवसे ब्रह्मन् फल्गुनीभ्यां मनीषिणः ।
वैवाहिकं प्रशंसन्ति भगो यत्र प्रजापतिः ।।

युक्ते मुहूर्ते विजये सर्वाभरणभूषितैः ।
भ्रातृभिः सहितो रामः कृतकौतुकमङ्गलः ।। 73.9

वसिष्ठं पुरतः कृत्वा महर्षीनपरानपि ।
वसिष्ठो भगवानेत्य वैदेहमिदमब्रवीत् ।।

राजा दशरथो राजन्कृतकौतुकमङ्गलैः ।
पुत्रैर्नरवरश्रेष्ठो दातारमभिकाङ्क्षते ।।

दातृप्रतिग्रहीतृभ्यां सर्वार्थाः सम्भवन्ति हि ।
स्वधर्मे प्रतिपद्यस्व कृत्वा वैवाहमुत्तमम् ।।

कृतकौतुकसर्वस्वा वेदिमूलमुपागताः ।
मम कन्या मुनिश्रेष्ठ दीप्ता वह्नेरिवार्चिषः ।।

सद्योऽहं त्वत्प्रतीक्षोऽस्मि वेद्यामस्यां प्रतिष्ठितः ।
अविघ्नं क्रियतां सर्वे किमर्थं हि विलम्ब्यते ।।

तद्वाक्यं जनकेनोक्तं श्रुत्वा दशरथस्तदा ।
प्रवेशयामास सुतान् सर्वानृषिगणानपि ।।

ततो राजा विदेहानां वसिष्ठमिदमब्रवीत् ।
कारयस्व ऋषे सर्वामृषिभिः सह धार्मिक ।।

रामस्य लोकरामस्य क्रियां वैवाहिकीं प्रभो ।
तथेत्युक्त्वा तु जनकं वसिष्ठो भगवानृषिः ।।

अग्निमाधाय तं वेद्यां विधिमन्त्रपुरस्कृतम् ।
जुहावाग्नौ महातेजा वसिष्ठो मुनिपुङ्गवः ।।

ततः सीतां समानीय सर्वाभरणभूषिताम् ।
समक्षमग्नेः संस्थाप्य राघवाभिमुखे तदा ।। 73.25

अब्रवीज्जनको राजा कौसल्यानन्दवर्धनम् ।
इयं सीता मम सुता सहधर्मचरी तव ।।

प्रतीच्छ चैनां भद्रं ते पाणिं गृह्णीष्व पाणिना ।
पतिव्रता महाभागा छायेवानुगता सदा ।।

इत्युक्त्वा प्राक्षिपद् राजा मन्त्रपूतं जलं तदा ।
साधुसाध्विति देवानामृषीणां वदतां तदा ।।

देवदुन्दुभिनिर्घोषः पुष्पवर्षो महानभूत् ।
एवं दत्वा सुतां सीतां मन्त्रोदकपुरस्कृताम् ।।

अब्रवीज्जनको राजा हर्षेणाभिपरिप्लुतः ।
लक्ष्मणागच्छ भद्रं ते ऊर्मिलामुद्यतां मया ।।

तमेवमुक्त्वा जनको भरतं चाभ्यभाषत ।
गृहाण पाणिं माण्डव्याः पाणिना रघुनन्दन ।
शत्रुघ्नं चापि धर्मात्मा अब्रवीन्मिथिलेश्वरः ।।

श्रुतकीर्तेर्महाबाहो पाणिं गृह्णीष्व पाणिना ।
सर्वे भवन्तः सौम्याश्च सर्वे सुचरितव्रताः ।।

पत्नीभिः सन्तु काकुत्स्था मा भूत् कालस्य पर्ययः ।
जनकस्य वचः श्रुत्वा पाणीन् पाणिभिरस्पृशन् ।।

चत्वारस्ते चतसृणां वसिष्ठस्य मते स्थिताः ।
अग्निं प्रदक्षिणं कृत्वा वेदिं राजानमेव च ।।

ऋषींश्चापि महात्मानः सहभार्या रघूद्वहाः ।
यथोक्तेन ततश्चक्रुर्विवाहं विधिपूर्वकम् ।। 73.36

अथोपकार्यं जग्मुस्ते सभार्या रघुनन्दनः ।
राजाप्यनुययौ पश्यन् सर्षिसङ्घः सबान्धवः ।।

अथ रात्र्यां व्यतीतायां विश्वामित्रो महामुनिः ।
आपृष्ट्वा तौ च राजानौ जगामोत्तरपर्वतम् ।।

विश्वामित्रे गते राजा वैदेहं मिथिलाधिपम् ।
आपृष्ट्वैव जगामाशु राजा दशरथः पुरीम् ।।

गच्छन्तं तं नरव्याघ्रं सर्षिसङ्घं सराघवम् ।
घोरास्तु पक्षिणो वाचो व्याहरन्ति समन्ततः ।।

तमसा संवृतः सूर्यः सर्वे नावेदिषुर्दिशः ।
भस्मना चावृतं सर्वं सम्मूढमिव तद्बलम् ।
वसिष्ठ ऋषयश्चान्ये राजा च ससुतस्तदा ।।

ददर्श भीमसंकाशं.जटामण्डलधारिणम् ।
भार्गवं जामदग्न्येयं राजा राजविमर्दनम् ।।

स्कन्धे चासज्ज्य परशुं धनुर्विद्युद्गणोपमम् ।
प्रगृह्य शरमुग्रं च त्रिपुरघ्नं यथा शिवम् ।।

संगताः मुनयः सर्वे संजजल्पुरथो मिथः ।
पूर्वं क्षत्रवधं कृत्वा गतमन्युर्गतज्वरः ।
क्षत्रस्योत्सादनं भूयो न खल्वस्य चिकीर्षितम् ।।

एवमुक्त्वार्घ्यमादाय भार्गवं भीमदर्शनम् ।
ऋषयो रामरामेति मधुरं वाक्यमब्रुवन् ।। 74.23

प्रतिगृह्य तु तां पूजामृषिदत्तां प्रतापवान् ।
रामं दाशरथिं रामो जामदग्न्योऽभ्यभाषत ।।

राम दाशरथे वीर वीर्यं ते श्रूयतेऽद्भुतम् ।
धनुषो भेदनं चैव निखिलेन मया श्रुतम् ।।

तदिदं घोरसंकाशं जामदग्न्यं महद्धनुः ।
पूरयस्व शरेणैव स्वबलं दर्शयस्व च ।।

तदहं ते बलं दृष्ट्वा धनुषोऽप्यस्य पूरणे ।
द्वन्द्वयुद्धं प्रदास्यामि वीर्यश्लाघ्यमहं तव ।।

योजयस्व धनुःश्रेष्ठे शरं परपुरञ्जयम् ।
यदि शक्तोऽसि काकुत्स्थ द्वन्द्वं दास्यामि ते ततः ।।

आरोप्य स धनू रामः शरं सज्यं चकार ह ।
जामदग्न्यं ततो रामं रामः क्रुद्धोऽब्रवीदिदम् ।।

इमां वा त्वद्गतिं राम तपोबलसमार्जिताम् ।
लोकानप्रतिमान् वापि हनिष्यामीति मे मतिः ।।

न ह्ययं वैष्णवो दिव्यः शरः परपुरञ्जयः ।
मोघः पतति वीर्येण बलदर्पविनाशनः ।।

जडीकृते तदा लोके रामे वरधनुर्धरे ।
निर्वीर्यो जामदग्न्योऽसौ रामो राममुदैक्षत ।।

तेजोभिर्गतवीर्यत्वात् जामदग्न्यो जडीकृतः ।
रामं कमलपत्राक्षं मन्दं मन्दमुवाच ह ।। 76.12

अक्षय्यं मधुहन्तारं जानामि त्वां सुरेश्वरम् ।
धनुषोऽस्य परामर्शात् स्वस्ति तेऽस्तु परंतप ।।

शरमप्रतिमं राम मोक्तुमर्हसि सुव्रत ।
शरमोक्षे गमिष्यामि महेन्द्रं पर्वतोत्तमम् ।।

स हतान्दृश्य रामेण स्वाँल्लोकांस्तपसार्जितान् ।
जामदग्न्यो जगामाशु महेन्द्रं पर्वतोत्तमम् ।।

रेमिरे मुदिताः सर्वा भर्तृभिर्मुदिता रहः ।
कृतदाराः कृतास्त्राश्च सधनाः ससुहृज्जनाः ।।

शुश्रूषमाणाः पितरं वर्तयन्ति नरर्षभाः ।
कस्यचित्वथ कालस्य राजा दशरथः सुतम् ।।

त्वां नेतुमागतो वीरो युधाजिन्मातुलस्तव ।
श्रुत्वा दशरथस्यैतद् भरतः कैकयीसुतः ।।

गमनायाभिचक्राम शत्रुघ्नसहितस्तदा ।
आपृच्छ्य पितरं शूरो रामं चाक्लिष्टकारिणम् ।।

मातृश्चापि नरश्रेष्ठः शत्रुघ्नसहितो ययौ ।
गते तु भरते रामो लक्ष्मणश्च महाबलः ।।

पितरं देवसंकाशं पूजयामासतुस्तदा ।
पितुराज्ञां पुरस्कृत्य पौरकार्याणि सर्वशः ।।

चकार रामः सर्वाणि प्रियाणि च हितानि च ।
मातृभ्यो मातृकार्याणि कृत्वा परमयन्त्रितः ।। 77.22

स्वयंभूरिव भूतानां बभूव गुणवत्तरः ।
रामश्च सीतया सार्धं विजहार बहूनृतून् ।।

मनस्वो तद्गतमनास्तस्या हृदि समर्पितः ।
प्रिया तु सीता रामस्य दाराः पितृकृता इति ।
गुणाद्रूपगुणाच्चापि प्रीतिर्भूयोऽभिवर्धते ।।

।। इत्यार्षे श्रीमद् वाल्मीकिरामायणसंग्रहे
बालकाण्डम् सम्पूर्णम् ।।

## ।। अयोध्याकाण्डम् ।।

गच्छता मातुलकुलं भरतेन तदानघः ।
शत्रुघ्नो नित्यशत्रुघ्नः नीतः प्रीतिपुरस्कृतः ।।

स तत्र न्यवसद् भ्रात्रा सह सत्कार सत्कृतः ।
मातुलेनाश्वपतिना पुत्रस्नेहेन लालितः ।।

अथ राज्ञो बभूवैव वृद्धस्य चिरजीविनः ।
प्रीतिरेषा कथं रामो राजा स्यान्मयि जीवति ।।

तं समीक्ष्य तदा राजा युक्तं समुदितैर्गुणैः ।
निश्चित्य सचिवैः सार्धं यौवराज्यममन्यत ।।

ततः परिषदं सर्वामामन्त्र्य वसुधाधिपः ।
हितमुद्धर्षणं चैवमुवाच प्रथितं वचः ।।

विदितं भवतामेतद् यथा मे राज्यमुत्तमम् ।
पूर्वकैर्मम राजेन्द्रैः सुतवत् परिपालितम् ।।

प्राप्य वर्षसहस्राणि बहून्यायूंषि जीवतः ।
जीर्णस्यास्य शरीरस्य विश्रान्तिमभिरोचये ।।

सोऽहं विश्राममिच्छामि पुत्रं कृत्वा प्रजाहिते ।
संनिकृष्टानिमान् सर्वाननुमान्य द्विजर्षभान् ।।

अनुजातो हि मां सर्वैर्गुणैः श्रेष्टो ममात्मजः ।
पुरन्दरसमो वीर्ये रामः परपुरंजयः ।।

तं चन्द्रमिव पुष्येण युक्तं धर्मभृतां वरम् ।
यौवराज्ये नियोक्तास्मि प्रातः पुरुषपुङ्गवम् ।। 2.12

इति ब्रुवन्तं मुदिताः प्रत्यनन्दन् नृपा नृपम् ।
वृष्टिमन्तं महामेघं नर्दन्त इव बर्हिणः ।।

अनेकवर्षसाहस्रो वृद्धस्त्वमसि पार्थिव ।
स रामं युवराजानमभिषिञ्चस्व पार्थिवम् ।।

इति तद्वचनं श्रुत्वा राजा तेषां मनः प्रियम् ।
अजानन्निव जिज्ञासुरिदं वचनमब्रवीत् ।।

श्रुत्वैतद् वचनं यन्मे राघवं पतिमिच्छथ ।
राजानः संशयोऽयं मे तदिदं ब्रूत तत्त्वतः ।।

कथं नु मयि धर्मेण पृथिवीमनुशासति ।
भवन्तो द्रष्टुमिच्छन्ति युवराजं महाबलम् ।।

ते तमूचुर्महात्मानः पौरजानपदैः सह ।
बहवो नृप कल्याणगुणाः सन्ति सुतस्य ते ।।

देवासुरमनुष्याणां सर्वास्त्रेषु विशारदः ।
सम्यग्विद्या व्रतस्नातो यथावत्साङ्गवेदवित् ।।

स्मितपूर्वाभिभाषी च धर्मं सर्वात्मनाश्रितः ।
सम्यग्योक्ता श्रेयसां च न विगृह्यकथारुचिः ।।

रामो लोकाभिरामोऽयं शौर्यवीर्यपराक्रमैः ।
प्रजापालनसंयुक्तो न रागोपहतेन्द्रियः ।।

स्त्रियो वृद्धास्तरुण्यश्च सायं प्रातः समाहिताः ।
सर्वा देवान्नमस्यन्ति रामस्यार्थे मनस्विनः ।।
तेषां तद् याचितं देव त्वत्प्रसादात्समृद्ध्यताम् ।। 2.52

तं देवदेवोपममात्मजं ते सर्वस्य लोकस्य हिते निविष्टम्।
हिताय नः क्षिप्रमुदारजुष्टं मुदाभिषेक्तुं वरद त्वमर्हसि ।।

तेषामञ्जलिपद्मानि प्रगृहीतानि सर्वशः ।
प्रतिगृह्याब्रवीद् राजा तेभ्यः प्रियहितं वचः ।।

अहोऽस्मि परमप्रीतः प्रभावश्चातुलो मम ।
यन्मे ज्येष्ठं प्रियं पुत्रं यौवराज्यस्थमिच्छथ ।।

चैत्रः श्रीमानियं मासः पुष्यः पुष्पितकाननः ।
यौवराज्याय रामस्य सर्वमेवोपकल्प्यताम् ।।

वसिष्टं मुनिशार्दूलं राजा वचनमब्रवीत् ।
अभिषेकाय रामस्य यत्कर्म सपरिच्छदम् ।।

तदद्य भगवन् सर्वमाज्ञापयितुमर्हसि ।
तच्छ्रुत्वा भूमिपालस्य वसिष्ठो मुनिसत्तमः ।।

आदिदेशाग्रतो राज्ञः स्थितान् युक्तान् कृताञ्जलीन् ।
सुवर्णादीनि रत्नानि बलीन् सर्वौषधीरपि ।।

शुक्लमाल्यानि लाजांश्च पृथक्च मधुसर्पिषी ।
अहतानि च वासांसि रथं सर्वायुधान्यपि ।।

चतुरङ्गबलं चैव गजं च शुभलक्षणम् ।
चामरव्यजने चोभे ध्वजं छत्रं च पाण्डुरम् ।।

शतं च शातकुम्भानां कुम्भानामग्निवर्चसाम् ।
हिरण्यशृङ्गमृषभं समग्रं व्याघ्रचर्म च ।। 3.11

यच्चान्यत् किंचिदेष्टव्यम् तत्सर्वमुपकल्प्यताम् ।
उपस्थापयत प्रातरग्न्यगारे महीपतेः ।।

अन्तः पुरस्य द्वाराणि सर्वस्य नगरस्य च ।
चन्दनस्रग्भिः अर्च्यन्तां धूपैश्च घ्राणहारिभिः ।।

सूर्येऽभ्युदितमात्रे श्वो भविता स्वस्तिवाचनम् ।
ब्राह्मणाश्च निमन्त्र्यन्तां कल्प्यन्तामासनानि च ।।

यथोक्तवचनं प्रीतौ हर्षयुक्तौ द्विजोत्तमौ ।
ततः सुमन्त्रं द्युतिमान् राजा वचनमब्रवीत् ।।

रामः कृतात्मा भवता शीघ्रमानीयतामिति ।
तं दृष्ट्वा प्रणतं पार्श्वे कृताञ्जलिपुटं नृपः ।।

दिदेश राजा रुचिरं रामाय परमासनम् ।
तथाऽऽसनवरं प्राप्य व्यदीपयत राघवः ।।

उत्पन्नस्त्वं गुणज्येष्टो मम रामात्मजः प्रियः ।
त्वया यतः प्रजाश्चेमाः स्वगुणैरनुरञ्जिताः ।।

तस्मात्वं पुष्ययोगेन यौवराज्यमवाप्नुहि ।
कामतस्त्वं प्रकृत्यैव निर्णीतो गुणवानिति ।।

गुणवत्यपि तु स्नेहात् पुत्र वक्ष्यामि ते हितम् ।
भूयो विनयमास्थाय भव नित्यं जितेन्द्रियः ।।

इष्टानुरक्तप्रकृतिर्यः पालयति मेदिनीम् ।
तस्य नन्दन्ति मित्राणि लब्ध्वामृतमिवाऽमराः ।। 3.45

अथाऽभिवाद्य राजानं रथमारुह्य राघवः ।
ययौ स्वं द्युतिमद् वेश्म जनौघैः प्रतिपूजितः ।।

गतेष्वथ नृपो भूयः पौरेषु सह मन्त्रिभिः ।
मन्त्रयित्वा ततश्चक्रे निश्चयज्ञः स निश्चयम् ।।

अथान्तर्गृहमाविश्य राजा दशरथस्तदा ।
सूतमामन्त्रयामास रामं पुनरिहानय ।।

तमुवाच ततः सूतो राजा त्वां द्रष्टुमिच्छति ।
श्रुत्वा प्रमाणं तत्र त्वं गमनायेतराय वा ।।

प्रविशन्नेव च श्रीमान् राघवो भवनं पितुः ।
ददर्श पितरं दूरात् प्रणिपत्य कृताञ्जलिः ।।

प्रणमन्तं तमुत्थाप्य सम्परिष्वज्य भूमिपः ।
प्रदिश्य चासनं चास्मै रामं च पुनरब्रवीत् ।।

राम वृद्धोऽस्मि दीर्घायुर्भुक्ता भोगा यथेऽप्सिताः ।
अन्नवद्भिः क्रतुशतैर्यथेष्टं भूरिदक्षिणैः ।।

न किंचिन्मम कर्तव्यं तवान्यत्राभिषेचनात् ।
अतो यत्त्वामहं ब्रूयां तन्मे त्वं कर्तुमर्हसि ।।

अपि चाद्याशुभान् राम स्वप्नान् पश्यामि राघव ।
सनिर्घाता दिवोल्काश्च पतन्ति हि महास्वनाः ।।

प्रायेण च निमित्तानामीदृशानां समुद्भवे ।
राजा हि मृत्युमाप्नोति घोरां चापदमृच्छति ।। 4.19

तद् यावदेव मे चेतो न विमुह्यति राघव ।
तावदेवाभिषिञ्चस्व चला हि प्राणिनां मतिः ।।

तस्मात् त्वयाद्यप्रभृति निशेयं नियतात्मना।
सह वध्वोपवस्तव्या दर्भप्रस्तरशायिना।।

इत्युक्तः सोऽभ्यनुज्ञातः श्वोभाविन्यभिषेचने ।
तत्क्षणादेव निष्क्रम्य मातुरन्तःपुरं ययौ ।।

तत्र तां प्रवणामेव मातरं क्षौमवासिनीम् ।
वाग्यतां देवताऽगारे ददर्शायाचतीं श्रियम् ।।

प्रागेव चागता तत्र सुमित्रा लक्ष्मणस्तथा ।
सीता चानयिता श्रुत्वा प्रियं रामाभिषेचनम् ।।

तथा सनियमामेव सोऽभिगम्याभिवाद्य च ।
उवाच वचनं रामो हर्षयंस्तामिदं वरम् ।।

अम्ब पित्रा नियुक्तोऽस्मि प्रजापालनकर्मणि ।
भविता श्वोऽभिषेको मे यथा मे शासनं पितुः ।।

सीतायाप्युपवस्तव्या रजनीयं मया सह ।
एवमुक्तमुपाध्यायैः स हि मामुक्तवान्पिता ।।

यानि यान्यत्र योग्यानि श्वोभाविन्यभिषेचने ।
तानि मे मङ्गलान्यद्य वैदेह्याश्चैव कारय ।।

एतच्छ्रुत्वा तु कौसल्या चिरकालाभिकाङ्क्षितम् ।
हर्षबाष्पाकुलं वाक्यमिदं राममभाषत।। 4.38

कल्याणे बत नक्षत्रे मया जातोऽसि पुत्रक ।
येन त्वया दशरथो गुणैराराधितः पिता ।।

अमोघं बत मे क्षान्तं पुरुषे पुष्करेक्षणे ।
येयमिक्ष्वाकुराजश्रीः पुत्र त्वां संश्रयिष्यति ।।

इत्येवमुक्तो मात्रा तु रामो भ्रातरमब्रवीत् ।
प्राञ्जलिं प्रह्वमासीनमभिवीक्ष्य स्मयन्निव ।।

सौमित्रे भुङ्क्ष्व भोगांस्त्वमिष्टान् राज्यफलानि च ।
जीवितं चापि राज्यं च त्वदर्थमभिकामये ।।

इत्युक्त्वा लक्ष्मणं रामो मातरमभिवाद्य च ।
अभ्यनुज्ञाप्य सीतां च ययौ स्वं च निवेशनम् ।।

गते पुरोहिते रामः स्नातो नियतमानसः ।
सह पत्न्या विशालाक्ष्या नारायणमुपागमत् ।।

ततः पौरजनः सर्वः श्रुत्वा रामाभिषेचनम् ।
प्रभातां रजनीं दृष्ट्वा चक्रे शोभयितुं पुरीम् ।।

अनुद्धूतमना विद्वान् धर्मात्मा भ्रातृवत्सलः ।
यथा च भ्रातृषु स्निग्धस्तथास्मास्वपि राघवः ।।

एवंविधं कथयतां पौराणां शुश्रुवुः परे ।
दिग्भ्यो विश्रुतवृत्तान्ताः प्राप्ता जानपदा जनाः ।।

विदीर्यमाणा हर्षेण धात्री तु परया मुदा ।
आचचक्षेऽथ कुब्जायै भूयसीं राघवे श्रियम् ।। 7.10

श्वः पुष्येण जितक्रोधं यौवराज्येन चानघम् ।
राजा दशरथो राममभिषेक्ता हि राघवम् ।।

सा दह्यमाना क्रोधेन मन्थरा पापदर्शिनी ।
शयानामेव कैकेयीमिदं वचनमब्रवीत् ।।

अक्षयं सुमहद्देवि प्रवृत्तं त्वद्विनाशनम् ।
रामं दशरथो राजा यौवराज्येऽभिषेक्ष्यति ।।

तां दृष्ट्वा परमप्रीतां ब्रुवन्तीं मन्थरां ततः ।
रामस्यैव गुणान् देवी कैकेयी प्रशशंस ह ।।

धर्मज्ञो गुणवान् दान्तः कृतज्ञः सत्यवाञ्छुचिः ।
रामो राजसुतो ज्येष्ठो यौवराज्यमतोऽर्हति ।।

भ्रातॄन् भृत्यांश्च दीर्घायुः पितृवत्पालयिष्यति ।
संतप्यसे कथं कुब्जे श्रुत्वा रामाभिषेचनम् ।।

यथा वै भरतो मान्यस्तथा भूयोऽपि राघवः ।
कौसल्यातोऽतिरिक्तं च मम शुश्रूषते बहु ।।

कैकेय्या वचनं श्रुत्वा मन्थरा भृशदुःखिता ।
दीर्घमुष्णं विनिःश्वस्य कैकेयीमिदमब्रवीत् ।।

भविता राघवो राजा राघवस्य च यः सुतः ।
राजवंशात्तु भरतः कैकेयी परिहास्यते ।।

तस्माज्ज्येष्ठे हि कैकेयि राज्यतन्त्राणि पार्थिवाः ।
स्थापयन्त्यनवद्याङ्गि गुणवत्स्वितरेष्वपि ।। 8.24

गोप्ता हि रामं सौमित्रिर्लक्ष्मणं चापि राघवः ।
अश्विनोरिव सौभ्रात्रं तयोर्लोकेषु विश्रुतम् ।।

तस्मान्न लक्ष्मणो रामः पापं किंचित्करिष्यति ।
रामस्तु भरते पापं कुर्यादेव न संशयः ।।

तस्माद् राजगृहादेव वनं गच्छतु राघवः ।
एतद्धि रोचते मह्यं भृशं चापि हितं तव ।।

यदा हि रामः पृथिवीमवाप्स्यते ध्रुवं प्रणष्टो भरतो भविष्यति ।
अतो हि संचिन्तय राज्यमात्मजे परस्य चैवास्य विवासकारणम् ।।

एवमुक्ता तु कैकेयी क्रोधेन ज्वलितानना ।
दीर्घमुष्णं विनिःश्वस्य मन्थरामिदमब्रवीत् ।।

इदं त्विदानीं सम्पश्य केनोपायेन साधये ।
भरतः प्राप्नुयाद् राज्यं न तु रामः कथंचन ।।

एवमुक्ता तदा देव्या मन्थरा पापदर्शिनी ।
रामार्थमुपहिंसन्ती कैकेयीमिदमब्रवीत् ।।

पुरा देवासुरे युद्धे सह राजर्षिभिः पतिः ।
अगच्छत्त्वमुपादाय देवराजस्य साह्यकृत् ।।

अपवाह्य त्वया देवि संग्रामान्नष्टचेतनः ।
तत्रापि विक्षतः शस्त्रैः पतिस्ते रक्षितस्त्वया ।।

तुष्टेन तेन दत्तौ ते द्वौ वरौ शुभदर्शने ।
स त्वयोक्तः पतिर्देवि यदेच्छेयं तदा वरम् ।। 9.17

गृह्णीयां तु तदा भर्तस्तथेत्युक्तं महात्मना ।
अनभिज्ञा ह्यहं देवि त्वयैव कथितं पुरा ।।

तौ च याचस्व भर्तारं भरतस्याभिषेचनम् ।
प्रव्राजनं च रामस्य वर्षाणि च चतुर्दश ।।

चतुर्दश हि वर्षाणि रामे प्रव्राजिते वनम् ।
प्रजाभावगतस्नेहः स्थिरः पुत्रो भविष्यति ।।

तथा प्रोत्साहिता देवी गत्वा मन्थरया सह ।
क्रोधागारं विशालाक्षी सौभाग्यमदगर्विता ।।

उदीर्णसंरम्भतमोवृतानना तदावमुक्तोत्तममाल्यभूषणा ।
नरेन्द्रपत्नी विमना बभूव सा तमोवृता द्यौरिव मग्नतारका ।।

आज्ञाप्य तु महाराजो राघवस्याभिषेचनम् ।
प्रियार्हां प्रियमाख्यातुं विवेशान्तःपुरं वशी ।
स कैकेय्या गृहं श्रेष्ठं प्रविवेश महायशाः ।।

न च राजा गृहं शून्यं प्रविवेश कदाचन ।
ततो गृहगतो राजा कैकेयीं पर्यपृच्छत ।।

देव देवी भृशं क्रुद्धा क्रोधागारमभिद्रुता ।
प्रतीहार्या वचः श्रुत्वा राजा परमदुर्मनाः ।।

अपापः पापसंकल्पां ददर्श धरणीतले ।
लतामिव विनिष्कृत्तां पतितां देवतामिव ।।

किमायासेन ते भीरु उत्तिष्ठोत्तिष्ठ शोभने ।
तत्त्वं मे ब्रूहि कैकेयी यतस्ते भयमागतम् ।
तत् ते व्यपनयिष्यामि नीहारमिव रश्मिवान् ।। 10.39

तथोक्ता सा समाश्वस्ता वक्तुकामा तदप्रियम् ।
परिपीडयितुं भूयो भर्तारमुपचक्रमे ।।

तं मन्मथशरैर्विद्धं कामवेगवशानुगम् ।
उवाच पृथिवीपालं कैकेयी दारुणं वचः ।।

नास्मि विप्रकृता देव केनचिन्नावमानिता ।
अभिप्रायस्तु मे कश्चित् तमिच्छामि त्वया कृतम् ।।

प्रतिज्ञां प्रतिजानीष्व यदि त्वं कर्तुमिच्छति ।
अथ ते व्याहरिष्यामि यथाभिप्रार्थितं मया ।।

सत्यसंधो महातेजा धर्मज्ञः सत्यवाक्शुचिः ।
वरं मम ददात्येष सर्वे शृण्वन्तु दैवताः ।।

इति देवी महेष्वासं परिगृह्याभिशस्य च ।
ततःपरमुवाचेदं वरदं काममोहितम् ।।

स्मर राजन् पुरावृत्तं तस्मिन् देवासुरे रणे ।
तत्र त्वां च्यावच्छत्रुस्तव जीवितमन्तरा ।।

तत्र चापि मया देव यत्त्वं समभिरक्षितः ।
जाग्रत्या यतमानायास्ततो मे प्रददौ वरौ ।।

तौ दत्तौ च वरौ देव निक्षेपौ मृगयाम्यहम् ।
तवैव पृथिवीपाल सकाशे रघुनन्दन ।।

तत्प्रतिश्रुत्य धर्मेण न चेद् दास्यसि मे वरम् ।
अद्यैव हि प्रहास्यामि जीवितं त्वद्विमानिता ।। 11.21

तौ तावदहमद्यैव वक्ष्यामि शृणु मे वचः ।
अभिषेकसमारम्भो राघवस्योपकल्पितः ।।

अनेनैवाभिषेकेण भरतो मेऽभिषिच्यताम् ।
यो द्वितीयो वरो देव दत्तः प्रीतेन मे त्वया ।।

तदा देवासुरे युद्धे तस्य कालोऽयमागतः ।
नव पञ्च च वर्षाणि दण्डकारण्यमाश्रितः ।।

चीराजिनधरो धीरो रामो भवतु तापसः ।
भरतो भजतामद्य यौवराज्यमकण्टकम् ।।

ततः श्रुत्वा महाराजः कैकेय्या दारुणं वचः ।
चिन्तामभिसमापेदे मुहूर्तं प्रतताप च ।।

कैकेयीमब्रवीत् क्रुद्धो निर्दहन्निव तेजसा ।
नृशंसे दुष्टचारित्रे कुलस्यास्य विनाशिनि ।।

किं कृतं तव रामेण पापे पापं मयापि वा ।
सदा ते जननी तुल्यां वृत्तिं वहति राघवः ।।

अपश्यतस्तु मे रामं नष्टं भवति चेतनम् ।
तिष्ठेल्लोको विना सूर्यं सस्यं वा सलिलं विना ।।

सत्येन लोकाञ्जयति द्विजान् दानेन राघवः ।
गुरूञ्शुश्रूषया वीरो धनुषा युधि शात्रवान् ।।

तस्मिन्नार्जव सम्पन्ने देवि देवोपमे कथम् ।
पापमाशंशसे रामे महर्षिसमतेजसि ।। 12.31

मम वृद्धस्य कैकेयि गतान्तस्य तपस्विनः ।
दीनं लालप्यमानस्य कारुण्यं कर्तुमर्हसि ।।

अञ्जलिं कुर्मि कैकेयि पादौ चापि स्पृशामि ते ।
शरणं भव रामस्य मा धर्मो मामिह स्पृशेत् ।।

यदि सत्यं ब्रवीम्येतत् तदसत्यं भविष्यति ।
किं मां वक्ष्यति कौसल्या राघवे वनमास्थिते ।।

बालिशो बत कामात्मा राजा दशरथो भृशम् ।
स्त्रीकृते यः प्रियं पुत्रं वनं प्रस्थापयिष्यति ।।

इक्ष्वाकुकुलमक्षोभ्यमाकुलं पालयिष्यसि ।
प्रियं चेद् भरतस्यैतद् रामप्रव्राजनं भवेत् ।।
मा स्म मे भरतः कार्षीत्प्रेतकृत्यं गतायुषः ।।

पुत्रशोकार्दितं पापा विसंज्ञं पतितं भुवि ।
विचेष्टमानमुत्प्रेक्ष्य ऐक्ष्वाकमिदमब्रवीत् ।।

सत्यं समनुवर्तस्व यदि धर्मे धृता मतिः ।
स वरः सफलो मेऽस्तु वरदो ह्यसि सत्तम ।।
राजा प्रचोदितोऽभीक्ष्णं कैकेय्या वाक्यमब्रवीत् ।।

यस्ते मन्त्रकृतः प्राणिरग्नौ पापे मया धृतः ।
संत्यजामि स्वयं चैव तव पुत्रं सह त्वया ।।

धर्मबन्धेन बद्धोऽस्मि नष्टा च मम चेतना ।
ज्येष्ठं पुत्रं प्रियं रामं द्रष्टुमिच्छामि धार्मिकम् ।। 14.24

ततःप्रभातां रजनीमुदिते च दिवाकरे ।
पुष्ये नक्षत्रयोगे च मुहूर्ते च समागते ।।

वसिष्ठो गुणसम्पन्नः शिष्यैः परिवृतस्तथा ।
उपगृह्याशु सम्भारान् प्रविवेश पुरोत्तमम् ।।

स त्वपश्यद् विनिष्क्रान्तं सुमन्त्रं नाम सारथिम् ।
द्वारे मनुजसिंहस्य सचिवं प्रियदर्शनम् ।।

तमुवाच महातेजाः सूतपुत्रं विशारदम् ।
वसिष्ठः क्षिप्रमाचक्ष्व नृपतेर्मामिहागतम् ।।

इति तस्य वचः श्रुत्वा सूतपुत्रो महाबलः ।
स्तुवन् नृपतिशार्दूलं प्रविवेश निवेशनम् ।।

स्वयं वसिष्ठो भगवान् ब्राह्मणैः सह तिष्ठति ।
क्षिप्रमाज्ञाप्यतां राजन् राघवस्याभिषेचनम् ।।

अभ्यकीर्यत शोकेन भूय एव महीपतिः ।
ततस्तु राजा तं सूतं सन्नहर्षः सुतं प्रति ।।

शोकरक्तेक्षणः श्रीमानुद्वीक्ष्योवाच धार्मिकः ।
वाक्यैस्तु खलु मर्माणि मम भूयो निकृन्तसि ।।

सुमन्त्रः करुणं श्रुत्वा दृष्ट्वा दीनं च पार्थिवम् ।
प्रगृहीताञ्जलिः किंचित्तस्माद् देशादपाक्रमत् ।।

यदा वक्तुं स्वयं दैन्यान्न शशाक महीपतिः ।
तदा सुमन्त्रं मन्त्रज्ञा कैकेयी प्रत्युवाच ह ।। 14.61

तद् गच्छ त्वरितं सूत राजपुत्रं यशस्विनम् ।
राममानय भद्रं ते नात्र कार्या विचारणा ।।

अश्रुत्वा राजवचनं कथं गच्छामि भामिनि ।
तच्छ्रुत्वा मन्त्रिणो वाक्यं राजा मन्त्रिणमब्रवीत् ।।

सुमन्त्र रामं द्रक्ष्यामि शीघ्रमानय सुन्दरम् ।
स मन्यमानः कल्याणं हृदयेन ननन्द च ।।

ततः पुरस्तात् सहसा विनिःसृतो महीपतेर्द्वारगतान्विलोकयन् ।
ददर्श पौरान्विविधान्महाधनानुपस्थितान् द्वारमुपेत्य विष्ठितान् ।।

चन्द्रभास्करसंकाशं कुबेरभवनोपमम् ।
महेन्द्रधामप्रतिमं नानापक्षिसमाकुलम् ।।

मेरुश्रृङ्गसमं सूतो रामवेश्म ददर्श ह ।
उपस्थितैः समाकीर्णं जनैरञ्जलिकारिभिः ।।

ततोऽद्रिकूटाचलमेघसंनिभं महाविमानोपमवेश्मसंयुतम् ।
अवार्यमाणःप्रविवेश सारथिः प्रभूतरत्नं मकरो यथार्णवम् ।।

प्रतिवेदितमाज्ञाय सूतमभ्यन्तरं पितुः ।
तत्रैवानाययामास राघवः प्रियकाम्यया ।।

प्राञ्जलिःसुमुखं दृष्ट्वा विहारशयनासने ।
राजपुत्रमुवाचेदं सुमन्त्रो राजसत्कृतः ।।

कौसल्या सुप्रजा राम पिता त्वं द्रष्टुमिच्छति ।
महिष्यापि हि कैकेय्या गम्यतां तत्र मा चिरम् ।। 16.13

एवमुक्तस्तु संहृष्टो नरसिंहो महाद्युतिः ।
ततः सम्मानयामास सीतामिदमुवाच ह ।।

देवि देवश्च देवी च समागम्य मदन्तरे ।
मन्त्रयेते ध्रुवं किञ्चिदभिषेचनसंहितम् ।।

लक्षयित्त्वा ह्यभिप्रायं प्रियकामा सुदक्षिणा ।
संचोदयति राजानं मदर्थमसितेक्षणा ।।

हन्त शीघ्रमितो गत्वा द्रक्ष्यामि च महीपतिम् ।
सह त्वं परिवारेण सुखमास्स्व रमस्व च ।।

पति सम्मानिता सोता भर्तारमसितेक्षणा ।
आद्वारमनुवव्राज मङ्गलान्यभिदध्युषी ।।

अथ सीतामनुज्ञाप्य कृतकौतुकमङ्गलः ।
निश्चक्राम सुमन्त्रेण सह रामो निवेशनात् ।।

प्रययौ तूर्णमास्थाय राघवो ज्वलितः श्रिया ।
स पर्जन्य इवाकाशे स्वनवानभिनादयन् ।।

तत् पृथिव्यां गृहवरं महेन्द्रसदनोपमम् ।
राजपुत्रः पितुर्वेश्म प्रविवेश श्रिया ज्वलन् ।।

स सर्वाः समतिक्रम्य कक्ष्या दशरथात्मजः ।
संनिवर्त्य जनं सर्वं शुद्धान्तःपुरमत्यगात् ।।

स पितुश्चरणौ पूर्वमभिवाद्य विनीतवत् ।
ततो ववन्दे चरणौ कैकेय्याः सुसमाहितः ।। 18.2

तदपूर्वं नरपतेर्दृष्ट्वा रूपं भयावहम् ।
रामोऽपि भयमापन्नः पदास्पृष्ट्वेव पन्नगम् ।।

स दीन इव शोकार्तो विषण्णवदनद्युतिः ।
कैकेयीमभिवाद्यैव रामो वचनमब्रवीत् ।।

कच्चिन्मया नापराद्धमज्ञानाद् येन मे पिता ।
कुपितस्तन्ममाचक्ष्व त्वमेवैनं प्रसादय ।।

एतदाचक्ष्व मे देवि तत्त्वेन परिपृच्छतः ।
किंनिमित्तमपूर्वोऽयं विकारो मनुजाधिपे ।।

एष मह्यं वरं दत्वा पुरा मामभिपूज्य च ।
स पश्चात्तप्यते राजा यथाऽन्यः प्राकृतस्तथा ।।

एतत् तु वचनं श्रुत्वा कैकेय्या समुदाहतम् ।
उवाच व्यथितो रामस्तां देवीं नृपसन्निधौ ।।

यदि त्वभिहितं राज्ञा त्वयि तन्न विपत्स्यते ।
ततोऽहमभिधास्यामि न ह्येष त्वयि वक्ष्यति ।।

तद्ब्रूहि वचनं देवि राज्ञो यदभिकाङ्क्षितम् ।
करिष्ये प्रतिजाने च रामो द्विर्नाभिभाषते ।।

तमार्जवसमायुक्तमनार्या सत्यवादिनम् ।
उवाच रामं कैकेयी वचनं भृशदारुणम् ।।

यदि सत्यप्रतिज्ञं त्वं पितरं कर्तुमिच्छसि ।
आत्मानं च नरश्रेष्ठ मम वाक्यमिदं शृणु ।। 18.34

संनिदेशे पितुस्तिष्ठ यथानेन प्रतिश्रुतम् ।
त्वयारण्यं प्रवेष्टव्यं नव वर्षाणि पञ्च च ।।

भरतश्चाभिषिच्येत यदेतदभिषेचनम् ।
त्वदर्थे विहितं राज्ञा तेन सर्वेण राघव ।।

एतत्कुरु नरेन्द्रस्य वचनं रघुनन्दन ।
सत्येन महता राम तारयस्व नरेश्वरम् ।।

व्रीडान्वितः स्वयं यच्च नृपस्त्वां नाभिभाषते ।
नैतत्किञ्चिन्नरश्रेष्ठ मन्युरेषोऽपनीयताम् ।।

धिक्कष्टमिति निःश्वस्य राजा शोकपरिप्लुतः ।
मूर्च्छितो न्यपतत्तस्मिन् पर्यङ्के हेमभूषिते ।।

तदप्रियमनार्याया वचनं दारुणोदयम् ।
श्रुत्वा गतव्यथो रामः कैकेयीं वाक्यमब्रवीत् ।।

नाहमर्थपरो देवि लोकमावस्तुमुत्सहे ।
विद्धि मामृषिभिस्तुल्यं विमलं धर्ममास्थितम् ।।

यावन्मातरमापृच्छे सीतां चानुनयाम्यहम् ।
ततोऽद्यैव गमिष्यामि दण्डकानां महद्वनम् ।।

भरतः पालयेद्राज्यं शुश्रूषेच्च पितुर्यथा ।
तथा भवत्या कर्तव्यं स हि धर्मः सनातनः ।।

स रामः पितरं कृत्वा कैकेयीं च प्रदक्षिणम् ।
निष्क्राम्यन्तःपुरात्तस्मात् स्वं ददर्श सुहृज्जनम् ।। 19.29

अभिषेचनिकं भाण्डं कृत्वा रामः प्रदक्षिणम् ।
शनैर्जगाम सापेक्षो दृष्टिं तत्राविचालयन् ।।

सर्वोऽपि अभिजनः श्रीमान् श्रीमतः सत्यवादिनः ।
नालक्षयत रामस्य कञ्चिदाकारमानने ।।

वाचा मधुरया रामः सर्वं सम्मानयज्जनम् ।
मातुः समीपं धर्मात्मा प्रविवेश महायशाः ।।

तं गुणैः समतां प्राप्तो भ्राता विपुलविक्रमः ।
सौमित्रिरनुवव्राज धारयन् दुःखमात्मजम् ।।

कौसल्यापि तदा देवी रात्रिं स्थित्वा समाहिता ।
प्रभाते चाकरोत्पूजां विष्णोः पुत्रहितैषिणी ।।

प्रविश्य तु तदा रामो मातुरन्तःपुरं शुभम् ।
ददर्श मातरं तत्र हावयन्तीं हुताशनम् ।।

तां शुक्लक्षौमसंवीतां व्रतयोगेन कर्शिताम् ।
तर्पयन्तीं ददर्शाद्भिर्देवतां वरवर्णिनीम् ।।

दत्तमासनमालभ्य भोजनेन निमन्त्रितः ।
मातरं राघवः किञ्चित् प्रसार्याञ्जलिमब्रवीत् ।।

देवि नूनं न जानीषे महद् भयमुपस्थितम् ।
इदं तव च दुःखाय वैदेह्या लक्ष्मणस्य च ।।

गमिष्ये दण्डकारण्यं किमनेनासनेन मे ।
विष्टरासनयोग्यो हि कालोऽयं मामुपस्थितः ।। 20.28

चतुर्दश हि वर्षाणि वत्स्यामि विजने वने ।
भरताय महाराजो यौवराज्यं प्रयच्छति ।।

सा निकृत्तेव सालस्य यष्टिः परशुना वने ।
पपात सहसा देवी देवतेव दिवश्च्युता ।।

तामदुःखोचितां दृष्ट्वा पतितां कदलीमिव ।
रामस्तूत्थापयामास मातरं गतचेतसम् ।।

विलपन्तीं तथा दीनां कौसल्यां जननीं ततः ।
उवाच रामो धर्मात्मा वचनं धर्मसंहितम् ।।

नास्ति शक्तिः पितुर्वाक्यं समतिक्रमितुं मम ।
प्रसादये त्वां शिरसा गन्तुमिच्छाम्यहं वनम् ।।

अस्माकं तु कुले पूर्वं सगरस्याज्ञया पितुः ।
खनद्भिः सागरैर्भूमिमवाप्तः सुमहान् वधः ।।

एतैरन्यैश्च बहुभिर्देवि देवसमैः कृतम् ।
पितुर्वचनमक्लीबं करिष्यामि पितुर्हितम् ।।

तामेवमुक्त्वा जननीं लक्ष्मणं पुनरब्रवीत् ।
वाक्यं वाक्यविदां श्रेष्ठः श्रेष्ठः सर्वधनुष्मताम् ।।

तव लक्ष्मण जानामि मयि स्नेहमनुत्तमम् ।
विक्रमं चैव सत्त्वं च तेजश्च सुदुरासदम् ।।

धर्मो हि परमो लोके धर्मे सत्यं प्रतिष्ठितम् ।
धर्मसंश्रितमप्येतत्पितुर्वचनमुत्तमम् ।। 21.41

तमेवमुक्त्वा सौहार्दाद् भ्रातरं लक्ष्मणाग्रजः ।
उवाच भूयः कौसल्यां प्राञ्जलिः शिरसा नतः ।।

अनुमन्यस्व मां देवि गमिष्यन्तमितो वनम् ।
शापितासि मम प्राणैः कुरु स्वस्त्ययनानि मे ।।

तीर्णप्रतिज्ञश्च वनात् पुनरेष्याम्यहं पुरीम् ।
ययातिरिव राजर्षिः पुरा हित्वा पुनर्दिवम् ।।

त्वया मया च वैदेह्या लक्ष्मणेन सुमित्रया ।
पितुर्नियोगे स्थातव्यमेष धर्मः सनातनः ।।

मम प्रव्राजनादद्य कृतकृत्या नृपात्मजा ।
सुतं भरतमव्यग्रमभिषेचयतां ततः ।।

एभिरेव घटैः सर्वैरभिषेचनसम्भृतैः ।
मम लक्ष्मण तापस्ये व्रतस्नानं भविष्यति ।।

मा च लक्ष्मण संतापं कार्षीर्लक्ष्म्या विपर्यये ।
राज्यं वा वनवासो वा वनवासो महोदयः ।।

तं समीक्ष्य व्यवसितं पितुर्निर्देशपालने ।
कौसल्या बाष्पसंरुद्धा वचो धर्मिष्टमब्रवीत् ।।

कथं हि धेनुः स्वं वत्सं गच्छन्तमनुगच्छति ।
अहं त्वानुगमिष्यामि यत्र वत्स गमिष्यसि ।।

यावज्जीवति काकुत्स्थः पिता मे जगतीपतिः ।
शुश्रूषा क्रियतां तावत् स हि धर्मः सनातनः ।। 24.13

एवमुक्ता तु रामेण कौसल्या शुभदर्शना ।
तथेत्युवाच सुप्रीता राममक्लिष्टकारिणम् ।।

मया चैव भवत्या च कर्तव्यं वचनं पितुः ।
राजा भर्ता गुरुः श्रेष्टः सर्वेषामीश्वरःप्रभुः ।।

कौसल्या पुत्रशोकार्ता रामं वचनमब्रवीत् ।
गमने सुकृतां बुद्धिं न ते शक्नोमि पुत्रक ।।

विनिवर्तयितुं वीर नूनं कालो दुरत्ययः ।
गच्छ पुत्र त्वमेकाग्रो भद्रं तेऽस्तु सदा विभो ।।

तथा हि रामं वनवासनिश्चितं ददर्श देवी परमेण चेतसा ।
उवाच रामं शुभलक्षणं वचो बभूव च स्वस्त्ययनाभिकाङ्क्षिणी ।।

दिनानि च मुहूर्ताश्च स्वस्ति कुर्वन्तु ते सदा ।
श्रुतिः स्मृतिश्च धर्मश्च पातु त्वां पुत्र सर्वतः ।।

इति माल्यैः सुरगणान् गन्धैश्चापि यशस्विनी ।
स्तुतिभिश्चानुरूपाभिरानर्चायतलोचना ।।

तथा हि देव्या च कृतप्रदक्षिणो निपीड्य मातुश्चरणौ पुनः पुनः ।
जगाम सीतानिलयं महायशाः स राघवः प्रज्वलितस्तया श्रिया ।।

वैदेही चापि तत्सर्वं न शुश्राव तपस्विनी ।
तदेव हृदि तस्याश्च यौवराज्याभिषेचनम् ।।

प्रविवेशाथ रामस्तु स्ववेश्म सुविभूषितम् ।
प्रहृष्टजनसंपूर्णं ह्रिया किंचिदवाङ्मुखः ।। 26.5

तां दृष्ट्वा स हि धर्मात्मा न शशाक मनोगतम् ।
तं शोकं राघवः सोढुं ततो विवृततां गतः ।।

अभिषेको यदा सज्जः किमिदानीमिदं तव ।
अपूर्वो मुखवर्णश्चन प्रहर्षश्च लक्ष्यते ।।

इतीव विलपन्तीं तां प्रोवाच रघुनन्दनः ।
सीते तत्र भवांस्तातः प्रव्राजयति मां वनम् ।।

चतुर्दश हि वर्षाणि वस्तव्यं दण्डके मया ।
पित्रा मे भरतश्चापि यौवराज्ये नियोजितः ।।

याते च मयि कल्याणि वनं मुनि निषेवितम् ।
व्रतोपवासपरया भवितव्यं त्वयाऽनघे ।।

एवमुक्ता तु वैदेही प्रियार्हा प्रियवादिनी ।
प्रणयादेव संक्रुद्धा भर्तारमिदमब्रवीत् ।।

भक्तां पतिव्रतां दीनां मां समां सुखदुःखयोः ।
नेतुं अर्हसि काकुत्स्थ समानसुखदुःखिनीम् ।।

आर्यपुत्र पिता माता भ्राता पुत्रस्तथा स्नुषा ।
स्वानि पुण्यानि भुञ्जानाः स्वं स्वं भाग्यमुपासते ।।

भर्तुर्भाग्यं तु नार्येका प्राप्नोति पुरुषर्षभ ।
अतश्चैवाहमादिष्टा वने वस्तव्यमित्यपि ।।

सुखं वने निवत्स्यामि यथैव भवने पितुः ।
अचिन्तयन्ती त्रींल्लोकांश्चिन्तयन्ती पतिव्रतम् ।। 27.12



भक्तां पतिव्रतां दीनां मां समां सुखदुःखयोः ।
नेतुमर्हसि काकुत्स्थ समानसुखदुःखिनीम् ॥

त्वं हि कर्तुं वने शक्तो राम सम्परिपालनम् ।
अन्यस्यापि जनस्येह किं पुनर्मम मानद ।।

अग्रतस्ते गमिष्यामि भोक्ष्ये भुक्तवति त्वयि ।
इच्छामि परतः शैलान् पल्वलानि सरांसि च ।।

स एवं ब्रुवतीं सीतां धर्मज्ञां धर्मवत्सल : ।
न नेतुं कुरुते बुद्धिं वने दुःखानि चिन्तयन् ।।

सान्त्वयित्वा ततस्तां तु बाष्पदूषितलोचनाम् ।
निवर्तनार्थे धर्मात्मा वाक्यमेतदुवाच ह ।।

अहोरात्रं च संतोषः कर्तव्यो नियतात्मना ।
फलैवृक्षावपतितैः सीते दुःखमतो वनम् ।।

कार्यस्त्रिरभिषेकश्च काले काले च नित्यशः ।
चरतां नियमेनैव तस्माद् दुःखतरं वनम् ।।

वनं तु नेतुं न कृता मतिर्यदा बभूव रामेण तदा महात्मना ।
न तस्य सीता वचनं चकार तं ततोऽब्रवीद् राममिदं सुदुःखिता ।।

अथाऽपि चं महाप्राज्ञ ब्राह्मणानां मया श्रुतम् ।
पुरा पितृगृहे सत्यं वस्तव्यं किल मे वने ।।

एवमुक्ता तु सा चिन्तां मैथिली समुपागता ।
स्नापयन्तीव गामुष्णैरश्रुभिर्नयनच्युतैः ।।

चिन्तयन्तीं तदा तां तु निवर्तयितुमात्मवान् ।
क्रोधाविष्टां तु वैदेहीं काकुत्स्थो बह्वसान्त्वयत् ।। 29.24

न देवि बत दुःखेन स्वर्गमप्यभिरोचये ।
न हि मेऽस्ति भयं किंचित् स्वयम्भोरिव सर्वतः ।।

आरभस्व शुभश्रोणि वनवासक्षमाः क्रियाः ।
नेदानीं त्वदृते सीते स्वर्गोऽपि मम रोचते ।।

भूषणानि महार्हाणि वरवस्त्राणि यानि च ।
रमणीयाश्च ये केचित् क्रीडार्थाश्चाप्युपस्कराः ।।

शयनीयानि यानानि मम चान्यानि यानि च ।
देहि स्वभृत्यवर्गस्य ब्राह्मणानामनन्तरम् ।।

ततः प्रहृष्टा प्रतिपूर्णमानसा यशस्विनी भर्तुरवेक्ष्य भाषितम् ।
धनानि रत्नानि च दातुमङ्गना प्रचक्रमे धर्मभृतां मनस्विनी ।।

एवं श्रुत्वा स संवादं लक्ष्मणः पूर्वमागतः ।
बाष्पपर्याकुलमुखः शोकं सोढुमशक्नुवन् ।।

स भ्रातुश्चरणौ गाढं निपीड्य रघुनन्दनः ।
सीतामुवाच अतियशां राघवं च महाव्रतम् ।।

यदि गन्तुं कृता बुद्धिर्वनं मृगगजायुतम् ।
अहं त्वानुगमिष्यामि वनमग्रे धनुर्धरः ।।

न देवलोकाक्रमणं नामरत्वमहं वृणे ।
ऐश्वर्यं चापि लोकानां कामये न त्वया विना ।।

ततोऽब्रवीन्महातेजा रामो लक्ष्मणमग्रतः ।
स्थितं प्राग्गामिनं धीरं याचमानं कृताञ्जलिम् ।। 31.9

मयाद्य सह सौमित्रे त्वयि गच्छति तद्वनम् ।
को भजिष्यति कौसल्यां सुमित्रां वा यशस्विनीम् ।।

एवमुक्तस्तु रामेण लक्ष्मणः श्लक्ष्णया गिरा ।
प्रत्युवाच तदा रामं वाक्यज्ञो वाक्यकोविदम् ।।

कौसल्या बिभृयादार्या सहस्रं मद्विधानपि ।
यस्याः सहस्रं ग्रामाणां सम्प्राप्तमुपजीविनाम् ।।

कुरुष्व मामनुचरं वैधर्म्यं नेह विद्यते ।
कृतार्थोऽहं भविष्यामि तव चार्थः प्रकल्प्यते ।।

रामस्त्वनेन वाक्येन सुप्रीतः प्रत्युवाच तम् ।
व्रजापृच्छस्व सौमित्रे सर्वमेव सुहृज्जनम् ।।

सत्कृत्य निहितं सर्वमेतदाचार्यसद्मनि ।
सर्वमायुधमादाय क्षिप्रमाव्रज लक्ष्मण ।।

तद् दिव्यं राजशार्दूलः सत्कृतं माल्यभूषितम् ।
रामाय दर्शयामास सौमित्रिः सर्वमायुधम् ।।

स चापि रामः प्रतिपूर्णपौरुषो महाधनं धर्मबलैरुपार्जितम् ।
नियोजयामास सुहृज्जने चिराद् यथार्हसम्मानवचः प्रचोदितः ।।

दत्वा तु सह वैदेह्या ब्राह्मणेभ्यो धनं बहु ।
जग्मतुः पितरं द्रष्टुं सीतया सह राघवौ ।।

पदातिं सानुजं दृष्ट्वा ससीतं च जनास्तदा ।
ऊचुर्बहुजना वाचः शोकोपहतचेतसः ।। 33.5

या न शक्या पुरा द्रष्टुं भूतैराकाशगैरपि ।
तामद्य सीतां पश्यन्ति राजमार्गगता जनाः ।।

वनं नगरमेवास्तु येन गच्छति राघवः ।
अस्माभिश्च परित्यक्तं पुरं सम्पद्यतां वनम् ।।

प्रपद्यतां हि कैकेयी सपुत्रा सह बान्धवैः ।
राघवेण वयं सर्वे वनेवत्स्याम निर्वृताः ।।

विनीतवीरपुरुषं प्रविश्य तु नृपालयम् ।
ददर्शावस्थितं दीनं सुमन्त्रमविदूरतः ।।

पितुर्निदेशेन तु धर्मवत्सलो वनप्रवेशे कृतबुद्धिनिश्चयः ।
स राघवः प्रेक्ष्य सुमन्त्रमब्रवीत् विवेदयस्वागमनं नृपाय मे ।।

सोऽभिदुद्राव वेगेन रामं दृष्ट्वा विशाम्पतिः ।
तमसम्प्राप्य दुःखार्तः पपात भुवि मूर्च्छितः ।।

अथ रामो मुहूर्तस्य लब्धसंज्ञं महीपतिम् ।
उवाच प्राञ्जलिर्बाष्पशोकार्णवपरिप्लुतम् ।।

अनुजानीहि सर्वान्नः शोकमुत्सृज्य मानद ।
लक्ष्मणं मां च सीतां च प्रजापतिरिवात्मजान् ।।

प्रतीक्षमाणमव्यग्रमनुज्ञां जगतीपतेः ।
उवाच राजा सम्प्रेक्ष्य वनवासाय राघवम् ।।

दुष्करं क्रियते पुत्र सर्वथा राघव प्रिय ।
त्वया हि मत्प्रियार्थं तु वनमेवमुपाश्रितम् ।। 34.35

अथ रामस्तदा श्रुत्वा पितुरार्तस्य भाषितम् ।
लक्ष्मणेन सह भ्रात्रा दीनो वचनमब्रवीत् ।।

इयं सराष्ट्रा सजना धनधान्यसमाकुला ।
मया विसृष्टा वसुधा भरताय प्रदीयताम् ।।

दीयतां निखिलेनैव सत्यस्त्वं भव पार्थिव ।
अहं निदेशं भवतो यथोक्तमनुपालयन् ।।

फलानि मूलानि च भक्षयन्वने गिरींश्च पश्यन्सरितः सरांसि च ।
वनं प्रविश्यैव विचित्रपादपं सुखी भविष्यामि तवास्तु निर्वृतिः ।।

एवं स राजा व्यसनाभिपन्नस्तापेन दुःखेन च पीड्यमानः ।
आलिङ्ग्य पुत्रं सुविनष्टसंज्ञो भूमिं गतो नैव चिचेष्ट किञ्चित् ।।

देव्यः समस्ता रुरुदुः समेतास्तां वर्जयित्वा नरदेवपत्नीम् ।
रुदन्सुमन्त्रोऽपि जगाम मूर्च्छां हाहाकृतं तत्र बभूव सर्वम् ।।

अथ चीराणि कैकेयी स्वयमाहृत्य राघवम् ।
उवाच परिधत्स्वेति जनौघे निरपत्रपा ।।

स चीरे पुरुषव्याघ्रः कैकेय्याः प्रतिगृह्य ते ।
सूक्ष्मवस्त्रमवक्षिप्य मुनिवस्त्राण्यवस्त ह ।।

लक्ष्मणश्चापि तत्रैव विहाय वसने शुभे ।
तापसाच्छादने चैव जग्राह पितुरग्रतः ।।

अथात्मपरिधानार्थं सीता कौशेयवासिनि ।
सम्प्रेक्ष्य चीरं संत्रस्ता पृषती वागुरामिव ।। 37.9

कथं नु चीरं बध्नन्ति मुनयो वनवासिनः ।
इति ह्यकुशला सीता सा मुमोह मुहुर्मुहुः ।।

तस्यास्तत्क्षिप्रमागत्य रामो धर्मभृतां वरः ।
चीरं बबन्ध सीतायाः कौशेयस्योपरि स्वयम् ।।

तस्यां चीरं वसानायां नाथवत्यामनाथवत् ।
प्रचुक्रोश जनः सर्वो धिक् दशरथं त्विति ।।

तेन तत्र प्रणादेन दुःखितः स महीपतिः ।
चिच्छेद जीविते श्रद्धां धर्मे यशसि चात्मनः ।।

स निःश्वस्योष्णमैक्ष्वाकस्तां भार्यामिदमब्रवीत् ।
कैकेयी कुशचीरेण न सीता गन्तुमर्हति ।।

संज्ञां तु प्रतिलभ्यैव मुहूर्तात्स महीपतिः ।
नेत्राभ्यामश्रुपूर्णाभ्यां सुमन्त्रमिदमब्रवीत् ।।

वासांसि च वरार्हाणि भूषणानि महान्ति च ।
वर्षाण्येतानि संख्याय वैदेह्याः क्षिप्रमानय ।।

नरेन्द्रेणैवमुक्तस्तु गत्वा कोशगृहं ततः ।
प्रायच्छत्सर्वमाहृत्य सीतायै क्षिप्रमेव तत् ।।

अथ रामश्च सीता च लक्ष्मणश्च कृताञ्जलिः ।
उपसङ्गृह्य राजानं चक्रुर्दीनाः प्रदक्षिणम् ।।

अन्वक्षं लक्ष्मणो भ्रातुः कौसल्यामभ्यवादयत् ।
अपि मातुः सुमित्राया जग्राह चरणौ पुनः ।। 40.3



तस्यास्तत् क्षिप्रमागम्य रामो धर्मभृतां वरः ।
चीरं बबन्ध सीतायाः कौशेयस्योपरि स्वयम् ॥

तं वन्दमानं रुदती माता सौमित्रिमब्रवीत् ।
सृष्टस्त्वं वनवासाय स्वनुरक्तः सुहृज्जने ।
रामे प्रमादं मा कार्षीः पुत्र भ्रातरि गच्छति ।।

रामं दशरथं विद्धि मां विद्धि जनकात्मजाम् ।
अयोध्यामटवीं विद्धि गच्छ तात यथासुखम् ।।

ततःसुमन्त्रः काकुत्स्थं प्राञ्जलिर्वाक्यमब्रवीत् ।
विनीतो विनयज्ञश्च मातलिर्वासवं यथा ।।

रथमारोह भद्रं ते राजपुत्र महायशः ।
क्षिप्र त्वां प्रापयिष्यामि यत्र मां राम वक्ष्यसे ।।

ततः सबालवृद्धा सा पुरी परमपीडिता ।
राममेवाभिदुद्राव धर्मार्तः सलिलं यथा ।।

पिता हि राजा काकुत्स्थः श्रीमान् सन्नस्तदा बभौ ।
परिपूर्णः शशी काले ग्रहेणोपप्लुतो यथा ।।

कैकेयि मामकाङ्गानि मा स्प्राक्षीः पापनिश्चये ।
न हि त्वां द्रष्टुमिच्छामि न भार्या न च बान्धवी ।।

कौसल्याया गृहं शीघ्रं राममातुर्नयन्तु माम् ।
न ह्यन्यत्र ममाश्वासो हृदयस्य भविष्यति ।।

इति ब्रुवन्तं राजानमनयन्द्वारदर्शिनः ।
कौसल्याया गृहं तत्र न्यवेश्यत विनीतवत् ।।

तच्च दृष्ट्वा महाराजो भुजमुद्यम्य वीर्यवान् ।
उच्चैः स्वरेण प्राक्रोशद्धाराम विजहासि नौ ।। 42.31

न त्वां पश्यामि कौसल्ये साधु मां पाणिना स्पृश ।
रामं मेऽनुगता दृष्टिरद्यापि न निवर्तते ।।

ततःसमीक्ष्य शयने सन्नं शोकेन पार्थिवम् ।
कौसल्या पुत्रशोकार्ता तमुवाच महीपतिम् ।।

अपीदानीं स कालः स्यान् मम शोकक्षयः शिवः ।
सह भार्यं सह भ्रात्रा पश्येयमिह राघवम् ।।

न हि तावत गुणैर्जुष्टं सर्वशास्त्रविशारदम् ।
एकपुत्रा विना पुत्रमहं जीवितुमुत्सहे ।।

विलपन्तीं तथा तां तु कौसल्यां प्रमदोत्तमाम् ।
इदं धर्मे स्थिता धर्म्यं सुमित्रा वाक्यमब्रवीत् ।।

शिष्टैराचरिते सम्यक् शश्वत् प्रेत्य फलोदये ।
रामो धर्मे स्थितः श्रेष्टो न स शोच्यः कदाचन ।।

अरण्यवासे यद्दुःखं जानन्त्येव सुखोचिता ।
अनुगच्छति वैदेही धर्मात्मानं तवात्मजम् ।।

धनुर्ग्रहवरो यस्य बाणखड्गास्त्र भृत्स्वयम् ।
लक्ष्मणो व्रजति ह्यग्रे तस्य किं नाम दुर्लभम् ।।

आश्वासयन्ती विविधैश्च वाक्यैर्वाक्योपचारे कुशलानवद्या ।
रामस्य तां मातरमेवमुक्त्वा देवी सुमित्रा विरराम रामा ।।

निशम्य तल्लक्ष्मणमातृवाक्यं रामस्य मातुर्नरदेवपत्न्याः ।
सद्यः शरीरे विननाश शोकः शरद्गतो मेघ इवाल्पतोयः ।। 44.31

अनुरक्ता महात्मानं रामं सत्यपराक्रमम् ।
अनुजग्मुः प्रयान्तं तं वनवासाय मानवाः ।।

एवमार्तप्रलापास्तान् वृद्धान्प्रलपतो द्विजान् ।
अवेक्ष्य सहसा रामो रथादवततार ह ।।

पद्भ्यामेव जगामाथ ससीतः सहलक्ष्मणः ।
संनिकृष्टपदन्यासो रामो वनपरायणः ।।

ततःसुमन्त्रोऽपि रथाद् विमुच्य श्रान्तान्हयान्सम्परिवर्त्य शीघ्रम् ।
पीतोदकांस्तोयपरिप्लुताङ्गान् अचारयद् वै तमसाविदूरे ।।

ततस्तु तमसातीरं रम्यमाश्रित्य राघवः ।
सीतामुद्वीक्ष्य सौमित्रिमिदं वचनमब्रवीत् ।।

त्वया कार्यं नरव्याघ्र मामनुव्रजता कृतम् ।
अन्वेष्टव्या हि वैदेह्या रक्षणार्थं सहायता ।।

उपास्य तु शिवां संध्यां दृष्ट्वा रात्रिमुपागताम् ।
रामस्य शयनं चक्रे सूतः सौमित्रिणा सह ।।

तां शय्यां तमसातीरे वीक्ष्य वृक्षदलैर्वृताम् ।
रामः सौमित्रिणा सार्धं सभार्यः संविवेश ह ।।

उत्थाय च महातेजाः प्रकृतीस्ता निशाम्य च ।
अब्रवीद् भ्रातरं रामो लक्ष्मणं पुष्यलक्षणम् ।।

यावदेव तु संसुप्तास्तावदेव वयं लघु ।
रथमारुह्य गच्छामः पन्थानमकुतो भयम् ।। 46.21

अथ रामोऽब्रवीत्सूतं शीघ्रं संयुज्यतां रथः ।
गमिष्यामि ततोऽरण्यं गच्छ शीघ्रमितः प्रभो ।।

मुहूर्तं त्वरितं गत्वा निवर्तय रथं पुनः ।
यथा न विद्युः पौरा मां तथा कुरु समाहितः ।।

रामस्य तु वचः श्रुत्वा तता चक्रे च सारथिः ।
प्रत्यागम्य च रामस्य स्यन्दनं प्रत्यवेदयत् ।।

तौ सम्प्रयुक्तं तु रथं समास्थितौ तदा ससीतौ रघुवंशवर्धनौ ।
प्रचोदयामास ततस्तुरंगमान् स सारथिर्येन पथा तपोवनम् ।।

प्रभातायां तु शर्वर्यां पौरास्ते राघवं विना ।
शोकोपहतनिश्चेष्टा बभूवुर्हतचेतसः ।।

तदा यथागतेनैव मार्गेण क्लान्तचेतसः ।
अयोध्यामगमन् सर्वे पुरीं व्यथितसज्जनाम् ।।

स्वं स्वं निलयमागम्य पुत्रदारैः समावृताः ।
अश्रूणि मुमुचुः सर्वे बाष्पेण पिहिताननाः ।।

एकः सत्पुरुषो लोके लक्ष्मणः सह सीतया ।
योऽनुगच्छति काकुत्स्थं रामं परिचरन् वने ।।

प्रशान्तगीतोत्सवनृत्यवादना विभ्रष्टहर्षा पिहितापणोदया ।
तदा ह्ययोध्या नगरी बभूव सा महार्णव संक्षपितोदकों यथा ।।

रामोऽपि रात्रिशेषेण तेनैव महदन्तरम् ।
जगाम पुरुषव्याघ्रः पितुराज्ञामनुस्मरन् ।। 49.1

ग्रामान्विकृष्टसीमान्तान् पुष्पितानि वनानि च ।
पश्यन्नतिययौ शीघ्रं शनैरिव हयोत्तमैः ।।

अहो दशरथो राजा निःस्नेहः स्वसुतं प्रति ।
प्रजानामनघं रामं परित्यक्तुमिहेच्छति ।।

एता वाचो मनुष्याणां ग्रामसंवासवासिनाम् ।
शृण्वन्निर्ययौ वीरः कोसलान् कोसलेश्वरः ।।

तत्र त्रिपथगां दिव्यां शीततोयामशैवलाम् ।
ददर्श राघवो गङ्गां रम्यामृषिनिषेविताम् ।।

तामूर्मिकलिलावर्तामन्ववेक्ष्य महारथः ।
सुमन्त्रमब्रवीत्सूतमिहैवाद्य वसामहे ।।

लक्ष्मणश्च सुमन्त्रश्च बाढमित्येव राघवम् ।
उक्त्वा तमिङ्गुदीवृक्षं तदोपययतुर्हयैः ।।

रामोऽभियाय तं रम्यं वृक्षमिक्ष्वाकुनन्दनः ।
रथादवतरत् तस्मात् सभार्यः सहलक्ष्मणः ।।

तत्र राजा गुहो नाम रामस्यात्मसमः सखा ।
निषादजात्यो बलवान् स्थपतिश्चेति विश्रुतः ।।

स श्रुत्वा पुरुषव्याघ्रं रामं विषयमागतम् ।
वृद्धैः परिवृतोऽमात्यैर्ज्ञातिभिश्चाप्युपागतः ।।

तमार्तः सम्परिष्वज्य गुहो राघवमब्रवीत् ।
यथाऽयोध्या तथेदं ते राम किं करवाणि ते ।। 50.36

अर्घ्यं चोपानयच्छीघ्रं वाक्यं चेदमुवाच ह ।
स्वागतं ते महाबाहो तवेयमखिला मही ।।

वयं प्रेष्या भवान् भर्ता साधु राज्यं प्रशाधिनः ।
भक्ष्यं भोज्यं च पेयं च लेह्यं चैतदुपस्थितम् ।
शयनानि च मुख्यानि वाजिनां खादिनां च ते ।।

गुहमेवं ब्रुवाणं तं राघवः प्रत्यभाषत ।
कुशचीराजिनधरं फलमूलाशनं च माम् ।
विद्धि प्रणिहितं धर्मे तापसं वनगोचरम् ।।

ततश्चीरात्तरासङ्गः सन्ध्यामन्वास्य पश्चिमाम् ।
जलमेवाददे भोज्यं लक्ष्मणेनाहृतं स्वयम् ।।

तथा शयानस्य ततो यशस्विनो मनस्विनो दाशरथेर्महात्मनः ।
अदृष्टदुःखस्य सुखोचितस्य सा तदा व्यतीता सुचिरेण शर्वरी ।।

प्रभातायां तु शर्वर्यां पृथुवक्षा महायशाः ।
उवाच रामः सौमित्रिं लक्ष्मणं शुभलक्षणम् ।।

बर्हिणानां च निर्घोषःश्रूयते नदतां वने ।
तराम जाह्नवीं सौम्य शीघ्रगां सागरङ्गमाम् ।।

अस्य वाहनसंयुक्तां कर्णग्राहवतीं शुभाम् ।
सुप्रातारां दृढां तीर्थे शीघ्रं नावमुपाहर ।।

ततः कलापान् संनह्य खड्गौ बध्वा च धन्विनौ ।
जग्मतुर्येन तां गङ्गां सीतया सह राघवौ ।।

ततोऽब्रवीद् दाशरथिः सुमन्त्रं स्पृशन्करेणोत्तमदक्षिणेन ।
सुमन्त्र शीघ्रं पुनरेव याहि राज्ञः सकाशे भव चाप्रमत्तः ।। 52.13

ततस्तु विगते बाष्पे सूतं स्पृष्ट्वोदकं शुचिम् ।
रामस्तु मधुरं वाक्यं पुनः पुनरुवाच तम् ।।

इक्ष्वाकूणां त्वया तुल्यं सुहृदं नोपलक्षये ।
यथा दशरथो राजा मां न शोचेत् तथा कुरु ।।

न चाहमनुशोचामि लक्ष्मणो न च शोचति ।
अयोध्यायाश्च्युताश्चेति वने वत्स्यामहेति वा ।।

एवमुक्त्वा तु राजानं मातरं च सुमन्त्र मे ।
अन्याश्च देवीः सहिताः कैकेयीं च पुनः पुनः ।।

आरोग्यं ब्रूहि कौसल्यामथ पादाभिवन्दनम् ।
सीताया मम चार्यस्य वचनाल्लक्ष्मणस्य च ।।

ब्रूयाश्चापि महाराजं भरतं क्षिप्रमानय ।
आगतश्चापि भरतः स्थाप्ये नृपमते पदे ।।

भरतं च परिष्वज्य यौवराज्येऽभिषिच्य च ।
अस्मत्संतापजं दुःखं न त्वामभिभविष्यति ।।

यथा च तव कैकेयी सुमित्रा चाविशेषतः ।
तथैव देवी कौसल्या मम माता विशेषतः ।।

तातस्य प्रियकामेन यौवराज्यमशेषता ।
लोकयोरुभयोः शक्यं नित्यदा सुखमेधितुम् ।।

निवर्त्यमानो रामेण सुमन्त्रः प्रतिबोधितः ।
तत्सर्वं वचनं श्रुत्वा स्नेहात् काकुत्स्थमब्रवीत् ।। 52.37

अर्घ्यं चोपानयच्छीघ्रं वाक्यं चेदमुवाच ह ।
स्वागतं ते महाबाहो तवेयमखिला मही ॥

वयं प्रेष्या भवान् भर्ता साधु राज्यं प्रशाधिनः ।
भक्ष्यं भोज्यं च पेयं च लेह्यं चैतदुपस्थितम् ।
शयनानि च मुख्यानि वाजिनां खादिनां च ते ॥

गुहमेवं ब्रुवाणं तं राघवः प्रत्यभाषत ।
कुशचीराजिनधरं फलमूलाशनं च माम् ।
विद्धि प्रणिहितं धर्मे तापसं वनगोचरम् ॥

ततश्चीरोत्तरासङ्गः सन्ध्यामन्वास्य पश्चिमाम् ।
जलमेवाददे भोज्यं लक्ष्मणेनाहृतं स्वयम् ॥

तथा शयानस्य ततो यशस्विनो मनस्विनो दाशरथेर्महात्मनः ।
अदृष्टदुःखस्य सुखोचितस्य सा तदा व्यतीता सुचिरेण शर्वरी ॥

प्रभातायां तु शर्वर्यां पृथुवक्षा महायशाः ।
उवाच रामः सौमित्रिं लक्ष्मणं शुभलक्षणम् ॥

बर्हिणानां च निर्घोषःश्रूयते नदतां वने ।
तराम जाह्नवीं सौम्य शीघ्रगां सागरङ्गमाम् ॥

अस्य वाहनसंयुक्तां कर्णग्राहवतीं शुभाम् ।
सुप्रातारां दृढां तीर्थे शीघ्रं नावमुपाहर ॥

ततः कलापान् संनह्य खड्गौ बध्वा च धन्विनौ ।
जग्मतुर्येन तां गङ्गां सीतया सह राघवौ ॥

ततोऽब्रवीद् दाशरथिः सुमन्त्रं स्पृशन्करेणोत्तमदक्षिणेन ।
सुमन्त्र शीघ्रं पुनरेव याहि राज्ञः सकाशे भव चाप्रमत्तः ॥ 52.13

ततस्तु विगते बाष्पे सूतं स्पृष्ट्वोदकं शुचिम् ।
रामस्तु मधुरं वाक्यं पुनः पुनरुवाच तम् ।।

इक्ष्वाकूणां त्वया तुल्यं सुहृदं नोपलक्षये ।
यथा दशरथो राजा मां न शोचेत् तथा कुरु ।।

न चाहमनुशोचामि लक्ष्मणो न च शोचति ।
अयोध्यायाश्च्युताश्चेति वने वत्स्यामहेति वा ।।

एवमुक्त्वा तु राजानं मातरं च सुमन्त्र मे ।
अन्याश्च देवीः सहिताः कैकेयीं च पुनः पुनः ।।

आरोग्यं ब्रूहि कौसल्यामथ पादाभिवन्दनम् ।
सीताया मम चार्यस्य वचनाल्लक्ष्मणस्य च ।।

ब्रूयाश्चापि महाराजं भरतं क्षिप्रमानय ।
आगतश्चापि भरतः स्थाप्ये नृपमते पदे ।।

भरतं च परिष्वज्य यौवराज्येऽभिषिच्य च ।
अस्मत्संतापजं दुःखं न त्वामभिभविष्यति ।।

यथा च तव कैकेयी सुमित्रा चाविशेषतः ।
तथैव देवी कौसल्या मम माता विशेषतः ।।

तातस्य प्रियकामेन यौवराज्यमशेषता ।
लोकयोरुभयोः शक्यं नित्यदा सुखमेधितुम् ।।

निवर्त्यमानो रामेण सुमन्त्रः प्रतिबोधितः ।
तत्सर्वं वचनं श्रुत्वा स्नेहात् काकुत्स्थमब्रवीत् ।। 52.37

कथं त्वद्विहीनोऽहं प्रतियास्यामि तां पुरीम् ।
तव तात वियोगेन पुत्रशोकातुरामिव ।।

मम तावन्नियोगस्थाः त्वद्बन्धुजनवाहिनः ।
कथं रथं त्वया हीनं प्रवाह्यन्ति हयोत्तमाः ।।

नहि शक्या प्रवेष्टुं सा मयाऽयोध्या त्वया विना ।
राजधानी महेन्द्रस्य यथा दुष्कृतकर्मणा ।।

एवं बहुविधं दीनं याचमानं पुनः पुनः ।
रामो भृत्यानुकम्पी तु सुमन्त्रमिदमब्रवीत् ।।

नगरीं त्वां गतं दृष्ट्वा जननी मे यवीयसी ।
कैकेयी प्रत्ययं गच्छेदिति रामो वनं गतः ।।

मम प्रियार्थं राज्ञश्च सुमन्त्र त्वं पुरीं व्रज ।
संदिष्टश्चापि यानार्थांस्तान् ब्रूयांस्तथा तथा ।।

इत्युक्त्वा वचनं सूतं सान्त्वयित्त्वा पुनः पुनः ।
गुहं वचनं अक्लीबो रामो हेतुमदब्रवीत् ।।

नेदानीं गुहयोग्योऽयं वासो मे सजने वने ।
अवश्यमाश्रमे वासः कर्तव्यस्तद्गतो विधिः ।।

जटाः कृत्वा गमिष्यामि न्यग्रोधक्षीरमानय ।
तत्क्षीरं राजपुत्राय गुहः क्षिप्रमुपाहरत् ।।

लक्ष्मणस्यात्मनश्चैव रामस्तेनाकरोज्जटाः ।
दीर्घबाहुर्नरव्याघ्रो जटिलत्वमधारयत् । 52.69

तौ तदा चीरसम्पन्नौ जटामण्डलधारिणौ ।
अशोभेतामृषिसमौ भ्रातरौ रामलक्ष्मणौ ।।

ततस्तं समनुज्ञाप्य गुहमिक्ष्वाकुनन्दनः ।
जगाम तूर्णमव्यग्रः सभार्यः सहलक्ष्मणः ।।

स भ्रातुः शासनं श्रुत्वा सर्वमप्रतिकूलयन् ।
आरोप्य मैथिलीं पूर्वमारुरोहात्मवांस्ततः ।।

अथारुरोह तेजस्वी स्वयं लक्ष्मणपूर्वजः ।
ततो निषादाधिपतिर्गुहो ज्ञातीनचोदयत् ।।

ततस्तैश्चालिता नौका कर्णधारसमाहिता ।
शुभस्फ्यवेगाभिहता शीघ्रं सलिलमत्यगात् ।।

मध्यं तु समनुप्राप्य भागीरथ्यास्त्वनिन्दिता ।
वैदेही प्राञ्जलिर्भूत्वा तां नदीमिदमब्रवीत् ।।

पुत्रो दशरथस्यायं महाराजस्य धीमतः ।
निदेशं पालयत्वेनं गङ्गे त्वदभिरक्षितः ।।

चतुर्दश हि वर्षाणि समग्राण्युष्य कानने ।
भ्रात्रा सह मया चैव पुनः प्रत्यागमिष्यति ।।

सा त्वां देवि नमस्यामि प्रशंसामि च शोभने ।
प्राप्तराज्ये नरव्याघ्रे शिवेन पुनरागते ।।

तथा सम्भाषमाणा सा सीता गङ्गामनिन्दिता ।
दक्षिणा दक्षिणं तीरं क्षिप्रमेवाभ्युपागमत् ।। 52.92

गतं तु गङ्गापरपारमाशु रामं सुमन्त्रः सततं निरीक्ष्य ।
अध्वप्रकर्षाद् विनिवृत्तदृष्टिः मुमोच बाष्पं व्यथितस्तपस्वी ।।

स लोकपालप्रतिमप्रभावस्तीर्त्वा महात्मा वरदो महानदीम् ।
ततो समृद्धाञ्शुभसस्यमालिनः क्रमेण वत्सान् मुदितानुपागमत् ।।

स तं वृक्षं समासाद्य सन्ध्यामन्वास्य पश्चिमाम् ।
रामो रमयतां श्रेष्ठ इति होवाच लक्ष्मणम् ।।

अद्येयं प्रथमा रात्रिर्याता जनपदाद्बहिः ।
या सुमन्त्रेण रहिता तां नोत्कण्ठितुमर्हसि ।।

जागर्तव्यमतन्द्रिभ्यामद्य प्रभृति रात्रिषु ।
योगक्षेमौ हि सीताया वर्तते लक्ष्मणावयोः ।।

स हि राज्यस्य सर्वस्य सुखमेकं भविष्यति ।
ताते तु वयसातीते मयि चारण्यमाश्रिते ।।

अर्थधर्मौ परित्यज्य यःकाममनुवर्तते ।
एवमापद्यते क्षिप्रं राजा दशरथो यथा ।।

मन्ये दशरथान्ताय मम प्रव्राजनाय च ।
कैकेयी सौम्य सम्प्राप्ता राज्याय भरतस्य च ।।

अहमेको गमिष्यामि सीतया सह दण्डकान् ।
अनाथाया हि नाथस्त्वं कौसल्याया भविष्यसि ।।

अल्पभाग्या हि मे माता कौसल्या रहिता मया ।
शेते परमदुःखार्ता पतिता शोकसागरे ।। 53.24

विलापोपरतं रामं गतार्चिषमिवानलम् ।
समुद्रमिव निर्वेगमाश्वासयत लक्ष्मणः ।।

न च सीता त्वया हीना न चाहमपि राघव ।
मुहूर्तमपि जीवावो जलान् मत्स्याविवोद्धृतौ ।।

न हि तातं न शत्रुघ्नं न सुमित्रां परन्तप ।
द्रष्टुमिच्छेयमद्याहं स्वर्गं चापि त्वया विना ।।

ते तु तस्मिन्महावृक्षे उषित्वा रजनीं शुभाम् ।
विमलेऽभ्युदिते सूर्ये तस्माद् देशात्प्रतस्थिरे ।।

ते भूमिभागान्विविधान्देशांश्चापि मनोहरान् ।
अदृष्टपूर्वान्पश्यन्तस्तत्र तत्र यशस्विनः ।।

धन्विनौ तौ सुखं गत्वा लम्बमाने दिवाकरे ।
गङ्गायमुनयोः संधौ प्रापतुर्निलयं मुनेः ।।

रामस्त्वाश्रममासाद्य त्रासयन् मृगपक्षिणः ।
गत्वा मुहूर्तमध्वानं भरद्वाजमुपागमत् ।।

हुताग्निहोत्रं दृष्ट्वैव महाभागः कृताञ्जलिः ।
रामः सौमित्रिणा सार्धं सीतया चाभ्यावादयत् ।।

भार्या ममेयं कल्याणी वैदेही जनकात्मजा ।
मां चानुयाता विजनं तपोवनमनिन्दिता ।।

पित्रा प्रव्राज्यमानं मां सौमित्रिरनुजः प्रियः ।
अयमन्वगमद् भ्राता वनमेव धृतव्रतः ।। 54.15

मृगपक्षिभिरासीनो मुनिभिश्च समन्ततः ।
राममागतमभ्यर्च्य स्वागतेनागतं मुनिः ।।

प्रतिगृह्य तु तामर्चामुपविष्टं स राघवम् ।
भरद्वाजोऽब्रवीद् वाक्यं धर्मयुक्तमिदं तदा ।।

अवकाशो विविक्तोऽयं महानद्योः समागमे ।
पुण्यश्च रमणीयश्च वसत्विह भवान्सुखम् ।।

एवमुक्तस्तु वचनं भरद्वाजेन राघवः ।
प्रत्युवाच शुभं वाक्यं रामः सर्वहिते रतः ।।

आगमिष्यति वैदेहीं मां चापि प्रेक्षको जनः ।
अनेन कारणेनाहमिह वासं न रोचये ।।

एकान्ते पश्य भगवन् आश्रमस्थानमुत्तमम् ।
रमते यत्र वैदेही सुखार्हा जनकात्मजा ।।

एतच्छ्रुत्वा शुभं वाक्यं भरद्वाजो महामुनिः ।
राघवस्य तु तद्वाक्यम् अर्थग्राहकमब्रवीत् ।।

दशक्रोश इतस्तात गिरिर्यस्मिन्निवत्स्यसि ।
महर्षिसेवितः पुण्यः पर्वतः शुभदर्शनः ।।

गोलाङ्गूलानुचरितो वानरर्क्षनिषेवितः ।
चित्रकूट इति ख्यातो गन्धमादनसन्निभः ।।

प्रविविक्तमहं मन्ये तं वासं भवतः सुखम् ।
इह वा वनवासाय वस राम मया सह ।। 54.32

सीतातृतीयः काकुत्स्थः परिश्रान्तः सुखोचितः ।
भरद्वाजाश्रमे रम्ये तां रात्रिमवसत्सुखम् ।।

प्रभातायां तु शर्वर्यां भरद्वाजमुपागमत् ।
उवाच नरशार्दूलो मुनिं ज्वलिततेजसम् ।।

शर्वरीं भगवन्नद्य सत्यशील तवाश्रमे ।
उषिताः स्मेह वसतिमनुजानातु नो भवान् ।।

ततः प्रचक्रमे वक्तुं वचनं स महामुनिः ।
भरद्वाजो महातेजा रामं सत्यपराक्रमम् ।।

गङ्गायमुनयोः संधिमासाद्य मनुजर्षभौ ।
कालिन्दीमनुगच्छेतां नदीं पश्चान्मुखाश्रिताम् ।।

इति पन्थानमादिश्य महर्षिः संन्यवर्तत ।
अभिवाद्य तथेत्युक्त्वा रामेण विनिवर्तितः ।।

इति तौ पुरुषव्याघ्रौ मन्त्रयित्वा मनस्विनौ ।
सीतामेवाग्रतः कृत्वा कालिन्दीं जग्मतुर्नदीम् ।।

क्रोशमात्रं ततो गत्वा भ्रातरौ रामलक्ष्मणौ ।
बहून् मेध्यान् मृगान् हत्वा चेरतुर्यमुना वने ।।

ततस्तौ पादचारेण गच्छन्तौ सह सीतया ।
रम्यमासेदतुः शैलं चित्रकूटं मनोरमम् ।।

सुरम्यमासाद्य तु चित्रकूटं नदीं च तां माल्यवतीं सुतीर्थाम् ।
ननन्द हृष्टो मृगपक्षिजुष्टां जहौ च दुःखं पुरविप्रवासात् ।। 56.35

अनुज्ञातः सुमन्त्रोऽथ योजयित्वा हयोत्तमान् ।
अयोध्यामेव नगरीं प्रययौ गाढदुर्मनाः ।।

स राजमार्गमध्येन सुमन्त्रः पिहितानन: ।
यत्र राजा दशरथस्तदेवोपययौ गृहम् ।।

अभिगम्य तमासीनं राजानमभिवाद्य च ।
सुमन्त्रो रामवचनं यथोक्तं प्रत्यवेदयत् ।।

स तूष्णीमेव तच्छ्रुत्वा राजा विद्रुतमानसः ।
मूर्च्छितो न्यपतद् भूमौ रामशोकाभिपीडितः ।।

सुमित्रया तु सहिता कौसल्या पतितं पतिम् ।
उत्थापयामास तदा वचनं चेदमब्रवीत् ।।

इमं तस्य महाभाग दूतं दुष्करकारिण: ।
वनवासादनुप्राप्तं कस्मान्न प्रतिभाषसे ।।

देव यस्या भयाद् रामं नानुपृच्छसि सारथिम् ।
नेह तिष्ठति कैकेयी विश्रब्धं प्रतिभाष्यताम् ।।

सा तथोक्त्वा महाराजं कौसल्या शोकलालसा ।
धरण्यां निपपाताशु बाष्पविप्लुतभाषिणी ।।

विलपन्तीं तथा दृष्ट्वा कौसल्यां पतितां भुवि ।
पतिं चावेक्ष्य ताः सर्वाः समन्ताद् रुरुदुः स्त्रियः ।।

प्रत्याश्वस्तो यदा राजा मोहात्प्रत्यागतस्मृतिः ।
तदाजुहाव तं सूतं रामवृत्तान्तकारणात् ।। 58.1

राजा तु रजसा सूतं ध्वस्ताङ्गं समुपस्थितम् ।
अश्रुपूर्णमुखं दीनमुवाच परमार्तवत् ।।

क्क नु वत्स्यति धर्मात्मा वृक्षमूलमुपाश्रितः ।
सोऽत्यन्तसुखितः सूत किमशिष्यति राघवः ।।

सुकुमार्या तपस्विन्या सुमन्त्र सह सीतया ।
राजपुत्रौ कथं पादैरवरुह्य रथाद्गतौ ।।

इति सूतो नरेन्द्रेण चोदितः सज्जमानया ।
उवाच वाचा राजानं स बाष्पपरिबद्धया ।।

अब्रवीन्मे महाराज धर्ममेवानुपालयन् ।
अञ्जलिं राघवः कृत्वा शिरसाभिप्रणम्य च।।

सूत मद्वचनात्तस्य तातस्य विदितात्मनः ।
शिरसा वन्दनीयस्य वन्द्यौ पादौ महात्मनः ।।

माता च मम कौसल्या कुशलं चाभिवादनम् ।
अप्रमादं च वक्तव्या ब्रूयाश्चैनमिदं वचः ।।

धर्मनित्या यथाकालमग्न्यगारपरा भव ।
देवि देवस्य पादौ च देववत् परिपालय ।।

कुमारे भरते वृत्तिर्वर्तितव्या च राजवत् ।
अप्यज्येष्टा हि राजानो राजधर्ममनुस्मर ।।

अब्रवीच्चापि मां भूयो भृशमश्रूणि वर्तयन् ।
मातेव मम माता ते द्रष्टव्या पुत्रगर्धिनी ।। 58.24

लक्ष्मणस्तु सुसंक्रुद्धो निःश्वसन् वाक्यमब्रवीत् ।
केनायमपराधेन राजपुत्रो विवासितः ।।

यदि प्रव्राजितो रामो लोभकारणकारितम् ।
वरदाननिमित्तं वा सर्वथा दुष्कृतं कृतम् ।।

अहं तावन् महाराजे पितृत्वं नोपलक्षये ।
भ्राता भर्ता बन्धुश्च पिता च मम राघवः ।।

जानकी तु महाराज निःश्वसन्ती तपस्विनी ।
भूतोपहतचित्तेव विष्ठिता विस्मृता स्थिता ।।

उद्वीक्षमाणा भर्तारं मुखेन परिशुष्यता ।
मुमोच सहसा बाष्पं प्रयान्तमुपवीक्ष्य सा ।।

उभाभ्यां राजपुत्राभ्यामथ कृत्वाहमञ्जलिम् ।
प्रस्थितो रथमास्थाय तद्दुःखमपि धारयन् ।।

निरानन्दा महाराज रामप्रव्राजनातुरा ।
कौसल्या पुत्रहीनेव अयोध्या प्रतिभाति मे ।।

सूतस्य वचनं श्रुत्वा वाचा परमदीनया ।
बाष्पोपहतया सूतमिदं वचनमब्रवीत् ।।

भवितव्यतया नूनमिदं वा व्यसनं महत् ।
कुलस्यास्य विनाशाय प्राप्तं सूत यदृच्छया ।।

अथवापि महाबाहुर्गतो दूरं भविष्यति ।
मामेव रथमारोप्य शीघ्रं रामाय दर्शय ।। 59.23

हा राम रामानुज हा हा वैदेहि तपस्विनि ।
न मां जानीत दुःखेन म्रियमाणमनाथवत् ।।

अशोभनं योऽहमिहाद्य राघवं दिदृक्षमाणो न लभे सलक्ष्मणम् ।
इतीव राजा विलपन् महायशाः पपात तूर्णं शयने स मूर्च्छितः ।

ततो भूतोपसृष्टेव वेपमाना पुनः पुनः ।
धरण्यां गतसत्वेव कौसल्या सूतमब्रवीत् ।।

निवर्तय रथं शीघ्रं दण्डकान्नय मामपि ।
अथ तान् नानुगच्छामि गमिष्यामि यमक्षयम् ।।

बाष्पवेगोपहतया स वाचा सज्जमानया ।
इदमाश्वासयन् देवीं सूतः प्राञ्जलिरब्रवीत् ।।

त्यज शोकं च मोहं च सम्भ्रमं दुःखजं तथा ।
व्यवधूय च संतापं वने वत्स्यति राघवः ।।

विजनेऽपि वने सीता वासं प्राप्य गृहेष्विव ।
विस्रम्भं लभते सीता रामे विन्यस्तमानसा ।।

बालेव रमते सीता बालचन्द्रनिभानना ।
रामा रामे ह्यदीनात्मा विजनेऽपि वने सति ।।

न शोच्यास्ते न चात्मा ते शोच्यो नापि जनाधिपः ।
इदं हि चरितं लोके प्रतिष्ठास्यति शाश्वतम् ।।

तथापि सूतेन सुयुक्तवादिना निवार्यमाणा सुतशोककर्शिता ।
न चैव देवी विरराम कूजितात् प्रियेति पुत्रेति च राघवेति च ।। 60.23

हतं त्वया राष्ट्रमिदं सराज्यं हता:स्म सर्वा: सह मन्त्रिभिश्च ।
हता सपुत्रास्मि हताश्च पौरा: सुतश्च भार्या च तव प्रहृष्टौ ।।

इमां गिरं दारुणशब्दसंहितां निशम्य रामेति मुमोह दु:खित: ।।
तत:स शोकं प्रविवेश पार्थिव: स्वदुष्कृतं चापि पुनस्तथास्मरत् ।।

चिन्तयित्वा स च नृपो मोहव्याकुलितेन्द्रिय: ।
अथ दीर्घेण कालेन संज्ञामाप परंतप: ।।

तस्य चिन्तयमानस्य प्रत्यभात् कर्म दुष्कृतम् ।
यदनेन कृतं पूर्वमज्ञानाच्छब्दवेधिना ।।

प्रसादये त्वां कौसल्ये रचितोऽयं मयाञ्जलि: ।
वत्सला चानृशंसा च त्वं हि नित्यं परेष्वपि ।।

भर्ता तु खलु नारीणां गुणवान्निर्गुणोऽपि वा ।
धर्मं विमृशमानानां प्रत्यक्षं देवि दैवतम् ।।

सा मूर्ध्नि बध्वा रुदती राज्ञ: पद्ममिवाञ्जलिम् ।
सम्भ्रमादब्रीत् त्रस्ता त्वरमाणाक्षरं वच: ।।

प्रसीद शिरसा याचे भूमौ निपतितास्मि ते ।
याचितास्मि हता देव क्षन्तव्याहं नहि त्वया ।।

अथ प्रह्लादितो वाक्यैर्देव्या कौसल्यया: नृप: ।
शोकेन च समाक्रान्तो निद्राया वशमेयिवान् ।।

स राजा रजनीं षष्ठीं रामे प्रव्राजिते वनम् ।
अर्धरात्रे दशरथ: सोऽस्मरद् दुष्कृतं कृतम् ।। 63.4

स राजा पुत्रशोकार्तः स्मृत्वा दुष्कृतमात्मजः ।
कौसल्यां पुत्रशोकार्तामिदं वचनमब्रवीत् ।।

यदाचरति कल्याणि शुभं वा यदि वाऽशुभम् ।
तदेव लभते भद्रे कर्ता कर्मजमात्मनः ।।

अविज्ञाय फलं योऽहि कर्मत्वेवानुधावति ।
स शोचेत् फलवेलायां यथा किंशुकसेचकः ।।

देव्यनूढा त्वमभवो युवराजो भवाम्यहम् ।
ततः प्रावृडनुप्राप्ता मम कामविवर्धिनी ।।

तस्मिन्नतिसुखे काले धनुष्मानिषुमान् रथी ।
व्यायामकृतसंकल्पः सरयूमन्वगां नदीम् ।।

अथान्धकारे त्वश्रौषं जले कुम्भस्य पूर्यतः ।
अचक्षुर्विषये घोषं वारणस्येन नर्दतः ।।

अमुञ्चं निशितं बाणमहमाशीविषोपमम् ।
तत्र वागुषसि व्यक्ता प्रादुरासीद् वनौकसः ।।

हा हेति पततस्तोये बाणाद् व्यथितमर्मणः ।
तस्मिन्निपतिते भूमौ वागभूत्तत्र मानुषी ।।

इषुणाभिहतः केन कस्य वाऽपकृतं मया ।
ऋषेर्हिन्यस्तदण्डस्य वने वन्येन जीवतः ।।

कथं नु शस्त्रेण वधो मद्विधस्य विधीयते ।
जटाभारधरस्यैव वल्कलाजिनवाससः ।। 63.28

मयि पञ्चत्वमापन्ने कां वृत्तिं वर्तयिष्यति ।
वृद्धौ च मातापितरावहं चैकेषुणा हतः ।।

केन स्म निहता सर्वे सुबालेनाकृतात्मना ।
तां गिरं करुणं श्रुत्वा मम धर्मानुकाङ्क्षिणः ।।

कराभ्यां सशरं चापं व्यथितस्यापतद् भुवि ।
तस्याहं करुणं श्रुत्वा ऋषेर्विलपतो निशि ।।

अपश्यमिषुणा तीरे सरय्वास्तापसं हतम् ।
अवकीर्णजटाभारं प्रविद्धकलशोदकम् ।।

जिहीर्षुरम्भो गुर्वर्थं यदहं ताडितस्त्वया ।
एकेन खलु बाणेन मर्मण्यभिहते मयि ।।

पिता यन्मां न जानीते शयानं पतितं भुवि ।
जानन्नपि च किं कुर्यादशक्तश्चापरिक्रमः ।।

शूद्रायामस्मि वैश्येन जातो नरवराधिप ।
इतीव वदतः कृच्छ्राद् बाणाभिहतमर्मणः ।।

तस्य त्वाताम्यमानस्य तं बाणमहमुद्धरम् ।
स मामुद्वीक्ष्य संत्रस्तो जहौ प्राणांस्तपोधनः ।।

तदज्ञानान् महत्पापं कृत्वा संकुलितेन्द्रियः ।
एकस्त्वचिन्तयं बुद्ध्या कथं नु सुकृतं भवेत् ।।

ततस्तं घटमादाय पूर्णं परमवारिणा ।
आश्रमं तमहं प्राप्य यथाख्यातपथं गतः ।। 64.3

तत्राहं दुर्बलावन्धौ वृद्धावपरिणायकौ ।
अपश्यं तस्य पितरौ लूनपक्षाविव द्विजौ ।।

पदशब्दं तु मे श्रुत्वा मुनिर्वाक्यमभाषत ।
किं चिरायसि मे पुत्र पानीयं क्षिप्रमानय ।।

त्वं गतिस्त्वगतीनां च चक्षुस्त्वं हीनचक्षुषाम् ।
समासक्तास्त्वयि प्राणाः कथं त्वं नाभिभाषसे ।।

मनसः कर्म चेष्टाभिरभिसंस्तभ्य वाग्बलम् ।
आचचक्षे त्वहं तस्मै पुत्रव्यसनजं भयम् ।।

क्षत्रियोऽहं दशरथो नाहं पुत्रो महात्मनः ।
सज्जनावमतं दुःखमिदं प्राप्तं स्वकर्मजम् ।।

अज्ञानाद्भवतः पुत्रः सहसाभिहतो मया ।
शेषमेवं गते यत् स्यात् तत् प्रसीदतु मे मुनिः ।।

स बाष्पपूर्णवदनो निःश्वसन् शोकमूर्च्छितः ।
मामुवाच महातेजाः कृताञ्जलिमुपस्थितम् ।।

नय नौ नृप तं देशमिति मां चाभ्यभाषत ।
अद्य तं द्रष्टुमिच्छावः पुत्रं पश्चिमदर्शनम् ।।

तौ पुत्रमात्मनः स्पृष्ट्वा तमासाद्य तपस्विनौ ।
निपेततुः शरीरेऽस्य पिता चैनमुवाच ह ।।

को मां संध्यामुपास्यैव स्नात्वा हुतहुताशनः ।
श्लाघयिष्यत्युपासीनः पुत्रशोकभयार्दितम् ।। 64.33

इमामन्धां च वृद्धां च मातरं ते तपस्विनीम् ।
कथं पुत्र भरिष्यामि कृपणां पुत्रगर्धिनीम् ।।

उभावपि च शोकार्तावनाथौ कृपणौ वने ।
क्षिप्रमेव गमिष्यावस्त्वया हीनौ यमक्षयम् ।।

एवं स कृपणं तत्र पर्यदेवयतासकृत् ।
ततोऽस्मै कर्तुमुदकं प्रवृत्तः सह भार्यया ।।

स तु दिव्येन रूपेण मुनिपुत्रः स्वकर्मभिः ।
स्वर्गमध्यारुहत् क्षिप्रं शक्रेण सह धर्मवित् ।।

पुत्रव्यसनजं दुःखं यदेतन् मम साम्प्रतम् ।
एवं त्वं पुत्रशोकेन राजन् कालं करिष्यसि ।।

एवं शापं मयि न्यस्य विलप्य करुणं बहु ।
चितामारोप्य देहं तन्मिथुनं स्वर्गमभ्ययात् ।।

तदेतच्चिन्तयानेन स्मृतं पापं मया स्वयम् ।
तदा बाल्यात्कृतं देवि शब्दवेध्यनुकर्षिणः ।।

तस्मात् मामागतं भद्रे तस्योदारस्य तद्वचः ।
इत्युक्त्वा स रुदंस्त्रस्तो भार्यामाह तु भूमिपः ।।

हा राघव महाबाहो हा ममायासनाशन ।
हा पितृप्रिय मे नाथ हा ममासि गतः सुत ।।

इति रामस्य मातुश्च सुमित्रायाश्च संनिधौ ।
राजा दशरथः शोचञ्जीवितान्तमुपागमत् ।। 64.77



इति रामस्य मातुश्च सुमित्रायाश्च संनिधौ ।
राजा दशरथः शोचञ्जीवितान्तमुपागमत् ॥

तथा तु दीनः कथयन्नराधिपः प्रियस्य पुत्रस्य विवासनातुरः ।
गतेऽर्धरात्रे भृशदुःखपीडितस्तदाजहौ प्राणमुदारदर्शनः ॥

अथ रात्र्यां व्यतीतायां प्रातरेवापरेऽहनि ।
वन्दिनः पर्युपातिष्ठंस्तत्पार्थिवनिवेशनम् ॥

अथ याः कोसलेन्द्रस्य शयनं प्रत्यनन्तराः ।
ताः स्त्रियस्तु समागम्य भर्तारं प्रत्यबोधयन् ॥

कौसल्या च सुमित्रा च दृष्ट्वा स्पृष्ट्वा च पार्थिवम् ।
हा नाथेति परिक्रुश्य पेततुर्धरणीतले ॥

मार्कण्डेयोऽथ मौद्गल्यो वामदेवश्च कश्यपः ।
कात्यायनो गौतमश्च जाबालिश्च महायशाः ॥

एते द्विजाः सहामात्यैः पृथग्वाचमुदीरयन् ।
वसिष्ठमेवाभिमुखाः श्रेष्टं राजपुरोहितम् ॥

स्वर्गस्थश्च महाराजो रामश्चारण्यमाश्रितः ।
लक्ष्मणश्चापि तेजस्वी रामेणैव गतः सह ॥

नाराजके जनपदे यज्ञशीला द्विजातयः ।
सत्राण्यन्वासते दान्ता ब्राह्मणाः संशितव्रताः ॥

नाराजके जनपदे स्वकं भवति कस्यचित् ।
मत्स्या इव जना नित्यं भक्षयन्ति परस्परम् ॥

स नः समीक्ष्य द्विजवर्य वृत्तं नृपं विना राष्ट्रमरण्यभूतम् ।
कुमारमिक्ष्वाकुसुतं तथान्यं त्वमेव राजानमिहाभिषेचय ॥ 67.38

तेषां तद्वचनं श्रुत्वा वसिष्ठः प्रत्युवाच ह ।
मित्रामात्यजनान् सर्वान् ब्राह्मणांस्तानिदं वचः ।।

तच्छीघ्रं जवना दूता गच्छन्तु त्वरितं हयैः ।
आनेतुं भ्रातरौ वीरौ किं समीक्षामहे वयम् ।।

पुरोहितास्त्वां कुशलं प्राह सर्वे च मन्त्रिणः ।
त्वरमाणश्च निर्याहि कृत्यमात्ययिकं त्वया ।।

ततः प्रास्थानिकं कृत्वा कार्यशेषमनन्तरम् ।
वसिष्ठेनाभ्यनुज्ञाता दूताः सन्त्वरितं ययुः ।।

भर्तुप्रियार्थं कुलरक्षणार्थं भर्तुश्च वंशस्य परिग्रहार्थम् ।
अहेडमानास्त्वरया स्म दूता रात्र्यां तु ते तत्पुरमेव याताः ।।

यामेव रात्रिं ते दूताः प्रविशन्ति स्म तां पुरीम् ।
भरतेनापि तां रात्रिं स्वप्नो दृष्टोऽयमप्रियः ।।

स तैर्महात्मा भरतः सखिभिः प्रियवादिभिः ।
गोष्ठीहास्यानि कुर्वद्भिर्न प्राहृष्यत राघवः ।।

तमब्रवीत् प्रियसखो भरतं सखिभिर्वृतम् ।
सुहृद्भिः पर्युपासीनः किं सखे नानुमोदसे ।।

स्वप्ने पितरमद्राक्षं मलिनं मुक्तमूर्धजम् ।
पतन्तमद्रिशिखरात् कलुषे गोमये ह्रदे ।।

स्वप्नेऽपि सागरं शुष्कं चन्द्रं च पतितं भुवि ।
उपरुद्धां च जगतीं तमसेव समावृताम् ।। 69.11

एवमेतन्मया दृष्टमिमां रात्रिं भयावहाम् ।
अहं रामोऽथवा राजा लक्ष्मणो मरिष्यति ।।

भरते ब्रुवति स्वप्नं दूतास्ते क्लान्तवाहनाः ।
प्रविश्यासह्यपरिखं रम्यं राजगृहं पुरम् ।।

समागम्य च राज्ञा ते राजपुत्रेण चार्चिताः ।
राज्ञः पादौ गृहीत्वा च तमूचुर्भरतं वचः ।।

पुरोहितस्त्वां कुशलं प्राह सर्वे च मन्त्रिणः ।
त्वरमाणश्च निर्याहि कृत्यमात्ययिकं त्वया ।।

भरतश्चापि तान् दूतानेवमुक्तोऽभ्यभाषत ।
आपृच्छेऽहं महाराजं दूताः संत्वरयन्ति माम् ।।

एवमुक्त्वा तु तान् दूतान् भरतः पार्थिवात्मजः ।
दूतैः संचोदितो वाक्या मातामहमुवाच ह ।।

राजन् पितुर्गमिष्यामि सकाशं दूतचोदितः ।
पुनरप्यहमेष्यामि यदा मे त्वा स्मरिष्यसि ।।

स मातामहमापृच्छ्य मातुलं च युधाजितम् ।
रथमारुह्य भरतः शत्रुघ्नसहितो ययौ ।।

बलेन गुप्तो भरतो महात्मा सहार्यकस्यात्मसमैरमात्यैः ।
आदाय शत्रुघ्नमपेतशत्रुं गृहाद् ययौ सिद्ध इवेन्द्रलोकात् ।।

अयोध्यामग्रतो दृष्ट्वा सारथिं चेदमब्रवीत् ।
एषा नातिप्रतीता मे पुण्योद्याना यशस्विनी ।। 71.19

अरण्यभूतेव पुरी सारथे प्रतिभाति माम् ।
नह्यत्र यानैर्दृश्यन्ते न गजैर्न च वाजिभिः ।।

बभूव पश्यन् मनसोऽप्रियाणि यान्यन्यदा नास्य पुरे बभूवुः ।
अवाक्शिरा दीनमना न हृष्टः पितुर्महात्मा प्रविवेश वेश्म ।।

अपश्यंस्तु ततस्तत्र पितरं पितुरालये ।
जगाम भरतो द्रष्टुं मातरं मातुरालये ।।

राजा भवति भूयिष्ठमिहाम्बाया निवेशने ।
तमहं नाद्य पश्यामि द्रष्टुमिच्छन्निहागतः ।।

तं प्रत्युवाच कैकेयी प्रियवद् घोरमप्रियम् ।
अजानन्तं प्रजानन्ती राज्यलोभेन मोहिता ।।

या गतिः सर्वभूतानां तां गतिं ते पिता गतः ।
राजा महात्मा तेजस्वी यायजूकः सतां गतिः ।।

स रुदित्वा चिरं कालं भूमौ परिविवृत्य च ।
जननीं प्रत्युवाचेदं शोकैर्बहुभिरावृतः ।।

अम्ब केनात्यगाद् राजा व्याधिना मय्यनागते ।
धन्या रामादयः सर्वे यैः पिता संस्कृतः स्वयम् ।।

यो मे भ्राता पिता बन्धुर्यस्य दासोऽस्मि सम्मतः ।
तस्य मां शीघ्रमाख्याहि रामस्याक्लिष्टकर्मणः ।।

धर्मविद् धर्मशीलश्च महाभागो दृढव्रतः ।
आर्ये किमब्रवीद्राजा पिता मे सत्यविक्रमः ।। 72.34

पश्चिमं साधुसंदेशमिच्छामि श्रोतुमात्मनः ।
इति पृष्टा यथातत्त्वं कैकेयी वाक्यमब्रवीत् ।।

रामेति राज विलपन् हा सीते लक्ष्मणेति च ।
स महात्मा परं लोकं गतो मतिमतां वरः ।।

मया तु पुत्र श्रुत्वैव रामस्येहाभिषेचनम् ।
याचितस्ते पिता राज्यं रामस्य च विवासनम् ।।

स स्ववृत्तिं समास्थाय पिता ते तत्तथाकरोत् ।
रामस्तु सह सौमित्रिः प्रेषितः सह सीतया ।।

तमपश्यन् प्रियं पुत्रं महीपालो महायशाः ।
पुत्रशोकपरिद्यूनः पञ्चत्वमुपपेदिवान् ।।

श्रुत्वा च स पितुर्वृत्तं भ्रातरौ च विवासितौ ।
भरतो दुःखसंतप्तो इदं वचनमब्रवीत् ।।

किं नु कार्यं हतस्येह मम राज्येन शोचतः ।
विहीनस्याथ पित्रा च भ्रात्रा पितृसमेन च ।।

तथा ज्येष्ठा हि मे माता कौसल्या दीर्घदर्शिनी ।
त्वयि धर्मं समास्थाय भगिन्यामिव वर्तते ।।

तस्याः पुत्रं महात्मानं चीरवल्कलवाससम् ।
प्रस्थाप्य वनवासाय कथं पापे न शोचसे ।।

सततं राजपुत्रेषु ज्येष्ठो राजाभिषिच्यते ।
राज्ञामेतत्समं तत्स्यादिक्ष्वाकूणां विशेषतः ।। 73.22

निवर्तयित्वा रामं च तस्याहं दीप्ततेजसः ।
दासभूतो भविष्यामि सुस्थितेनान्तरात्मना ।।

इत्येवमुक्त्वा भरतो महात्मा प्रियेतरैर्वाक्यगणैस्तुदंस्ताम् ।
शोकार्दितश्चापि ननाद भूयः सिंहो यथा मन्दरकन्दरस्थः ।।

तां तथा गर्हयित्वा तु मातरं भरतस्तदा ।
रोषेण महताविष्टः पुनरेवाब्रवीद्वचः ।।

यत्वया धार्मिको रामो नित्यं सत्यपरायणः ।
वनं प्रस्थापितो वीरः पितापि त्रिदिवं गतः ।।

यस्याः पुत्रसहस्राणि सापि शोचति कामधुक् ।
किं पुनर्या विना रामं कौसल्या वर्तयिष्यति ।।

आनाय्य च महाबाहुं कोसलेन्द्रं महाबलम् ।
स्वयमेव प्रवेक्ष्यामि वनं मुनि निषेवितम् ।।

राज्यं न कामये जातु मन्त्रये नापि मातरम् ।
अभिषेकं न जानामि योऽभूत् राज्ञा समीक्षितः ।।

स तु राजात्मजश्चापि शत्रुघ्नसहितस्तदा ।
प्रतस्थे भरतो येन कौसल्याया निवेशनम् ।।

पपात चरणौ त्रस्तास्तदा सम्भ्रान्तचेतनः ।
विलप्य बहुधा संज्ञो लब्धसंज्ञस्तदाभवत् ।।

एवं विलपमानां तां प्राञ्जलिर्भरतस्तदा ।
कौसल्यां प्रत्युवाचेदं शोकैर्बहुभिरावृताम् ।। 75.19

गाश्च स्पृशतु पादेन गुरून् परिवदेत च ।
मित्रे द्रुह्येत सोऽत्यर्थं यस्यार्योऽनुमते गतः ।।

पुत्रैर्दारैश्च भृत्यैश्च स्वगृहे परिवारितः ।
स एको मृष्टमश्नातु यस्यार्योऽनुमते गतः ।।

एवमाश्वासयन्नेव दुःखार्तोऽनुपपात ह ।
विहीनां पतिपुत्राभ्यां कौसल्यां पार्थिवात्मजः ।।

तदा तं शपथैः कष्टैः शपमानमचेतनम् ।
भरतं शोकसंतप्तं कौसल्या वाक्यमब्रवीत् ।।

दिष्ट्या न चलितो धर्मादात्मा ते सह लक्ष्मणः ।
वत्स सत्यप्रतिज्ञो हि सतां लोकानवाप्स्यसि ।।

इत्युक्त्वा चाङ्कमानीय भरतं भ्रातृवत्सलम् ।
परिष्वज्य महाबाहुं रुरोद भृशदुःखिता ।।

तमेवं शोकसंतप्तं भरतं कैकयीसुतम् ।
उवाच वदतां श्रेष्ठो वसिष्ठः श्रेष्ठवागृषिः ।।

अलं शोकेन भद्रं ते राजपुत्र महायशः ।
प्राप्तकालं नरपतेः कुरु संयानमुत्तमम् ।।

वसिष्ठस्य वचः श्रुत्वा भरतो धरणीं गतः ।
प्रेतकृत्यानि सर्वाणि कारयामास धर्मवित् ।।

कृत्वोदकं ते भरतेन सार्धं नृपाङ्गना मन्त्रिपुरोहिताश्च ।
पुरं प्रविश्याश्रुपरीतनेत्रा भूमौ दशाहं व्यनयन्त दुःखम् ।। 76.23

ततो दशाहेऽतिगते कृतशौचो नृपात्मजः
द्वादशेऽहनि सम्प्राप्ते श्राद्धकर्माण्यकारयत् ॥

ततः प्रभातसमये दिवसेऽथ चतुर्दशे ।
समेत्य राज्यकर्तारो भरतं वाक्यमब्रुवन् ॥

राज्यं गृहाण भरत पितृपैतामहं ध्रुवम् ।
अभिषेचय चात्मानं पाहि चास्मान् नरर्षभ ॥

अभिषेचनिकं भाण्डं कृत्वा सर्वं प्रदक्षिणम् ।
भरतस्तं जनं सर्वं प्रत्युवाच धृतव्रतः ॥

रामः पूर्वो हि नो भ्राता भविष्यति महीपतिः ।
अहं त्वरण्ये वत्स्यामि वर्षाणि नव पञ्च च ॥

अभिषेचनिकं चैव सर्वमेतदुपस्कृतम् ।
पुरस्कृत्य गमिष्यामि रामहेतोर्वनं प्रति ॥

न सकामां करिष्यामि स्वामिमां मातृगन्धिनीम् ।
वने वत्स्याम्यहं दुर्गे रामो राजा भविष्यति ॥

एवं ते भाषमाणस्य पद्मा श्रीरुपतिष्ठताम् ।
यस्त्वं ज्येष्ठे नृपसुते पृथिवीं दातुमिच्छसि ॥

ऊचुस्ते वचनमिदं निशम्य हृष्टाः सामात्याः सपरिषदो वियातशोकाः ।
पन्थानं नरवरभक्तिमान् जनश्च व्यादिष्टस्तव वचनाच्च शिल्पिवर्गः ॥

ततो नान्दीमुखीं रात्रिं भरतं सूतमागधाः ।
तुष्टुवुः सविशेषज्ञाः स्तवैर्मङ्गलसंस्तवैः ॥ 81.1

ततःप्रबुद्धो भरतस्तं घोषं संनिवर्त्य च ।
नाहं राजेति चोक्त्वा तं शत्रुघ्नमिदमब्रवीत् ।।

पश्य शत्रुघ्न कैकेय्या लोकस्यापकृतं महत् ।
विसृज्य मयि दुःखानि राजा दशरथो गतः ।।

तथा तस्मिन् विलपति वसिष्ठो राजधर्मवित् ।
सभामिक्ष्वाकुनाथस्य प्रविवेश महायशाः ।।

ततो हलहलाशब्दो महान् समुदपद्यत ।
रथैरश्वैर्गजैश्चापि जनानामुपगच्छताम् ।।

ततो भरतमायान्तं शतक्रतुमिवामराः ।
प्रत्यनन्दन् प्रकृतयो यथा दशरथं तथा ।।

ह्रद इव तिमिनागसंवृतः स्तिमितजलो मणिशङ्खशर्करः ।
दशरथसुतशोभिता सभा सदशरथेव बभूव सा पुरा ।।

राज्ञस्तु प्रकृतीः सर्वाः स सम्प्रेक्ष्य च धर्मवित् ।
इदं पुरोहितो वाक्यं भरतं मृदु चाब्रवीत् ।।

तात राजा दशरथः स्वर्गतो धर्ममाचरन् ।
धनधान्यवतीं स्फीतां प्रदाय पृथिवीं तव ।।

पित्रा भ्रात्रा च ते दत्तं राज्यं निहतकण्टकम् ।
तद्भुङ्क्ष्व मुदितामात्यः क्षिप्रमेवाभिषेचय ।।

तच्छ्रुत्वा भरतो वाक्यं शोकेनाभिपरिप्लुतः ।
जगाम मनसा रामं धर्मज्ञो धर्मकाङ्क्षया ।। 82.9

ज्येष्ठः श्रेष्ठश्च धर्मात्मा दिलीपनहुषोपमः ।
लब्धुमर्हति काकुत्स्थो राज्यं दशरथो यथा ।।

यद्धि मात्रा कृतं पापं नाहं तदपि रोचये ।
इहस्थो वनदुर्गस्थं नमस्यामि कृताञ्जलिः ।।

राममेवानुगच्छामि स राजा द्विपदां वरः ।
त्रयाणामपि लोकानां राघवो राज्यमर्हति ।।

यदि त्वार्यं न शक्ष्यामि विनिवर्तयितुं वनात् ।
वने तत्रैव वत्स्यामि यथार्यो लक्ष्मणस्तथा ।।

एवमुक्त्वा तु धर्मात्मा भरतो भ्रातृवत्सलः ।
समीपस्थमुवाचेदं सुमन्त्रं मन्त्रकोविदम् ।।

तूर्णमुत्थाय गच्छ त्वं सुमन्त्र मम शासनात् ।
यात्रामाज्ञापय क्षिप्रं बलं चैव समानय ।।

ततः समुत्थितः कल्यमास्थाय स्यन्दनोत्तमम् ।
प्रययौ भरतः शीघ्रं रामदर्शनकाम्यया ।।

षष्टी रथसहस्राणि धन्विनो विविधायुधाः ।
अन्वयुर्भरतं यान्तं राजपुत्रं यशस्विनम् ।।

कैकेयी च सुमित्रा च कौसल्या च यशस्विनी ।
रामानयनसंतुष्टा ययुर्यानेन भास्वता ।।

उपेत्य तीरं गङ्गायाश्चक्रवाकैरलंकृतम् ।
व्यवतिष्ठत सा सेना भरतस्यानुयायिनी ।। 83.21

दातुं च तावदिच्छामि स्वर्गतस्य महीपतेः ।
और्ध्वदेहनिमित्तार्थमवतीर्योदकं नदीम् ।।

निवेश्य गङ्गामनु तां महानदीं चमूं विधानैः परिबर्हशोभिनीम् ।
उवास रामस्य तदा महात्मनो विचिन्तमानो भरतो निवर्तनम् ।।

ततो निविष्टां ध्वजिनीं गङ्गामन्वाश्रितां नदीम् ।
निषादराजो दृष्ट्वैव ज्ञातीन् स परितोऽब्रवीत् ।।

भर्ता चैव सखा चैव रामो दाशरथिर्मम ।
तस्यार्थकामाः संनद्धा गङ्गानूपेऽत्र तिष्ठत ।।

यदि तुष्टस्तु भरतो रामस्येह भविष्यति ।
इयं स्वस्तिमती सेना गङ्गामद्य तरिष्यति ।।

तमायान्तं तु सम्प्रेक्ष्य सूतपुत्रःप्रतापवान् ।
भरतायाचचक्षेऽथ समयज्ञो विनीतवत् ।।

एषः ज्ञातिसहस्रेण स्थपतिः परिवारितः ।
कुशलो दण्डकारण्ये वृद्धो भ्रातुश्च ते सखा ।।

तस्मात् पश्यतु काकुत्स्थ त्वां निषादाधिपो गुहः ।
असंशयं विजानीते यत्र तौ रामलक्ष्मणौ ।।

एतत्तु वचनं श्रुत्वा सुमन्त्राद् भरतः शुभम् ।
उवाच वचनं शीघ्रं गुहः पश्यतु मामिति ।।

लब्ध्वानुज्ञां सम्प्रहृष्टो ज्ञातिभिः परिवारितः ।
आगम्य भरतं प्रह्वो गुहो वचनमब्रवीत् ।। 84.15

कच्चिन्न दुष्टो व्रजसि रामस्याक्लिष्टकर्मणः ।
इयं ते महती सेना शङ्कां जनयतीव मे ।।

तमेवमभिभाषन्तमाकाश इव निर्मलः ।
भरतः श्लक्ष्णया वाचा गुहं वचनमब्रवीत् ।।

तं निवर्तयितुं यामि काकुत्स्थं वनवासिनम् ।
बुद्धिरन्या न मे कार्या गुह सत्यं ब्रवीमि ते ।।

स तु संहृष्टवदनः श्रुत्वा भरतभाषितम् ।
पुनरेवाब्रवीत् वाक्यं भरतं प्रति हर्षितः ।।

धन्यस्त्वं न त्वया तुल्यं पश्यामि जगतीतले ।
अयत्नादागतं राज्यं यस्त्वं त्यक्तुमिहेच्छसि ।।

शाश्वती खलु ते कीर्तिर्लोकाननुचरिष्यति ।
यस्त्वं कृच्छ्रगतं रामं प्रत्यानयितुमिच्छसि ।।

आचचक्षेऽथ सद्भावं लक्ष्मणस्य महात्मनः ।
भरतायाप्रमेयस्य गुहो गहनगोचरः ।।

तं जाग्रतं गुणैर्युक्तं वरचापेषुधारिणम् ।
भ्रातृगुप्त्यर्थमत्यन्तमहं लक्ष्मणमब्रुवम् ।।

नहि रामात् प्रियतरो ममास्ति भुवि कश्चन ।
मोत्सुको भूर्ब्रवीम्येतदथ सत्यं तवाग्रतः ।।

कथं दाशरथौ भूमौ शयाने सह सीतया ।
शक्या निद्रा मया लब्धुं जीवितानि सुखानि वा ।। 86.10

अपि सत्यप्रतिज्ञेन सार्धं कुशलिना वयम् ।
निकृते समये ह्यस्मिन् सुखिताः प्रविशेमहि ।।

परिदेवयमानस्य तस्यैवं हि महात्मनः ।
तिष्ठतो राजपुत्रस्य शर्वरी सात्यवर्तत ।।

गुहस्य वचनं श्रुत्वा भरतो भृशममप्रियम् ।
ध्यानं जगाम तत्रैव यत्र तच्छ्रुतमप्रियम् ।।

प्रत्याश्वस्य मुहूर्तं तु कालं परमदुर्मनाः ।
ससाद सहसा तोत्रैर्हृदि विद्ध इव द्विपः ।।

ततः सर्वाः समापेतुर्मातरो भरतस्य ताः ।
उपवासकृशा दीना भर्तृर्व्यसनकर्शिताः ।।

व्युष्य रात्रिं तु तत्रैव गङ्गाकूले स राघवः ।
काल्यमुत्थाय शत्रुघ्नं इदं वचनमब्रवीत् ।।

शत्रुघ्नोत्तिष्ठ किं शेते निषादाधिपतिं गुहम् ।
शीघ्रमानय भद्रं ते तारयिष्यति वाहिनीम् ।।

जागर्मि नाहं स्वपिमि तथैवार्यं विचिन्तयन् ।
इत्येवमब्रवीद् भ्राता शत्रुघ्नो विप्रचोदितः ।।

ते तथोक्ताः समुत्थाय त्वरिता राजशासनात् ।
पञ्च नावां शतान्येव समानिन्युः समन्ततः ।।

ततः स्वस्तिकविज्ञेयां पाण्डुकम्बलसंवृताम् ।
सनन्दिघोषां कल्याणीं गुहो नावमुपाहरत् ।। 89.12

तामारुरोह भरतः शत्रुघ्नश्च महाबलः ।
कौसल्या च सुमित्रा च याश्चान्या राजयोषितः ।।

आश्वासयित्वा स चमूं महात्मा निवेशयित्वा च यथोपजोषम् ।
द्रष्टुं भरद्वाजमृषिप्रवर्यमृत्विक्सदस्यैर्भरतः प्रतस्थे ।।

समागम्य वसिष्ठेन भरतेनाभिवादितः ।
अबुध्यत महातेजाः सुतं दशरथस्य तम् ।।

ताभ्यामर्घ्यं च पाद्यं च दत्वा पश्चात्फलानि च ।
आनुपूर्व्याच्च धर्मज्ञः पप्रच्छ कुशलं कुले ।।

कच्चिन्न तस्यापापस्य पापं कर्तुमिहेच्छसि ।
अकण्टकं भोक्तुमना राज्यं तस्यानुजस्य च ।।

एवमुक्तो भरद्वाजं भरतः प्रत्युवाच ह ।
पर्यश्रुनयनो दुःखाद् वाचा संसज्जमानया ।।

हतोऽस्मि यदि मामेवं भगवानपि मन्यते ।
मत्तो न दोषमाशङ्के मैवं मामनुशाधि हि ।।

अहं तु तं नरव्याघ्रमुपयातः प्रसादकः ।
प्रतिनेतुमयोध्यायां पादौ चास्याभिनन्दितुम् ।।
उवाच तं भरद्वाजः प्रसादाद् भरतं वचः ।।

सेनायास्तु तवैवास्याः कर्तुमिच्छामि भोजनम् ।
मम प्रीतिर्यथारूपा त्वमर्हो मनुजर्षभ ।।

आनीयतामितः सेनेत्याज्ञप्तः परमर्षिणा ।
तथानुचक्रे भरतः सेनायाः समुपागमत् ।। 91.10

ततो भुक्तवतां तेषां तदन्नममृतोपमम् ।
दिव्यानुद्वीक्ष्य भक्ष्यांस्तानभवद्भक्षणे मतिः ॥

पुष्पध्वजवतीः पूर्णाः शुक्लस्यान्नस्य चाभितः ।
ददृशुर्विस्मितास्तत्र नरा लौहीः सहस्रशः ॥

इत्येवं रममाणानां देवानामिव नन्दने ।
भरद्वाजाश्रमे रम्ये सा रात्रिर्व्यवर्तत ॥

ततस्तां रजनीं व्युष्य भरतः सपरिच्छदः ।
कृतातिथ्यो भरद्वाजं कामादभिजगाम ह ॥

सुखोषितोऽस्मि भगवन् समग्रबलवाहनः ।
बलवत्तर्पितश्चाहं बलवान् भगवंस्त्वया ॥

आश्रमं तस्य धर्मज्ञ धार्मिकस्य महात्मनः ।
आचक्ष्व कतमो मार्गः कियानिति च शंस मे ॥

इति पृष्टस्तु भरतं भ्रातुर्दर्शनलालसम् ।
प्रत्युवाच महातेजा भरद्वाजो महातपाः ॥

भरतार्धतृतीयेषु योजनेष्वजने वने ।
चित्रकूटगिरिस्तत्र रम्यनिर्झरकाननः ॥

अनन्तरं तत्सरितश्चित्रकूटं च पर्वतम् ।
तयोः पर्णकुटीं तात तत्र तौ वसतो ध्रुवम् ॥

विशेषं ज्ञातुमिच्छामि मातॄणां तव राघव ।
एवमुक्तस्तु भरतो भरद्वाजेन धार्मिकः ॥ 92.19

कौसल्या सुषुवे रामं धातारमदितिर्यथा ।
इयं सुमित्रा दुःखार्ता देवी राज्ञश्च मध्यमा ।।

एतस्यास्तौ सुतौ देव्याः कुमारौ देववर्णिनौ ।
उभौ लक्ष्मणशत्रुघ्नौ वीरौ सत्यपराक्रमौ ।।

ममैतां मातरं विद्धि नृशंसां पापनिश्चयाम् ।
यतोमूलं हि पश्यामि व्यसनं महदात्मनः ।।

भरद्वाजो महर्षिस्तं ब्रुवन्तं भरतं तदा ।
प्रत्युवाच महाबुद्धिरिदं वचनमर्थवित् ।।

न दोषेणावगन्तव्या कैकेयी भरत त्वया ।
रामप्रव्राजनं ह्येतत् सुखोदर्कं भविष्यति ।।

देवानां दानवानां च ऋषीणां भावितात्मनाम् ।
हितमेव भविष्यद्धि रामप्रव्राजनादिह ।।

अभिवाद्य तु संसिद्धः कृत्वा चैनं प्रदक्षिणम् ।
आमन्त्र्य भरतः सैन्यं युज्यतामिति चाब्रवीत् ।।

चन्द्रार्कतरुणाभासां नियुक्तां शिबिकां शुभाम् ।
आस्थाय प्रययौ श्रीमान् भरतः सपरिच्छदः ।।

सा सम्प्रहृष्टद्विपवाजियूथा वित्रासयन्ती मृगपक्षिसंघान् ।
महद्वनं तत्प्रविगाहमाना रराज सेना भरतस्य तत्र ।।

व्यवस्थिता या भरतेन सा चमूर्निरीक्षमाणापि च भूमिमग्रतः ।
बभूव हृष्टा न चिरेण जानती प्रियस्य रामस्य समागमं तदा ।। 93.27

अथ दाशरथिश्चित्रं चित्रकूटमदर्शयत् ।
भार्याममरसंकाशः शचीमिव पुरंदरः ।।

अनेन वनवासेन मम प्राप्तं फलद्वयम् ।
पितुश्चानृण्यता धर्मे भरतस्य प्रियं तथा ।।

इमं तु कालं वनिते विजह्रिवांस्त्वया च सीते सह लक्ष्मणेन ।
रतिं प्रपत्स्ये कुलधर्मवर्धिनीं सतां पथि स्वैर्नियमैः परैः स्थितः ।।

लक्ष्मणश्चैव धर्मात्मा मन्निदेशे व्यवस्थितः ।
त्वं चानुकूला वैदेहि प्रीतिं जनयती मम ।।

इतीव रामो बहुसंगतं वचः प्रिया सहायः सरितं प्रतिब्रुवन् ।
चचार रम्यं नयनाञ्जनप्रभं स चित्रकूटं रघुवंशवर्धनः ।।

तथा तत्रासतस्तस्य भरतस्योपयायिनः ।
सैन्यरेणुश्च शब्दश्च प्रादुरास्तां नभस्पृशौ ।।

तांश्च विप्रद्रुतान् दृष्ट्वा तं च श्रुत्वा महास्वनम् ।
उवाच रामः सौमित्रिं लक्ष्मणं दीप्ततेजसम् ।।

हन्त लक्ष्मण पश्येह सुमित्रा सुप्रजास्त्वया ।
भीमस्तनितगम्भीरं तुमुलः श्रूयते स्वनः ।।

सुदुश्चरो गिरिश्चायं पक्षिणामपि लक्ष्मण ।
सर्वमेतद् यथातत्वमभिज्ञातुमिहार्हसि ।।

स लक्ष्मणः संत्वरितः सालमारुह्य पुष्पितम् ।
प्रेक्षमाणो दिशः सर्वाः पूर्वां दिशमवैक्षत ।। 96.11

तामश्वरथसम्पूर्णां रथध्वजविभूषिताम् ।
शशंस सेनां रामाय वचनं चेदमब्रवीत् ।।

सम्पन्नं राज्यमिच्छंस्तु व्यक्तं प्राप्याभिषेचनम् ।
आवां हन्तुं समभ्येति कैकेय्या भरतः सुतः ।।

सुसंरब्धं तु भरतं लक्ष्मणं क्रोधमूर्च्छितम् ।
रामस्तु परिसान्त्व्याथ वचनं चेदमब्रवीत् ।।

मन्येऽहमागतोऽयोध्यां भरतो भ्रातृवत्सलः ।
मम प्राणैः प्रियतरः कुलधर्ममनुस्मरन् ।।

अम्बां च कैकयीं रुष्य भरतश्चाप्रियं वदन् ।
प्रसाद्य पितरं श्रीमान् राज्यं मे दातुमागतः ।।
इतीव रामो धर्मात्मा सौमित्रिं तमुवाच ह ।।

निवेश्य सेनां तु विभुः पद्भ्यां पादवतां वरः ।
अभिगन्तुं स काकुत्स्थमियेष गुरुवर्तकम् ।।

स चित्रकूटे तु गिरौ निशम्य रामाश्रमं पुण्यजनोपपन्नम् ।
गुहेन सार्धं त्वरितो जगाम पुनर्निवेश्यैव चमूं महात्मा ।।

अथ गत्वा मुहूर्तं तु चित्रकूटं स राघवः ।
मन्दाकिनीमनुप्राप्तस्तं जनं चेदमब्रवीत् ।।

प्रागुदक्प्रवणां वेदिं विशालां दीप्तपावकाम् ।
ददर्श भरतस्तत्र पुण्यां रामनिवेशने ।।

निरीक्ष्य स मुहूर्तं तु ददर्श भरतो गुरुम् ।
उटजे राममासीनं जटामण्डलधारिणम् ।। 92.25



इत्येवं विलपन् दीनं प्रस्विन्नमुखपङ्कजः ।
पादावप्राप्य रामस्य पपात भरतो रुदन् ॥

उपविष्टं महाबाहुं ब्रह्माणमिव शाश्वतम् ।
स्थण्डिले दर्भसंस्तीर्णे सीतया लक्ष्मणेन च ।।

तं दृष्ट्वा भरतः श्रीमान् शोकमोहपरिप्लुतः ।
अभ्यधावत धर्मात्मा भरतः केकयीसुतः ।।

दृष्ट्वैव विललापार्तो बाष्पसंदिग्धया गिरा ।
अशक्नुवन् वारयितुं धैर्याद् वचनमब्रुवन् ।।

अधारयद् यो विविधाश्चित्राः सुमनसः सदा ।
सोऽयं जटाभारमिमं सहते राघवः कथम् ।।

चन्दनेन महार्हेण यस्याङ्गमुपसेवितम् ।
मलेन तस्याङ्गमिदं कथमार्यस्य सेव्यते ।।

इत्येवं विलपन् दीनः प्रस्विन्नमुखपङ्कजः ।
पादावप्राप्य रामस्य पपात भरतो रुदन् ।।

शत्रुघ्नश्चापि रामस्य ववन्दे चरणौ रुदन् ।
तावुभौ च समालिङ्ग्य रामोऽप्यश्रूण्यवर्तयत् ।।

जटिलं चीरवसनं प्राञ्जलिं पतितं भुवि ।
ददर्श रामो दुर्दर्शं युगान्ते भास्करं यथा ।।

कथञ्चिदभिविज्ञाय विवर्णवदनं कृशम् ।
भ्रातरं भरतं रामः परिजग्राह पाणिना ।।

क्व नु तेऽभूत् पिता तात यदरण्यं त्वमागतः ।
न हि त्वं जीवतस्तस्य वनमागन्तुमर्हसि ।। 100.4

तात कच्चिच्च कौसल्या सुमित्रा च प्रजावती ।
सुखिनी कच्चिदार्या च देवी नन्दति कैकेयी ।।

किमेतदिच्छेयमहं श्रोतुं प्रव्याहृतं त्वया ।
यस्मात् त्वमागतो देशमिमं चीरजटाजिनी ।।

इत्युक्तः केकयीपुत्रः काकुत्स्थेन महात्मना ।
प्रगृह्य बलवद् भूयः प्राञ्जलिर्वाक्यमब्रवीत् ।।

आर्य तातः परित्यज्य कृत्वा कर्म सुदुष्करम् ।
गतः स्वर्गं महाबाहुः पुत्रशोकाभिपीडितः ।।

स्त्रिया नियुक्तः कैकेय्या मम मात्रा परंतप ।
चकार सा महत्पापमिदमात्मयशोहरम् ।।

तस्य मे दासभूतस्य प्रसादं कर्तुमर्हसि ।
अभिषिञ्चस्व चाद्यैव राज्येन मघवानिव ।।

एभिश्च सचिवैः सार्धं शिरसा याचितो मया ।
भ्रातुः शिष्यस्य दासस्य प्रसादं कर्तुमर्हसि ।।

एवमुक्त्वा महाबाहुः सबाष्पः कैकयीसुतः ।
रामस्य शिरसा पादौ जग्राह भरतः पुनः ।।

तं मत्तमिव मातङ्गं निःश्वसन्तं पुनःपुनः ।
भ्रातरं भरतं रामः परिष्वज्येदमब्रवीत् ।।

न दोषं त्वयि पश्यामि सूक्ष्ममप्यरिसूदन ।
न चापि जननीं बाल्यात् त्वं विगर्हितुमर्हसि ।। 101.17

यावत्पितरि धर्मज्ञ गौरवं लोकसत्कृते ।
तावद् धर्मकृतां श्रेष्ठ जनन्यामपि गौरवम् ।।

एताभ्यां धर्मशीलाभ्यां वनं गच्छेति राघव ।
मातापितृभ्यामुक्तोऽहं कथमन्यत्समाचरे ।।

त्वया राज्यमयोध्यायां प्राप्तव्यं लोकसत्कृतम् ।
वस्तव्यं दण्डकारण्ये मया वल्कलवाससा ।।

यदब्रवीन्मां नरलोकसत्कृतः पिता महात्मा विबुधाधिपोपमः ।
तदेव मन्ये परमात्मनो हितं न सर्वलोकेश्वरभावमव्ययम् ।।

रामस्य वचनं श्रुत्वा भरतः प्रत्युवाच ह ।
किं मे धर्माद् विहीनस्य राजधर्मः करिष्यति ।।

राजानं मानुषं प्राहुर्देवत्वे सम्मतो मम ।
यस्य धर्मार्थसहितं वृत्तमाहुरमानुषम् ।।

उत्तिष्ठ पुरुषव्याघ्र क्रियतामुदकं पितुः ।
अहं चायं च शत्रुघ्नः पूर्वमेव कृतोदकौ ।।

प्रियेण किल दत्तं हि पितृलोकेषु राघव ।
अक्षयं भवतीत्याहुर्भवांश्चैव पितुःप्रियः ।।

त्वामेव शोचंस्तव दर्शनेप्सुस्त्वय्येव सक्तामनिवर्त्य बुद्धिम् ।
त्वया विहीनस्तव शोकरुग्णस्त्वां संस्मरन्नेव गतः पिता ते ।।

स रामः स्वर्गतं श्रुत्वा पितरं पृथिवीपतिम् ।
उवाच भरतं वाक्यं धर्मात्मा धर्मसंहितम् ।। 103.7

अहो भरत सिद्धार्थो येन राजा त्वयाऽनघ ।
शत्रुघ्नेन च सर्वेषु प्रेतकृत्येषु सत्कृतः ।।

ततो बहुगुणं तेषां बाष्पं नेत्रेष्वजायत ।
तथा ब्रुवति काकुत्स्थे कुमाराणां यशस्विनाम् ।।

ततस्ते भ्रातरः सर्वे भृशमाश्वास्य दुःखितम् ।
अब्रुवन् जगती भर्तुः क्रियतामुदकं पितुः ।।

ततः पर्णकुटीद्वारमासाद्य जगतीपतिः ।
परिजग्राह पाणिभ्यामुभौ भरतलक्ष्मणौ ।।

महाबलानां रुदतां कुर्वतामुदकं पितुः ।
विज्ञाय तुमुलं शब्दं त्रस्ता भरतसैनिकाः ।।

अचिरप्रोषितं रामं चिरविप्रोषितं यथा ।
द्रष्टुकामो जनः सर्वो जगाम सहसाश्रमम् ।।

तान्नरान् बाणपूर्णाक्षान् समीक्ष्याथ सुदुःखितान् ।
पर्यष्वजत धर्मज्ञः पितृवन्मातृवच्च सः ।।

स तत्र कांश्चित् परिषस्वजे नरान् नराश्च केचित्तु तमभ्यवादयन् ।
चकार सर्वान् सवयस्य बान्धवान् यथार्हमासाद्य तदा नृपात्मजः ।।

वसिष्ठः पुरतः कृत्वा दारान् दशरथस्य च ।
अभिचक्राम तं देशं रामदर्शनतर्षितः ।।

राजपत्न्यश्च गच्छन्त्यो मन्दं मन्दाकिनीं प्रति ।
दद‍ृशुस्तत्र तत्तीर्थं रामलक्ष्मणसेवितम् ।। 104.2

तं भूमौ पितुरार्तेन न्यस्तं रामेण वीक्ष्य सा ।
उवाच देवी कौसल्या सर्वा दशरथस्त्रियः ।।

तस्य देवसमानस्य पार्थिवस्य महात्मनः ।
नैतदौपयिकं मन्ये भुक्तभोगस्य भोजनम् ।।

चतुरन्तां महीं भुक्त्वा महेन्द्रसदृशो भुवि ।
कथमिङ्गुदिपिण्याकं स भुङ्क्ते वसुधाधिपः ।।

एवमार्ता सपत्न्यस्ता जग्मुराश्वास्य तां तदा ।
ददृशुश्चाश्रमे राम स्वर्गच्च्युतमिवामरम् ।।

तं भोगैः सम्परित्यक्तं रामं सम्प्रेक्ष्य मातरः ।
आर्ता मुमुचुरश्रूणि सस्वरं शोककर्शिताः ।।

तासां रामः समुत्थाय जग्राह चरणाम्बुजान् ।
मातॄणां मनुजव्याघ्रः सर्वासां सत्यसंगरः ।।

सीतापि चरणांस्तासामुपसंगृह्य दुःखिता ।
श्वश्रूणामश्रुपूर्णाक्षी सा बभूवाग्रतःस्थिता ।।

पुरोहितस्याग्निसमस्य तस्य वै बृहस्पतेरिन्द्र इवाऽमराधिपः ।
प्रगृह्य पादौ सुसमृद्धतेजसः सहैव तेनोपविवेश राघवः ।।

तूष्णीं ते समुपासीना न कश्चित्किंचिदब्रवीत् ।
भरतस्तु सुहृन् मध्ये रामं वचनमब्रवीत् ।।

सान्त्विता मामिका माता दत्तं राज्यमिदं मम ।
तद्ददामि तवैवाहं भुङ्क्ष्व राज्यमकण्टकम् ।। 105.4

तमेवं साध्वनुमन्यन्त नागरा विविधा जनाः ।
भरतस्य वचः श्रुत्वा रामं प्रत्यनुयाचतः ।।

तमेवं दुःखितं प्रेक्ष्य विलपन्तं यशस्विनम् ।
रामः कृतात्मा भरतं समाश्वासयदात्मवान् ।।

आत्मानमनुशोच त्वं किमन्यमनुशोचसि ।
आयुस्तु हीयते यस्य स्थितस्यास्य गतस्य च ।।

धर्मात्मा सुशुभैः कृत्स्नैः क्रतुभिश्चाप्तदक्षिणैः ।
धूतपापो गतः स्वर्गं पिता नः पृथिवीपतिः ।।

आयुरुत्तममासाद्य भोगानपि च राघवः ।
न स शोच्यः पिता तात स्वर्गतः सत्कृतः सताम् ।।

स स्वस्थो भव मा शोको यात्वा चावस तां पुरीम् ।
तथा पित्रा नियुक्तोऽस्मि वशिना वदतां वर ।।

न मया शासनं तस्य त्यक्तुं न्याय्यमरिंदम ।
स त्वयाऽपि सदा मान्यः स वै बन्धुः स नः पिता ।।

तद्वचः पितुरेवाहं सम्मतं धर्मचारिणाम् ।
कर्मणा पालयिष्यामि वनवासेन राघव ।।

इत्येवमुक्त्वा वचनं महात्मा पितुर्निर्देशप्रतिपालनार्थम् ।
यवीयसं भ्रातरमर्थवच्च प्रभुर्मुहूर्ताद् विरराम रामः ।।

तथाऽभिरामो भरतेन ताम्यता प्रसाद्यमानः शिरसा महीपतिः ।
न चैव चक्रे गमनाय सत्त्ववान् मतिं पितुस्तद् वचने प्रतिष्ठितः ।। 106.33

पुनरेवं ब्रुवाणं तं भरतं लक्ष्मणाग्रजः ।
प्रत्युवाच ततः श्रीमान् ज्ञातिमध्ये सुसत्कृतः ।।

तव राज्यं नरव्याघ्र मम प्रव्राजनं तथा ।
तच्च राजा तथा तस्यै नियुक्तः प्रददौ वरम् ।।

तेन पित्राहमप्यत्र नियुक्तः पुरुषर्षभ ।
चतुर्दश वने वासं वर्षाणि वरदानिकम् ।।

सोऽयं वनमिदं प्राप्तो निर्जनं लक्ष्मणान्वितः ।
सीतया चाऽप्रतिद्वन्द्वः सत्यवादे स्थितः पितुः ।।

ऋणान्मोचय राजानं मत्कृते भरत प्रभुम् ।
पितरं त्राहि धर्मज्ञ मातरं चाभिनन्दय ।।

अयोध्यां गच्छ भरत प्रकृतीरुपरञ्जय ।
शत्रुघ्नसहितो वीर सह सर्वैर्द्विजातिभिः ।।

प्रवेक्ष्ये दण्डकारण्यमहमप्यविलम्बयन् ।
आभ्यां तु सहितो वीर वैदेह्या लक्ष्मणेन च ।।

वसिष्ठः स तदा राममुक्त्वा राजपुरोहितः ।
अब्रवीद् धर्मसंयुक्तं पुनरेवापरं वचः ।।

पिता ह्येनं जनयति पुरुषं पुरुषर्षभ ।
प्रज्ञां ददाति चाचार्यस्तस्मात् स गुरुरुच्यते ।।

स तेऽहं पितुराचार्यस्तव चैव परंतप ।
मम त्वं वचनं कुर्वन् नातिवर्तेः सतां गतिम् ।। 111.4

भरतस्य वचः कुर्वन् याचमानस्य राघव ।
आत्मानं नातिवर्तेस्त्वं सत्यधर्मपराक्रम ।।

एवं मधुरमुक्तः स गुरुणा राघवः स्वयम् ।
प्रत्युवाच समासीनं वसिष्ठं पुरुषर्षभः ।।

स हि राजा दशरथः पिता जनयिता मम ।
आज्ञापयन्मां यत्तस्य न तन्मिथ्या भविष्यति ।।

एवमुक्तस्तु रामेण भरतः प्रत्यनन्तरम् ।
उवाच विपुलोरस्कः सूतं परमदुर्मनाः ।।

इह तु स्थण्डिले शीघ्रं कुशानास्तर सारथे ।
आर्यं प्रत्युपवेक्ष्यामि यावन्मे सम्प्रसीदति ।।

स तु राममवेक्षन्तं सुमन्त्रं प्रेक्ष्य दुर्मनाः ।
कुशोत्तरमुपस्थाप्य भूममेवास्थितः स्वयम् ।।

तमुवाच महातेजा रामो राजर्षिसत्तमः ।
उत्तिष्ठ त्वं महाबाहो मां च स्पृश तथोदकम् ।।

अथोत्थाय जलं स्पृष्ट्वा भरतो वाक्यमब्रवीत् ।
शृण्वन्तु मे परिषदो मन्त्रिणः शृणुयुस्तथा ।।

न याचे पितरं राज्यं नानुशासामि मातरम् ।
एवं परमधर्मज्ञं नानुजानामि राघवम् ।।

यदि त्ववश्यं वस्तव्यं कर्तव्यं च पितुर्वचः ।
अहमेव निवत्स्यामि चतुर्दश वने समाः ।। 111.26

उपाधिर्न मया कार्यो वनवासे जुगुप्सितः ।
युक्तमुक्तं च कैकेय्या पित्रा मे सुकृतं कृतम् ।।

अनेन धर्मशीलेन वनात् प्रत्यागतः पुनः ।
भ्रात्रा सह भविष्यामि पृथिव्याः पतिरुत्तमः ।।

तमप्रतिमतेजोभ्यां भ्रातृभ्यां रोमहर्षणम् ।
विस्मिता संगमं प्रेक्ष्य समुपेता महर्षयः ।।

सदार्यौ राजपुत्रौ द्वौ धर्मज्ञौ धर्मविक्रमौ ।
श्रुत्वा वयं हि सम्भाषामुभयोः स्पृहयामहे ।।

सदा नृणामिमं रामं वयमिच्छामहे पितुः ।
अनृणत्वाच्च कैकेय्याः स्वर्गं दशरथो गतः ।।

ह्लादिस्तेन वाक्येन शुशुभे शुभदर्शनः ।
रामः संहृष्टवदनस्तानृषीनभ्यपूजयत् ।।

त्रस्तगात्रस्तु भरतः स वाचा सज्जमानया ।
कृताञ्जलिरिदं वाक्यं राघवं पुनरब्रवीत् ।।

रक्षितुं सुमहद् राज्यमहमेकस्तु नोत्सहे ।
पौरजानपदांश्चापि रक्तान् रञ्जयितुं तदा ।।

एवमुक्त्वाऽपतद् भ्रातुः पादयोर्भरतस्तदा ।
भृशं सम्प्रार्थयामास राघवेऽतिप्रियं वदन् ।।

लक्ष्मीश्चन्द्रादपेयाद्वा हिमवान् वा हिमं त्यजेत् ।
अतीयात्सागरो वेलां न प्रतिज्ञामहं पितुः ।। 112.19

कामाद्वा तात लोभाद् वा मात्रा तुभ्यमिदं कृतम् ।
न तन्मनसि कर्तव्यं वर्तितव्यं च मातृवत् ।।

एवं ब्रुवाणं भरतः कौसल्यासुतमब्रवीत् ।
तेजसाऽऽदित्यसंकाशं प्रतिपच्चन्द्रदर्शनम् ।।

अधिरोहार्य पादाभ्यां पादुके हेमभूषिते ।
एते हि सर्वलोकस्य योगक्षेमं विधास्यतः ।।

सोऽधिरुह्य नरव्याघ्रः पादुके व्यवमुच्य च ।
प्रायच्छत्सुमहातेजा भरताय महात्मने ।।

स पादुके सम्प्रणम्य रामं वचनमब्रवीत् ।
चतुर्दश हि वर्षाणि जटाचीरधरोह्यहम् ।।

फलमूलाशनो वीर भवेयं रघुनन्दन ।
तवागमनमाकाङ्क्षन् वसन् वै नगराद्बहिः ।।

तव पादुकयोर्न्यस्य राज्यतन्त्रं परन्तप ।
चतुर्दश हि सम्पूर्णे वर्षेऽहनि रघूत्तम ।।

न द्रक्ष्यामि यदि त्वां तु प्रवेक्ष्यामि हुताशनम् ।
तथेति च प्रतिज्ञाय तं परिष्वज्य सादरम् ।।

शत्रुघ्नं च परिष्वज्य वचनं चेदमब्रवीत् ।
मातरं रक्ष कैकेयीं मा रोषं कुरु तां प्रति ।।

मया च सीतया चैव शप्तोऽसि रघुनन्दन ।
इत्युक्त्वाश्रुपरीताक्षो भ्रातरं विससर्ज ह ।। 112.28

अथानुपूर्व्या प्रतिपूज्य तं जनं गुरूंश्च मन्त्रीन्प्रकृतीस्तथानुजौ ।
व्यसर्जयद् राघववंशवर्धनः स्थितः स्वधर्मे हिमवानिवाचलः ।।

तं मातरो बाष्पगृहीतकण्ठ्यो दुःखेन नामन्त्रयितुं हि शेकुः ।
स चैव मातॄरभिवाद्य सर्वा रुदन् कुटीं स्वां प्रविवेश रामः ।।

ततः शिरसि कृत्वा तु पादुके भरतस्तदा ।
आरुरोह रथं हृष्टः शत्रुघ्नसहितस्तदा ।।

मन्दाकिनीं नदीं रम्यां प्राङ्मुखास्ते ययुस्तदा ।
प्रदक्षिणं च कुर्वाणश्चित्रकूटं महागिरिम् ।।

स तमाश्रममागम्य भरद्वाजस्य वीर्यवान् ।
अवतीर्य रथात् पादौ ववन्दे कुलनन्दनः ।।

ततो हृष्टो भरद्वाजो भरतं वाक्यमब्रवीत् ।
अपि कृत्यं कृतं तात रामेण च समागतम् ।।

स याच्यमानो गुरुणा मया च दृढविक्रमः ।
राघवः परमप्रीतो वसिष्ठं वाक्यमब्रवीत् ।।

पितुः प्रतिज्ञां तामेव पालयिष्यामि तत्त्वतः ।
चतुर्दश हि वर्षाणि या प्रतिज्ञा पितुर्मम ।।

निवृत्तोऽहमनुज्ञातो रामेण सुमहात्मना ।
अयोध्यामेव गच्छामि गृहीत्वा पादुके शुभे ।।

एतच्छ्रुत्वा शुभं वाक्यं भरतस्य महात्मनः ।
भरद्वाजः शुभतरं मुनिर्वाक्यमुदाहरत् ।। 113.15

अनृणः स महाबाहुः पिता दशरथस्तव ।
यस्य त्वमीदृशः पुत्रो धर्मात्मा धर्मवत्सलः ।।

ततः प्रदक्षिणं कृत्वा भरद्वाजं पुनःपुनः ।
भरतस्तु ययौ श्रीमानयोध्यां सह मन्त्रिभिः ।।

ततो निक्षिप्य मातॄस्ता अयोध्यायां दृढव्रतः ।
भरतः शोकसंतप्तो गुरूनिदमथाब्रवीत् ।।

नन्दिग्रामं गमिष्यामि सर्वानामन्त्रयेऽत्र वः ।
तत्र दुःखमिदं सर्वं सहिष्ये राघवं विना ।।

एतच्छ्रुत्वा शुभं वाक्यं भरतस्य महात्मनः ।
अब्रुवन् मन्त्रिणः सर्वे वसिष्ठश्च पुरोहितः ।।

सुभृशं श्लाघनीयं च यदुक्तं भरत त्वया ।
वचनं भ्रातृवात्सल्यादनुरूपं तवैव तत् ।।

प्रहृष्टवदनः सर्वा मातॄः समभिभाष्य च ।
आरुरोह रथं श्रीमान् शत्रुघ्नेन समन्वितः ।।

आरुह्य तु रथं क्षिप्रं शत्रुघ्नभरतावुभौ ।
ययतुः परमप्रीतौ वृतौ मन्त्रिपुरोहितैः ।।

अग्रतो गुरवः सर्वे वसिष्ठप्रमुखा द्विजाः ।
प्रययुः प्राङ्मुखाः सर्वे नन्दिग्रामो यतो भवेत् ।।

रथस्थः स तु धर्मात्मा भरतो भ्रातृवत्सलः ।
नन्दिग्रामं ययौ तूर्णं शिरस्याधाय पादुके ।। 115.12



पादुके त्वभिषिच्याथ नन्दिग्रामेऽवसत्तदा ।
सवालव्यजनं छत्रं धारयामास स स्वयम् ॥

भरतस्तु ततः क्षिप्रं नन्दिग्रामं प्रविश्य सः ।
अवतीर्य रथात्तूर्णं गुरूनिदमभाषत ।।

एतद् राज्यं मम भ्रात्रा दत्तं संन्यासमुत्तमम् ।
योगक्षेमवहे चेमे पादुके हेमभूषिते ।।

छत्रं धारयत क्षिप्रमार्यपादाविमौ मतौ ।
आभ्यां राज्ये स्थितो धर्मः पादुकाभ्यां गुरोर्मम ।।

भ्रात्रा तु मयि संन्यासो निक्षिप्तः सौहृदादयम् ।
तमिमं पालयिष्यामि राघवागमनं प्रति ।।

ततो निक्षिप्तभारोऽहं राघवेण समागतः ।
निवेद्य गुरवे राज्यं भजिष्ये गुरुवर्तिताम् ।।

राघवाय च संन्यासं दत्वेमे वरपादुके ।
राज्यं चेदमयोध्यायां च धूतपापो भवाम्यहम् ।।

स वल्कलजटाधारी मुनिवेषधरः प्रभुः ।
नन्दिग्रामेऽवसद् धीरः ससैन्यो भरतस्तदा ।।

रामागमनमाकाङ्क्षन् भरतो भ्रातृवत्सलः ।
भ्रातुर्वचनकारी च प्रतिज्ञापारगस्तदा ।।

पादुके त्वभिषिच्याथ नन्दिग्रामेऽवसत्तदा ।
स वालव्यजनं छत्रं धारयामास स स्वयम् ।
भरतः शासनं सर्वं पादुकाभ्यां निवेदयन् ।।

तदा हि यत्कार्यमुपैति किंचिदुपायनं चोपहृतं महार्हम् ।
स पादुकाभ्यां प्रथमं निवेद्य चकार पश्चाद् भरतो यथावत् ।। 115.27

राघवस्त्वपयातेषु सर्वेष्वनुचिन्तयन् ।
न तत्रारोचयद् वासं कारणैर्बहुभिस्तदा ।।

इह मे भरतो दृष्टो मातरश्च सनागराः ।
सा च मे स्मृतिरन्वेति तान्नित्यमनुशोचतः ।।

तस्मादन्यत्र गच्छाम इति संचिन्त्य राघवः ।
प्रातिष्ठत स वैदेह्या लक्ष्मणेन च संगतः ।।

सोऽत्रेराश्रममासाद्य तं ववन्दे महायशाः ।
तं चापि भगवानत्रिः पुत्रवत् प्रत्यपद्यत ।।

सौमित्रिं च महाभागां सीतां च समसान्त्वयत् ।
पत्नीं च तमनुप्राप्तां वृद्धामामन्त्र्य सत्कृताम् ।।

अनसूयां महाभागां तापसीं धर्मचारिणीम् ।
प्रतिगृह्णीष्व वैदेहीमब्रवीदृषिसत्तमः ।।

रामाय चाचचक्षे तां तापसीं धर्मचारिणीम् ।
दश वर्षाण्यनावृष्ट्या दग्धे लोके निरन्तरम् ।।

यया मूलफले सृष्टे जाह्नवी च प्रवर्तिता ।
उग्रेण तपसा युक्ता नियमैश्चाप्यलंकृता ।।

तामिमां सर्वभूतानां नमस्कार्यां तपस्विनीम् ।
अभिगच्छतु वैदेही वृद्धामक्रोधनां सदा ।।

एवं ब्रुवाणं तमृषिं तथेत्युक्त्वा स राघवः ।
सीतामालोक्य धर्मज्ञामिदं वचनमब्रवीत् ।। 117.14

अनसूयेति या लोके कर्मभिः ख्यातिमागता ।
तां शीघ्रमभिगच्छ त्वमभिगम्यां तपस्विनीम् ।।

सीता त्वेतद् वचः श्रुत्वा राघवस्य यशस्विनी ।
तामत्रिपत्नीं धर्मज्ञामभिचक्राम मैथिली ।।

शिथिलां वलितां वृद्धां जरापाण्डुरमूर्धजाम् ।
सततं वेपमानाङ्गीं प्रवाते कदलीमिव ।।

तां तु सीता महाभागामनसूयां पतिव्रताम् ।
अभ्यवादयदव्यग्रा स्वं नाम समुदाहरत् ।।

अभिवाद्य च वैदेही तापसीं तां दमान्विताम् ।
बद्धाञ्जलिपुटा हृष्टा पर्यपृच्छदनामयम् ।।

त्यक्त्वा ज्ञातिजनं सीते मानवृद्धिं च मानिनि ।
अवरुद्धं वने रामं दिष्ट्या त्वमनुगच्छसि ।।

त्वद्विधास्तु गुणैर्युक्ता दृष्टलोकपरावराः ।
स्त्रियः स्वर्गे चरिष्यन्ति यथा पुण्यकृतस्तथा ।।

तदेवमेतं त्वमनुव्रता सती पतिप्रधाना समयानुवर्तिनी ।
भव स्वभर्तुः सहधर्मचारिणी यशश्च धर्मं च ततः समाप्स्यसि ।।

सा त्वेवमुक्ता वैदेही त्वनसूयानसूयया ।
प्रतिपूज्य वचो मन्दं प्रवक्तुमुपचक्रमे ।।

पाणिप्रदानकाले च यत्पुरा त्वग्निसंनिधौ ।
अनुशिष्टं जनन्या मे वाक्यं तदपि मे धृतम् ।। 118.8

न विस्मृतं तु मे सर्वं वाक्यैः स्वैर्धर्मचारिणि ।
पतिशुश्रूषणान्नार्यास्तपो नान्यद् विधीयते ॥

वरिष्ठा सर्वनारीणामेषा च दिवि देवता ।
रोहिणी न विना चन्द्रं मुहूर्तमपि दृश्यते ॥

ततोऽनसूया संहृष्टा श्रुत्वोक्तं सीतया वचः ।
शिरसाऽऽघ्राय चोवाच मैथिलीं हर्षयन्त्युत ॥

इदं दिव्यं वरं माल्यं वस्त्रमभरणानि च ।
अङ्गरागं च वैदेहि महार्हमनुलेपनम् ॥

मया दत्तमिदं सीते तव गात्राणि शोभयेत् ।
अनुरूपमसंक्लिष्टं नित्यमेव भविष्यति ॥

सा वस्त्रमङ्गरागं च भूषणानि स्रजस्तथा ।
मैथिली प्रतिजग्राह प्रीतिदानमनुत्तमम् ॥

स्वयंवरे किल प्राप्ता त्वमनेन यशस्विना ।
राघवेणेति मे सीते कथा श्रुतिमुपागता ॥

तां कथां श्रोतुमिच्छामि विस्तरेण च मैथिलि ।
यथा भूतं च कार्त्स्न्येन तन्मे त्वं वक्तुमर्हसि ॥

एवमुक्ता तु सा सीता तापसीं धर्मचारिणीम् ।
श्रूयतामिति चोक्त्वा वै कथयामास तां कथाम् ॥

अनसूया तु धर्मज्ञा श्रुत्वा तां महतीं कथाम् ।
पर्यष्वजत् बाहुभ्यां शिरस्याघ्राय मैथिलीम् ॥ 119.1

व्यक्ताक्षरपदं चित्रं भाषितुं मधुरं त्वया ।
यथा स्वयंवरं वृत्तं तत्सर्वं च श्रुतं मया ।।

गम्यतामनुजानामि रामस्यानुचरी भव ।
कथयन्त्या हि मधुरं त्वयाहमपि तोषिता ।।

अलंकुरु च तावत्त्वं प्रत्यक्षं मम मैथिलि ।
प्रीतिं जनय मे वत्से दिव्यालंकारशोभिनी ।।

तथा तु भूषितां सीतां ददर्श वदतां वरः ।
राघवः प्रीतिदानेन तपस्विन्या जहर्ष च ।।

न्यवेदयत् ततः सर्वं सीता रामाय मैथिली ।
प्रीतिदानं तपस्विन्या वसनाभरणस्रजाम् ।।

ततःस शर्वरीं प्रीतः पुण्यां शशिनिभाननाम् ।
अर्चितस्तापसैः सर्वैरुवास रघुनन्दनः ।।

तावूचुस्ते वनचरास्तापसा धर्मचारिणः ।
वनस्य तस्य सञ्चारं राक्षसैः समभिप्लुतम् ।।

रक्षांसि पुरुषादानि नानारूपाणि राघव ।
वसन्त्यस्मिन् महारण्ये व्यालाश्च रुधिराशनाः ।।

उच्छिष्टं वा प्रमत्तं वा तापसं ब्रह्मचारिणम् ।
अदन्त्यस्मिन् महारण्ये तान् निवारय राघव ।।

इतीरितः प्राञ्जलिभिस्तपस्विभिर्द्विजैः कृतस्वस्त्ययनः परंतपः ।
वनं सभार्यः प्रविवेश राघवः सलक्ष्मणः सूर्य इवाभ्रमण्डलम् ।। 119.22

**।। इत्यार्षे श्रीमद् वाल्मीकिरामायणसंग्रहे**
**अयोध्याकाण्डम् सम्पूर्णम् ।।**

# ।। अरण्यकाण्डम् ।।

प्रविश्य तु महारण्यं दण्डकारण्यमात्मवान् ।
रामो ददर्श दुर्धर्षस्तापसाश्रममण्डलम् ।।

समिद्भिस्तोयकलशैः फलमूलैश्च शोभितम् ।
आरण्यैश्च महावृक्षैः पुण्यैः स्वादुफलैर्वृतम् ।।

ब्रह्मविद्भिर्महाभागैर्ब्राह्मणैरुपशोभितम् ।
तद् दृष्ट्वा राघवः श्रीमांस्तापसाश्रममण्डलम् ।।

अभ्यगच्छन्महातेजा विज्यं कृत्वा महद् धनुः ।
दिव्यज्ञानोपपन्नास्ते रामं दृष्ट्वा महर्षयः ।।

लक्ष्मणं चैव दृष्ट्वा तु वैदेहीं च यशस्विनीम् ।
मङ्गलानि प्रयुञ्जानाः प्रत्यगृह्णन् दृढव्रताः ।।

अत्रैनं हि महाभागाः सर्वभूतहिते रताः ।
अतिथिं पर्णशालायां राघवं सन्यवेशयन् ।।
मूलं पुष्पं फलं सर्वमाश्रमं च महात्मनः ।।

निवेदयित्वा धर्मज्ञास्ते तु प्राञ्जलयोऽब्रुवन् ।
धर्मपालो जनस्यास्य शरण्यश्च महायशाः ।।

पूजनीयश्च मान्यश्च राजा दण्डधरो गुरुः ।
इन्द्रस्यैव चतुर्भागः प्रजा रक्षति राघव ।।

न्यस्तदण्डा वयं राजञ्जितक्रोधा जितेन्द्रियाः ।
रक्षणीयास्त्वया शश्वद् गर्भभूतास्तपोधनाः ।। 1.21

एवमुक्त्वा फलैर्मूलैः पुष्पैरन्यैश्च राघवम् ।
वन्यैश्च विविधाहारैः सलक्ष्मणमपूजयन् ।।

कृतातिथ्योऽथ रामस्तु सूर्यस्योदयनं प्रति ।
आमन्त्र्य स मुनीन् सर्वान् वनमेवान्वगाहत ।।

सीतया सह काकुत्स्थस्तस्मिन्घोरमृगायुते ।
ददर्श गिरिशृङ्गाभं पुरुषादं महास्वनम् ।।

अभ्यधावत् सुसंक्रुद्धः प्रजाः काल इवान्तकः ।
स कृत्वा भैरवं नादं चालयन्निव मेदिनीम् ।।

अङ्केनादाय वैदेहीमपक्रम्य तदाब्रवीत् ।
युवां जटाचीरधरौ सभार्यौ क्षीणजीवितौ ।।

प्रविष्टौ दण्डकारण्यं शरचापासिपाणिनौ ।
कथं तापसयोर्वां च वासः प्रमदया सह ।।

चरामि सायुधो नित्यमृषिमांसानि भक्षयन् ।
इयं नारी वरारोहा मम भार्या भविष्यति ।।

तं रामः प्रत्युवाचेदं कोपसंरक्तलोचनः ।
राक्षसं विकृताकारं विराधं पापचेतसम् ।।

क्षुद्र धिक् त्वां तु हीनार्थं मृत्युम् अन्वेषसे ध्रुवम् ।
रणे प्राप्स्यसि सन्तिष्ठ न मे जीवन् विमोक्ष्यसे ।।

ततः सज्यं धनुः कृत्वा रामः सुनिशिताञ्शरान् ।
सुशीघ्रमभिसन्धाय राक्षसं निजघान ह ।। 3.10

स विद्धो न्यस्य वैदेहीं शूलमुद्यम्य राक्षसः ।
अभ्यद्रवत्सु संक्रुद्धः तदा रामं सलक्ष्मणम् ।।

तस्य रौद्रस्य सौमित्रिः सव्यं बाहुं बभञ्ज ह ।
रामस्तु दक्षिणं बाहुं तरसा तस्य रक्षसः ।।

स भग्नबाहुः संविग्नः पपाताशु विमूर्च्छितः ।
धरण्यां मेघसङ्काशो वज्रभिन्न इवाचलः ।।

हतोऽहं पुरुषव्याघ्र शक्रतुल्यबलेन वै ।
मया तु पूर्वं त्वं मोहान्न ज्ञातः पुरुषर्षभ ।।

अभिशापादहं घोरां प्रविष्टो राक्षसीं तनुम् ।
तुम्बुरुर्नाम गन्धर्वः शप्तो वैश्रवणेन हि ।।

प्रसाद्यमानश्च मया सोऽब्रवीन्मां महायशाः ।
यदि दाशरथी रामस्त्वां वधिष्यति संयुगे ।।

तदा प्रकृतिमापन्नो भवान् स्वर्गं गमिष्यति ।
अनुपस्थीयमानो मां स क्रुद्धो व्याजहार ह ।।

इति वैश्रवणो राजा रम्भासक्तमुवाच ह ।
तव प्रसादात् मुक्तोऽहमभिशापात्सुदारुणम् ।।

भुवनं स्वं गमिष्यामि स्वस्ति वोऽस्तु परन्तप ।
इतो वसति धर्मात्मा शरभङ्गः प्रतापवान् ।।

अध्यर्धयोजने तात महर्षिः सूर्यसन्निभः ।
तं क्षिप्रमभिगच्छ त्वं स ते श्रेयोऽभिधास्यति ।। 4.21

ततस्तु तौ काञ्चनचित्रकार्मुकौ निहत्य रक्षः परिगृह्य मैथिलीम् ।
विजह्रतुस्तौ मुदितौ महावने दिवि स्थितौ चन्द्रदिवाकराविव ।।

अब्रवीद् भ्रातरं रामो लक्ष्मणं दीप्ततेजसम् ।
कष्टं वनमिदं दुर्गं न च स्म वनगोचराः ।।

अभिगच्छामहे शीघ्रं शरभङ्गं तपोधनम् ।
आश्रमं शरभङ्गस्य राघवोऽभिजगाम ह ।।
अग्निहोत्रमुपासीनं शरभङ्गमुपागमत् ।।

तस्य पादौ च संगृह्य रामः सीता च लक्ष्मणः ।
निषेदुस्तदनुज्ञाता लब्धवासा निमन्त्रिताः ।।

अहं ज्ञात्वा नरव्याघ्र वर्तमानमदूरतः ।
ब्रह्मलोकं न गच्छामि त्वामदृष्ट्वा प्रियातिथिम् ।।

सुतीक्ष्णमभिगच्छ त्वं शुचौ देशे तपस्विनम् ।
रमणीये वनोद्देशे स ते वासं विधास्यति ।।

ततोऽग्निं स समाधाय हुत्वा चाज्येन मन्त्रवत् ।
शरभङ्गो महातेजाः प्रविवेश हुताशनम् ।।

स लोकानाहिताग्नीनामृषीणां च महात्मनाम् ।
देवानां च व्यतिक्रम्य ब्रह्मलोकं व्यरोहत ।।

शरभङ्गे दिवं प्राप्ते मुनिसङ्घाः समागताः ।
अभ्यगच्छन्त काकुत्स्थं रामं ज्वलिततेजसम् ।।

अभिगम्य च धर्मज्ञा रामं धर्मभृतां वरम् ।
ऊचुः परमधर्मज्ञमृषिसंङ्घाः समागताः ।। 6.7

विश्रुतस्त्रिषु लोकेषु यशसा विक्रमेण च ।
पितृव्रतत्वं सत्यं च त्वयि धर्मश्च पुष्कलः ।।

त्वामासाद्य महात्मानं धर्मज्ञं धर्मवत्सलम् ।
अर्थित्वान्नाथ वक्ष्यामस्तच्च नः क्षन्तुमर्हसि ।।

यत् करोति परं धर्मं मुनिर्मूलफलाशनः ।
तत्र राज्ञश्चतुर्भागः प्रजा धर्मेण रक्षतः ।।

सोऽयं ब्राह्मणभूयिष्ठो वानप्रस्थगणो महान् ।
त्वन्नाथोऽनाथवद् राम राक्षसैर्हन्यते भृशम् ।।

एहि पश्य शरीराणि मुनीनां भावितात्मनाम् ।
हतानां राक्षसैर्घोरैर्बहूनां बहुधा वने ।।

एवं वयं न मृष्यामो विप्रकारं तपस्विनाम् ।
क्रियमाणं वने घोरं रक्षोभिर्भीमकर्मभिः ।।

ततस्त्वां शरणार्थं च शरण्यं समुपस्थिताः ।
परिपालय नो राम वध्यमानान् निशाचरैः ।।

परा त्वत्तो गतिर्वीर पृथिव्यां नोपपद्यते ।
परिपालय नः सर्वान् राक्षसेभ्यो नृपात्मज ।।

एतद् श्रुत्वा तु काकुत्स्थं तापसानां तपस्विनाम् ।
इदं प्रोवाच धर्मात्मा सर्वानेव तपस्विनः ।।

भवतामर्थसिध्यर्थं आगतोऽहं यदृच्छया ।
तस्य मेऽयं वने वासो भविष्यति महाफलः ।। 6.24

रामस्तु सहितो भ्रात्रा सीतया च परन्तपः।
सुतीक्ष्णस्याश्रमपदं जगाम सह तैर्द्विजैः।

स निरीक्ष्य ततो धीरो रामं धर्मभृतां वरम् ।
समाश्लिष्य च बाहुभ्यां इदं वचनमब्रवीत् ।।

प्रतीक्षमाणस्त्वामेव नारोहेऽहं महायशः।
देवलोकमितो वीरं देहं त्यक्त्वा महीतले ।।

सुखोषिताः स्म भगवंस्त्वया पूज्येन पूजिताः।
आपृच्छामः प्रयास्यामो मुनयस्त्वरयन्ति नः ।।

अरिष्टं गच्छ पन्थानं राम सौमित्रिणा सह।
सीतया चानया सार्धं छाययेवानुवृत्तया ।।

सुतीक्ष्णेनाभ्यनुज्ञातं प्रस्थितं रघुनन्दनम् ।
हृद्यया स्निग्धया वाचा भर्तारमिदमब्रवीत् ।।

प्रतिज्ञातस्त्वया वीर दण्डकारण्यवासिनाम् ।
ऋषीणां रक्षणार्थाय वधः संयति रक्षसाम् ।।

एतन्निमित्तं च वनं दण्डका इति विश्रुतम् ।
प्रस्थितस्त्वं सह भ्रात्रा धृतबाणशरासनः ।।

स्नेहाच्च बहुमानाच्च स्मारये त्वां तु शिक्षये।
न कथञ्चन सा कार्या गृहीत धनुषा त्वया ।।

धर्मादर्थः प्रभवति धर्मात्प्रभवते सुखम् ।
धर्मेण लभते सर्वं धर्मसारमिदं जगत् ।। 9.30

स्त्रीचापलादेतदुपाहृतं मे धर्मं च वक्तुं तव कः समर्थः ।
विचार्य बुद्ध्या तु सहानुजेन यद्रोचते तत्कुरु मा चिरेण ।।

वाक्यमेतत् तु वैदेह्या व्याहृतं भर्तुभक्तया ।
श्रुत्वा धर्मे स्थितो रामः प्रत्युवाचाथ जानकीम् ।।

हितमुक्तं त्वया देवि स्निग्धया सदृशं वचः ।
कुलं व्यापादिशन्त्या च धर्मज्ञे जनकात्मजे ।।

ते चार्ता दण्डकारण्ये मुनयः संशितव्रताः ।
मां सीते स्वयमागम्य शरण्यं शरणं गताः ।।

तदवश्यं मया कार्यमृषीणां परिपालनम् ।
अनुक्तेनापि वैदेहि प्रतिज्ञाय कथं पुनः ।।

अग्रतः प्रययौ रामः सीता मध्ये सुशोभना ।
पृष्ठतस्तु धनुष्पाणिर्लक्ष्मणोऽनुजगाम ह ।।

ते गत्वा दूरमध्वानं लम्बमाने दिवाकरे ।
ददृशुः सहिता रम्यं तटाकं योजनायुतम् ।।

प्रसन्नसलिले रम्ये तस्मिन् सरसि शुश्रुवे ।
गीतवादित्रनिर्घोषो न तु कश्चन दृश्यते ।।

ततः कौतूहलाद् रामो लक्ष्मणश्च महारथः ।
मुनिं धर्मभृतं नाम प्रष्टुं समुपचक्रमे ।।

इदमत्यद्भुतं श्रुत्वा सर्वेषां नो महामुने ।
कौतूहलं महज्जातं किमिदं साधु कथ्यताम् ।। 11.9

तेनैवमुक्तो धर्मात्मा राघवेण मुनिस्तदा ।
प्रभावं सरसः क्षिप्रं आख्यातुमुपचक्रमे ।।

इदं पञ्चाप्सरो नाम तटाकं सार्वकालिकम् ।
निर्मितं तपसा राम मुनिना माण्डकर्णिना ।।

स हि तेपे तपस्तीव्रं माण्डकर्णिर्महामुनिः ।
दशवर्षसहस्राणि वायुभक्षो जलाशये ।।

ततः कर्तुं तपोविघ्नं सर्वदेवैर्नियोजिताः ।
प्रधानाप्सरसःपञ्च विद्युच्चलितवर्चसः ।।

ताश्चैवाप्सरसःपञ्च मुनेः पत्नीत्वमागताः ।
तटाके निर्मितं तासां तस्मिन्नन्तर्हितं गृहम् ।।

तासां संक्रीडमानानामेषवादित्रनिःस्वनः ।
श्रूयते भूषणोन्मिश्रो गीतशब्दो मनोहरः ।।

एवं कथयमानः स ददर्शाश्रममण्डलम् ।
प्रविश्य सह वैदेह्या लक्ष्मणेन च राघवः ।।

उषित्वा स सुखं तत्र पूज्यमानो महर्षिभिः ।
जगाम चाश्रमांस्तेषां पर्यायेण तपस्विनाम् ।।

येषामुषितवान् पूर्वं सकाशे स महास्त्रवित् ।
क्वचित्परिदशान् मासानेकसंवत्सरं क्वचित् ।।

रमतश्चानुकूल्येन ययुःसंवत्सरा दश ।
परिसृत्य च धर्मज्ञो राघवः सह सीतया ।। 11.27

सुतीक्ष्णस्याश्रमपदं पुनरेवाजगाम ह ।
स तमाश्रममागम्य मुनिभिः परिपूजितः ।।

तत्रापि न्यवसद् रामः किञ्चित्कालमरिन्दमः ।
अथाश्रमस्थो विनयात् कदाचित् तं महामुनिम् ।।

उपासीनः स काकुत्स्थः सुतीक्ष्णमिदमब्रवीत् ।
अस्मिन्नरण्ये भगवन् अगस्त्यो मुनिसत्तमः ।।

अगस्त्यमधिगच्छेयमभिवादयितुं मुनिम् ।
मनोरथो महानेष हृदि सम्परिवर्तते ।।

इति रामस्य स मुनिः श्रुत्वा धर्मात्मनो वचः ।
सुतीक्ष्णः प्रत्युवाचेदं प्रीतो दशरथात्मजम् ।।

अयमाख्यामि ते राम यत्रागस्त्यो महामुनिः ।
योजनान्याश्रमात् तात याहि चत्वारि वै ततः ।
दक्षिणेन महाञ्छ्रीमानगस्त्यभ्रातुराश्रमः ।।

यदि बुद्धिः कृता द्रष्टुमगस्त्यं तं महामुनिम् ।
अद्यैव गमने बुद्धिं रोचयस्व महामते ।।

इति रामो मुनेः श्रुत्वा सह भ्रात्राऽभिवाद्य च ।
प्रतस्थेऽगस्त्यमुद्दिश्य सानुगः सह सीतया ।।

उपास्य पश्चिमां सन्ध्यां सह भ्रात्रा यथाविधि ।
प्रविवेशाश्रमपदं तमृषिं चाभ्यवादयत् ।।

अभिवाद्य तु धर्मात्मा तस्थौ रामः कृताञ्जलिः ।
सीतया सह वैदेह्या तदा रामः सलक्ष्मणः ।। 12.25

प्रतिगृह्य च काकुत्स्थमर्चयित्वाऽऽसनोदकैः ।
कुशलप्रश्नमुक्त्वा च आस्यतामिति सोऽब्रवीत् ।।

अग्निं हुत्वा प्रदायार्घ्यमतिथीन् प्रतिपूज्य च ।
वानप्रस्थेन धर्मेण स तेषां भोजनं ददौ ।।

इदं दिव्यं महच्चापं हेमवज्रविभूषितम् ।
वैष्णवं पुरुषव्याघ्र निर्मितं विश्वकर्मणा ।।

अमोघः सूर्यसंकाशो ब्रह्मदत्तः शरोत्तमः ।
दत्तौ मम महेन्द्रेण तूणी चाक्षयसायकौ ।।

सम्पूर्णौ निशितैर्बाणैर्ज्वलद्भिरिव पावकैः ।
महारजतकोशोऽयमसिर्हेमविभूषितः ।।

अनेन धनुषा राम हत्वा संख्ये महासुरान् ।
आजहार श्रियं दीप्तां पुरा विष्णुर्दिवौकसाम् ।।

एवमुक्त्वा महातेजाः समस्तं तद्वरायुधम् ।
दत्वा रामाय भगवानगस्त्यः पुनरब्रवीत् ।।

राम प्रीतोऽस्मि भद्रं ते परितुष्टोऽस्मि लक्ष्मण ।
अभिवादयितुं यन्मा प्राप्तौ स्थः सह सीतया ।।

इयं तु भवतो भार्या दोषैरेतैर्विवर्जिता ।
श्लाघ्या च व्यपदेश्या च यथा देवीष्वरुन्धती ।।

एवमुक्तस्तु मुनिना राघवः संयताञ्जलिः ।
उवाच प्रश्रितं वाक्यमृषिं दीप्तमिवानलम् ।। 13.9

किन्तु व्यादिश मे देशं सोदकं बहुकाननम् ।
यत्राश्रमपदं कृत्वा वसेयं निरतः सुखम् ।।

इतो द्वियोजने तात बहुमूलफलोदकः ।
देशो बहुमृगः श्रीमान् पञ्चवट्यभिविश्रुतः ।।

तत्र गत्वाऽऽश्रमपदं कृत्वा सौमित्रिणा सह ।
रमस्व त्वं पितुर्वाक्यं यथोक्तमनुपालयन् ।।

तौ तु तेनाभ्यनुज्ञातौ कृतपादाभिवन्दनौ ।
तमाश्रमं पञ्चवटीं जग्मतुः सह सीतया ।।

अथ पञ्चवटीं गच्छन्नन्तरा रघुनन्दनः ।
आससाद महाकायं गृध्रं भीमपराक्रमम् ।।

तं दृष्ट्वा तौ महाभागौ वनस्थं रामलक्ष्मणौ ।
मेनाते राक्षसं पक्षिं ब्रुवाणौ को भवानिति ।।

ततो मधुरया वाचा सौम्यया प्रीणयन्निव ।
उवाच वत्स मां विद्धि वयस्यं पितुरात्मनः ।।

स तं पितृसखं मत्वा पूजयामास राघवः ।
स तस्य कुलमव्यग्रमथ पप्रच्छ नाम च ।।

रामस्य वचनं श्रुत्वा कुलमात्मानमेव च ।
आचचक्षे द्विजस्तस्मै सर्वभूतसमुद्भवम् ।।

तस्मात् जातोऽहमरुणात् सम्पातिश्च ममाग्रतः ।
जटायुरिति मां विद्धि श्येनीपुत्रमरिन्दम ।। 14.33

सोऽहं वाससहायस्ते भविष्यामि यदीच्छसि ।
सीतां च तात रक्षिष्ये त्वयि याते सलक्ष्मणे ।।

जटायुषं तु प्रतिपूज्य राघवो मुदा परिष्वज्य च सन्नतोऽभवत् ।
पितुर्हि शुश्राव सखित्वमात्मवान् जटायुषा सङ्कथितं पुनः पुनः ।।

ततः पञ्चवटीं गत्वा नानाव्यालमृगायुताम् ।
उवाच लक्ष्मणं रामो भ्रातरं दीप्ततेजसम् ।।

अयं देशः समःश्रीमान् पुष्पितैस्तरुभिर्वृतः ।
इहाश्रमपदं रम्यं यथावत्कर्तुमर्हसि ।।

इयमादित्यसङ्काशैः पद्मैः सुरभिगन्धिभिः ।
अदूरे दृश्यते रम्या पद्मिनी पद्मशोभिता ।।

यथाख्यातमगस्त्येन मुनिना भावितात्मना ।
इयं गोदावरी रम्या पुष्पितैस्तरुभिर्वृता ।।

इदं पुण्यमिदं रम्यमिदं बहुमृगद्विजम् ।
इह वत्स्याम सौमित्रे सार्धमेतेन पक्षिणा ।।

एवमुक्तस्तु रामेण लक्ष्मणः परवीरहा ।
अचिरेणाश्रमं भ्रातुश्चकार सुमहाबलः ।।

स गत्वा लक्ष्मणः श्रीमान् नदीं गोदावरीं तदा ।
स्नात्वा पद्मानि चादाय सफलः पुनरागतः ।।

भावज्ञेन कृतज्ञेन धर्मज्ञेन च लक्ष्मण ।
त्वया पुत्रेण धर्मात्मा न संवृत्तः पिता मम ।। 15.29

एवं लक्ष्मणमुक्त्वा तु राघवो लक्ष्मिवर्धनः ।
तस्मिन्देशे बहुमूले न्यवसत् स सुखं सुखी ।।

कश्चित्कालं स धर्मात्मा सीतया लक्ष्मणेन च ।
अन्वास्यमानो न्यवसत्स्वर्गलोके यथामरः ।।

तदासीनस्य रामस्य कथासंसक्तचेतसः ।
तं देशं राक्षसी काचिदाजगाम यदृच्छया ।।

सा तु शूर्पणखा नाम दशग्रीवस्य रक्षसः ।
भगिनी राममासाद्य ददर्श त्रिदशोपमम् ।।

शरीरजसमाविष्टा राक्षसी राममब्रवीत् ।
जटी तापसवेषेण सभार्यः शरचापधृक् ।।

आगतस्त्वमिमं देशं कथं राक्षससेवितम् ।
किमागमनकृत्यं ते तत्त्वमाख्यातुमर्हसि ।।

एवमुक्तस्तु राक्षस्या शूर्पणख्या परन्तपः ।
ऋजुबुद्धितया सर्वमाख्यातुमुपचक्रमे ।।

आसीद्दशरथो नाम राजा त्रिदशविक्रमः ।
तस्याहमग्रजः पुत्रो रामो नाम जनैः श्रुतः ।।

भ्रातायं लक्ष्मणो नाम यवीयान् मामनुव्रतः ।
इयं भार्या च वैदेही मम सीतेति विश्रुता ।।

नियोगात्तु नरेन्द्रस्य पितुर्मातुश्च यन्त्रितः ।
धर्मार्थं धर्मकाङ्क्षी च वनं वस्तुमिहागतः ।। 17.17

इह वा किन्निमित्तं त्वमागता ब्रूहि तत्त्वतः।
साब्रवीद् वचनं श्रुत्वा राक्षसी मदनार्दिता।।

श्रूयतां राम तत्त्वार्थं वक्ष्यामि वचनं मम।
अहं शूर्पणखा नाम राक्षसी कामरूपिणी ।।

अहं प्रभावसम्पन्ना स्वच्छन्दबलगामिनी।
चिराय भव भर्ता मे सीतया किं करिष्यसि।।

इमां विरूपामसतीं करालां निर्णतोदरीम् ।
अनेन सह ते भ्रात्रा भक्षयिष्यामि मानुषीम् ।।

इत्युक्त्वा मृगशाबाक्षीमलातसदृशेक्षणा।
अभ्यगच्छत्सुसंक्रुद्धा महोल्का रोहिणीमिव।।

तां मृत्युपाशप्रतिमामापतन्तीं महाबलः।
विगृह्य रामः कुपितस्ततो लक्ष्मणमब्रवीत्।।

इमां विरूपामसतीमतिमत्तां महोदरीम् ।
राक्षसीं पुरुषव्याघ्र विरूपयितुमर्हसि।।

इत्युक्तो लक्ष्मणस्तस्याः क्रुद्धो रामस्य पश्यतः।
उद्धृत्य खड्गं चिच्छेद कर्णनासे महाबलः।।

सा विक्षरन्ती रुधिरं बहुधा घोरदर्शना।
प्रगृह्य बाहू गर्जन्ती प्रविवेश महावनम्।। 19.24

ततः सभार्यं भयमोहमूर्च्छिता सलक्ष्मणं राघवमागतं वनम् ।
विरूपणं चात्मनि शोणितोक्षिता शशंस सर्वं भगिनी खरस्य सा ।।

तां तथा पतितां दृष्ट्वा विरूपां शोणितेक्षिताम् ।
भगिनीं क्रोधसन्तप्तः खरः पप्रच्छ राक्षसः ।।

उत्तिष्ठ तावदाख्याहि प्रमोहं जहि सम्भ्रमम् ।
व्यक्तमाख्याहि केन त्वमेवंरूपा विरूपिता ।।

इति भ्रातुर्वचः श्रुत्वा क्रुद्धस्य च विशेषतः ।
ततः शूर्पणखा वाक्यं सबाष्पमिदमब्रवीत् ।।

तरुणौ रूपसंपन्नौ सुकुमारौ महाबलौ ।
पुण्डरीकविशालाक्षौ चीरकृष्णाजिनाम्बरौ ।।

फलमूलाशनौ दान्तौ तापसौ ब्रह्मचारिणौ ।
पुत्रौ दशरथस्यास्तां भ्रातरौ रामलक्ष्मणौ ।।

तस्याश्चानृजुवृत्तायास्तयोश्च हतयोरहम् ।
सफेनं पातुमिच्छामि रुधिरं रणमूर्धनि ।।

इति प्रतिसमादिष्टा राक्षसास्ते चतुर्दश ।
तत्र जग्मुस्तया सार्धं घना वातेरिता इव ।।

तां दृष्ट्वा राघवः श्रीमानागतांस्तांश्च राक्षसान् ।
अब्रवीद् भ्रातरं रामो लक्ष्मणं दीप्ततेजसम् ।।

मुहूर्तं भव सौमित्रे सीतायाः प्रत्यनन्तरः ।
इमानस्या वधिष्यामि पदवीमागतानिह ।।

राघवोऽपि महच्चापं चामीकरविभूषितम् ।
चकार सज्यं धर्मात्मा तानि रक्षांसि चाब्रवीत् ।। 20.6

युष्मान् पापात्मकान् हन्तुं विप्रकारान् महाहवे ।
ऋषीणां तु नियोगेन सम्प्राप्तः सशरासनः ।।

तस्य तद्वचनं श्रुत्वा राक्षसास्ते चतुर्दश ।
ऊचुर्वाचं सुसंक्रुद्धा ब्रह्मघ्नाः शूलपाणयः ।।

का हि ते शक्तिरेकस्य बहूनां रणमूर्धनि ।
अस्माकमग्रतःस्थातुं किं पुनर्योद्धुमाहवे ।।

चिक्षिपुस्तानि शूलानि राघवं प्रतिदुर्जयम् ।
तानि शूलानि काकुत्स्थः समस्तानि चतुर्दश ।।

तावद्भिरेव चिच्छेद शरैः काञ्चनभूषितैः ।
ततःपश्चान् महातेजा नाराचान् सूर्यसन्निभान् ।।

मुमोच राघवो बाणान् वज्रानिव शतक्रतुः ।
ते भित्वा रक्षसां वेगाद् रक्षांसि रुधिरप्लुताः ।।

विनिष्पेतुस्तदा भूमौ वल्मीकादिव पन्नगाः ।
तैर्भग्नहृदया भूमौ छिन्नमूला इव द्रुमाः ।।

निपातितान् प्रेक्ष्य रणे तु राक्षसान् प्रधाविता शूर्पणखा पुनस्ततः ।
वधं च तेषां निखिलेन रक्षसां शशंस सर्वं भगिनी खरस्य सा ।।

प्रेषिताश्च त्वया शूरा राक्षसास्ते चतुर्दश ।
निहन्तुं राघवं घोरं मत्प्रियार्थं सलक्ष्मणम् ।।

ते तु रामेण सामर्षाः शूलपट्टिशपाणयः ।
समरे निहताः सर्वे सायकैर्मर्मभेदिभिः ।। 21.9

भ्रातु:समीपे शोकार्ता नष्टसंज्ञा बभूव ह।
कराभ्यामुदरं हत्वा रुरोद भृशदु:खिता ।।

बाष्पः सन्धार्यतामेष सम्भ्रमश्च विमुच्यताम्।
अहं रामं सह भ्रात्रा नयामि यमसादनम् ।।

ततस्तद् राक्षसं सैन्यं घोरचर्मायुधध्वजम्।
निर्जगाम जनस्थानात् महानादं महाजवम् ।।

अब्रवीद् राक्षसान् सर्वान् प्रहसन्स खरस्तदा।
महोत्पातानिमान् सर्वानुत्थितान् घोरदर्शनान्।।

सकामा भगिनी मेऽस्तु पीत्वा तु रुधिरं तयोः।
न क्वचित्प्राप्तपूर्वो मे संयुगेषु पराजयः।।

सा भीमवेगा समराभिकाङ्क्षिणी सुदारुणा राक्षसवीरसेना ।
तौ राजपुत्रौ सहसाभ्युपेता माला ग्रहाणामिव चन्द्रसूर्यौ।।

आश्रमं प्रतियाते तु खरे खरपराक्रमे।
तानेवौत्पातिकान् रामः सह भ्रात्रा ददर्श ह ।।

तस्माद् गृहीत्वा वैदेहीं शरपाणिर्धनुर्धरः।
गुहामाश्रय शैलस्य दुर्गां पादपसङ्कुलाम् ।।

त्वं हि शूरश्च बलवान् हन्या एतान्न संशयः।
स्वयं निहन्तुमिच्छामि सर्वानेव निशाचरान्।।

एवमुक्तस्तु रामेण लक्ष्मणः सह सीतया।
शरानादाय चापं च गुहां दुर्गां समाश्रयत्।। 24.15

स चापमुद्यम्य महच्छरानादाय वीर्यवान् ।
सम्बभूवास्थितस्तत्र ज्यास्वनैः पूरयन् दिशः ।।

ततो देवाः सगन्धर्वाः सिद्धाश्च सह चारणैः ।
समेयुश्च महात्मानो युद्धदर्शनकाङ्क्षिणः ।।

ततस्तं भीमधन्वानं क्रुद्धाः सर्वे निशाचराः ।
रामं नानाविधैः शस्त्रैरभ्यवर्षन्त दुर्जयम् ।।

ततो रामस्तु संक्रुद्धो मण्डलीकृतकार्मुकः ।
ससर्ज निशितान् बाणान् शतशोऽथ सहस्रशः ।
दुरावारान् दुर्विषहान् कालपाशोपमान् रणे ।।

आददू रक्षसां प्राणान् पाशाः कालकृता इव ।
भित्वा राक्षसदेहास्तान् ते शरा रुधिराप्लुताः ।।

चिच्छिदुर्बिभिदुश्चैव रामबाणा गुणच्च्युताः ।
पदातीन् समरे हत्वा ह्यनयद् यमसादनम् ।।

चूर्णिताभिः शिलाभिश्च शरैश्चित्रैरनेकशः ।
विच्छिन्नैः समरे भूमिर्विस्तीर्णाऽभूद् भयङ्करा ।।

ततः सेनापतिः क्रुद्धो दूषणः शत्रुदूषणः ।
शरैरशनिकल्पैस्तं राघवं समवारयत् ।।

तीक्ष्णाग्रैः प्रतिजग्राह सम्प्राप्तानतिथीनिव ।
महाकपालस्य शिरश्चिच्छेद रघुनन्दनः ।।

स पपात हतो भूमौ विटपीव महाद्रुमः ।
दूषणस्यानुजान् पञ्चसाहस्रान् कुपितःक्षणात् ।। 26.22

द्वादशैते महावीर्या बलाध्यक्षाः ससैनिकाः ।
राममेवाभ्यधावन्त विसृजन्तः शरोत्तमान् ।।

ततः पावकसंकाशैर्हेमवज्रविभूषितैः ।
जघान शेषं तेजस्वी तस्य सैन्यस्य सायकैः ।।

रक्षसां तु शतं रामः शतेनैकेन कर्णिना ।
सहस्रं तु सहस्रेण जघान रणमूर्धनि ।।

खरं तु रामाभिमुखं प्रयान्तं वाहिनीपतिः ।
राक्षसस्त्रिशिरा नाम सन्निपत्येदमब्रवीत् ।।

मां नियोजय विक्रान्तं त्वं निवर्तस्व साहसात् ।
पश्य रामं महाबाहुं संयुगे विनिपातितम् ।।

आगच्छन्तं त्रिशिरसं राक्षसं प्रेक्ष्य राघवः ।
धनुषा प्रतिजग्राह विधुन्वन् सायकान् शितान् ।।

त्रिशिरो वक्षसि क्रुद्धो निजघान चतुर्दश ।
चतुर्भिस्तुरगानस्य शरैः सन्नतपर्वभिः ।।

शिरांस्यपातयत् त्रीणि वेगवद्भिस्त्रिभि:शरैः ।
स धूमशोणितोद्गारि रामबाणाभिपीडितः ।।

न्यपतत् पतितैः पूर्वं समरस्थो निशाचरः ।
हतशेषास्ततो भग्ना राक्षसाः खरसंश्रयाः ।।

निहतं दूषणं दृष्ट्वा रणे त्रिशिरसा सह ।
खरस्याप्यभवत् त्रासो दृष्ट्वा रामस्य विक्रमम् ।। 28.1

तद्बलं हतभूयिष्ठं विमनाः प्रेक्ष्य राक्षसः ।
आससाद खरो रामं नमुचिर्वासवं यथा ।।

ततस्तत् प्रहतं बाणैः खरमुक्तैः सुपर्वभिः ।
पपात कवचं भूमौ रामस्यादित्यवर्चसम् ।।

सुमहद् वैष्णवं यत् तदतिसृष्टं महर्षिणा ।
वरं तद् धनुरुद्यम्य खरं समभिधावत ।।

स धनुर्धन्विनां श्रेष्ठः सङ्गृह्य परमाहवे ।
मुमोच परमेश्वासः षट् शरानभिलक्षितान् ।।

शिरस्येकेन बाणेन द्वाभ्यां बाह्वोरथार्पयत् ।
त्रिभिश्चन्द्रार्धवक्त्रैश्च वक्षस्यभिजघान ह ।।

प्रभग्नधन्वा विरथो हताश्वो हतसारथिः ।
गदापाणिरवप्लुत्य तस्थौ भूमौ खरस्तदा ।।

खरं तु विरथं रामो गदापाणिमवस्थितम् ।
मृदुपूर्वं महातेजाः परुषं वाक्यमब्रवीत् ।।

पापमाचरतां घोरं लोकस्याप्रियमिच्छताम् ।
अहमासादितो राज्ञा प्राणान् हन्तुं निशाचर ।।

एवमुक्तस्तु रामेण क्रुद्धः संरक्तलोचनः ।
प्रत्युवाच ततो रामं प्रहसन् क्रोधमूर्च्छितः ।।

चतुर्दश सहस्राणि राक्षसानां हतानि ते ।
त्वद्विनाशात् करोम्यद्य तेषामश्रुप्रमार्जनम् ।। 29.24

रणे प्रहरणस्यार्थे सर्वतो ह्यवलोकयन् ।
स तमुत्पाटयामास सन्दष्टदशनच्छदम् ।।

तमापतन्तं बाणौघैश्छित्वा रामः प्रतापवान् ।
रोषमाहारयत्तीव्रं निहन्तुं समरे खरम् ।।

स विमुक्तो महाबाणो निर्घातसमनिःस्वनः ।
रामेण धनुरायम्य खरस्योरसि चापतत् ।।

स पपात खरो भूमौ दह्यमानः शराग्निना ।
रुद्रेणेव विनिर्दग्धः श्वेतारण्ये यथान्धकः ।।

एतस्मिन्नन्तरे देवाश्चारणैः सह सङ्गताः ।
दुन्दुभीश्चाभिनिघ्नन्तः पुष्पवर्षं समन्ततः ।।

रामस्योपरि संहृष्टा ववर्षुर्विस्मितास्तदा ।
अर्धाधिकमुहूर्तेन रामेण निशितैः शरैः ।।

ततो राजर्षयः सर्वे सङ्गताः परमर्षयः ।
सभाज्य मुदिता रामं सागस्त्या इदमब्रुवन् ।।

एषां वधार्थं शत्रूणां रक्षसां पापकर्मणाम् ।
तदिदं नः कृतं कार्यं त्वया दशरथात्मज ।।

ततो रामस्तु विजयी पूज्यमानो महर्षिभिः ।
प्रविवेशाश्रमं वीरो लक्ष्मणेनाभिपूजितः ।
तं दृष्ट्वा शत्रुहन्तारं महर्षीणां सुखावहम् ।।

मुदा परमया युक्ता दृष्ट्वा रक्षोगणान् हतान् ।
रामं चैवाव्ययं दृष्ट्वा तुतोष जनकात्मजा ।। 30.40

त्वरमाणस्ततो गत्वा जनस्थानादकम्पनः ।
प्रविश्य लङ्कां वेगेन रावणं वाक्यमब्रवीत् ।।

जनस्थानस्थिता राजन् राक्षसा बहवो हताः ।
खरश्च निहतः संख्ये कथंचिदहमागतः ।।

एवमुक्तो दशग्रीवः क्रुद्धः संरक्तलोचनः ।
अकम्पनमुवाचेदं निर्दहन्निव तेजसा ।।

केन भीमं जनस्थानं हतं मम परासुना ।
को हि सर्वेषु लोकेषु गतिं नाधिगमिष्यति ।।

तथा क्रुद्धं दशग्रीवं कृताञ्जलिरकम्पनः ।
भयात् संदिग्धया वाचा रावणं याचतेऽभयम् ।।

श्यामः पृथुयशाः श्रीमानतुल्यबलविक्रमः ।
हतस्तेन जनस्थाने खरश्च सहदूषणः ।।

रामो नाम महातेजाः श्रेष्ठः सर्वधनुष्मताम् ।
दिव्यास्त्रगुणसम्पन्नः परं धर्मं गतो युधि ।।

नैव देवा महात्मानो नात्र कार्या विचारणा ।
शरा रामेण तूत्सृष्टा रुक्मपुङ्खाः पतत्रिणः ।।

येन येन च गच्छन्ति राक्षसा भयकर्षिताः ।
तेन तेन स्म पश्यन्ति राममेवाग्रतः स्थितम् ।
इत्थं विनाशितं तेन जनस्थानं तवाऽनघ ।।

संहृत्य वा पुनर्लोकान् विक्रमेण महायशाः ।
शक्तः श्रेष्ठः स पुरुषः स्रष्टुं पुनरपि प्रजाः ।। 31.26

नहि रामो दशग्रीव शक्यो जेतुं रणे त्वया ।
रक्षसां वापि लोकेन स्वर्गः पापजनैरिव ।।

भार्या तस्योत्तमा लोके सीता नाम सुमध्यमा ।
श्यामा समविभक्ताङ्गी स्त्रीरत्नं रत्नभूषिता ।।

तस्यापहर भार्यां त्वं तं प्रमथ्य महावने ।
सीतया रहितो रामो न चैव हि भविष्यति ।।

बाढं कल्यं गमिष्यामि ह्येकःसारथिना सह ।
आनेष्यामि च वैदेहीमिमां हृष्टो महापुरीम् ।।

तदेवमुक्त्वा प्रययौ खरयुक्तेन रावणः ।
रथेनादित्य वर्णेन दिशः सर्वाः प्रकाशयन् ।।

स दूरे चाश्रमं गत्वा ताटकेयमुपागमत् ।
मारीचेनार्चितो राजा भक्ष्यभोज्यैरमानुषैः ।।

आरक्षो मे हतस्तात रामेणाक्लिष्टकारिणा ।
जनस्थानमवध्यं तत् सर्वं युधि निपातितम् ।।

तस्य मे कुरु साचिव्यं तस्य भार्यापहारणे ।
राक्षसेन्द्रवचः श्रुत्वा मारीचो वाक्यमब्रवीत् ।।

सीतामिहानयस्वेति को ब्रवीति ब्रवीहि मे ।
रक्षो लोकस्य सर्वस्य कः शृङ्गं छेत्तुमिच्छति ।।

प्रसीद लङ्केश्वर राक्षसेन्द्र लङ्कां प्रसन्नो भव साधु गच्छ ।
त्वं स्वेषु दारेषु रमस्व नित्यं रामः सभार्यो रमतां वनेषु ।। 31.49

एवमुक्तो दशग्रीवो मारीचेन स रावणः।
न्यवर्तत पुरीं लङ्कां विवेश च गृहोत्तमम् ।।

ततः शूर्पणखा दीना रावणं लोकरावणम्।
अमात्यमध्ये संक्रुद्धा परुषं वाक्यमब्रवीत् ।।

अयुक्तचारं मन्ये त्वां प्राकृतैः सचिवैर्युतः।
स्वजनं च जनस्थानं निहतं नावबुध्यसे ।।

अतिमानिनमग्राह्यम् आत्मसम्भावितं नरम् ।
क्रोधनं व्यसने हन्ति स्वजनोऽपि नराधिपम्।।

परावमन्ता विषयेषु सङ्गवान् न देशकाल प्रविभागतत्त्ववित् ।
अयुक्तबुद्धिर्गुणदोषनिश्चये विपन्नराज्यो नचिराद् विपत्स्यसे।।

ततःशूर्पणखां दृष्ट्वा ब्रुवन्तीं परुषं वचः।
अमात्यमध्ये संक्रुद्धः परिपप्रच्छ रावणः।।

कश्च रामः कथंवीर्यः किंरूपः किंपराक्रमः।
किमर्थं दण्डकारण्यं प्रविष्टश्च सुदुस्तरम्।।

ततो रामं यथान्यायम् आख्यातुमुपचक्रमे।
दीर्घबाहुर्विशालाक्षः चीरकृष्णाजिनाम्बरः।।

निहतानि शरैस्तीक्ष्णैस्तेनैकेन पदातिना।
अर्धाधिकमुहूर्तेन खरश्च सह दूषणः।।

भ्राता चास्य महातेजा गुणतस्तुल्यविक्रमः।
अनुरूपश्च भक्तश्च लक्ष्मणो नाम वीर्यवान्।। 34.13

अमर्षी दुर्जयो जेता विक्रान्तो बुद्धिमान् बली ।
रामस्य दक्षिणो बाहुर्नित्यं प्राणो बहिश्चरः ।।

रामस्य तु विशालाक्षी पूर्णेन्दुसदृशानना ।
धर्मपत्नी प्रिया नित्यं भर्तुः प्रियहिते रता ।।

नैव देवी न गन्धर्वी न यक्षी न च किन्नरी ।
तथारूपा मया नारी दृष्टपूर्वा महीतले ।।

निशम्य रामेण शरैरजिह्मगैः हताञ्जनस्थानगातान्निशाचरान् ।
खरं च दृष्ट्वा निहतं च दूषणम् त्वमद्य कृत्यं प्रतिपत्तुमर्हसि ।।

ततः शूर्पणखावाक्यं तत् श्रुत्वा रोमहर्षणम् ।
सचिवानभ्यनुज्ञाय कार्यं बुद्ध्वा जगाम ह ।।

तत्कार्यमनुगम्यान्तर्यथावदुपलभ्य च ।
दोषाणां च गुणानां च सम्प्रधार्य बलाबलम् ।।

इति कर्तव्यमित्येव कृत्वा निश्चयमात्मनः ।
स्थिरबुद्धिस्ततो रम्यां यानशालां जगाम ह ।।

तं तु गत्वा परं पारं समुद्रस्य नदीपतेः ।
ददर्श नियताहारं मारीचं नाम राक्षसम् ।।

मारीच श्रूयतां तात वचनं मम भाषतः ।
आर्तोऽस्मि मम चार्तस्य भवान्हि परमा गतिः ।।

कर्णनासापहारेण भगिनी मे विरूपिता ।
अस्य भार्यां जनस्थानात् सीतां सुरसुतोपमाम् ।। 36.13

आनयिष्यामि विक्रम्य सहायस्तत्र मे भव ।
त्वया ह्यहं सहायेन पार्श्वस्थेन महाबल ।।

वीर्ये युद्धे च दर्पे च न ह्यस्ति सदृशस्तव ।
उपायतो महान् शूरो महामायाविशारदः ।।

सौवर्णस्त्वं मृगो भूत्वा चित्रो रजतबिन्दुभिः ।
आश्रमे तस्य रामस्य सीतायाः प्रमुखे चर ।।

त्वां तु निःसंशयं सीता दृष्ट्वा तु मृगरूपिणम् ।
गृह्यतामिति भर्तारं लक्ष्मणं चाभिधास्यति ।।

ततस्तयोरपाये तु शून्ये सीतां यथासुखम् ।
निराबाधो हरिष्यामि राहुश्चन्द्रप्रभामिव ।।

स रावणं त्रस्तविषण्णचेता महावने रामपराक्रमज्ञः ।
कृताञ्जलिस्तत्वमुवाच वाक्यं हितं च तस्मै हितमात्मनश्च ।।

सुलभाः पुरुषा राजन् सततं प्रियवादिनः ।
अप्रियस्य च पथ्यस्य वक्ता श्रोता च दुर्लभः ।।

अपि स्वस्ति भवेत् तात सर्वेषामपि रक्षसाम् ।
अपि रामो न सङ्क्रुद्धः कुर्यात् लोकशासनान् ।।

त्वद्विधः कामवृत्तो हि दुःशीलः पापमन्त्रितः ।
आत्मानं स्वजनं राष्ट्रं स राजा हन्ति दुर्मतिः ।।

रामो विग्रहवान् धर्मः साधुः सत्यपराक्रमः ।
राजा सर्वस्य लोकस्य देवानामिव वासवः ।। 37.13

अप्रमेयं हि तत्तेजो यस्य सा जनकात्मजा ।
न त्वं समर्थस्तां हर्तुं रामचापाश्रयां वने ।।

हर्म्यप्रासादसम्बाधां नानारत्नविभूषिताम् ।
द्रक्ष्यसि त्वं पुरीं लङ्कां विनष्टां मैथिलीकृते ।।

निवार्यमाणः सुहृदा मया भृशं प्रसह्य सीतां यदि धर्षयिष्यसि ।
गमिष्यसि क्षीणबलः सबान्धवो यमक्षयं रामशरास्तजीवितः ।।

तदाहं दण्डकारण्ये विचरन् धर्मदूषकः ।
आसादयं तदा रामं तापसं धर्ममाश्रितम् ।।

शरेण मुक्तो रामस्य कथंचित्प्राप्य जीवितम् ।
इह प्रव्राजितो युक्तस्तापसोऽहं समाहितः ।।

अपि रामसहस्राणि भीतः पश्यामि रावण ।
रामभूतमिदं सर्वमरण्यं प्रतिभाति मे ।।

रामश्च हि महातेजा महासत्त्वो महाबलः ।
अपि राक्षसलोकस्य भवेदन्तकरोऽपि हि ।।

इदं वचो बन्धुहितार्थिना मया यथोच्यमानं यदि नाभिपत्स्यसे ।
स बान्धवस्त्यक्ष्यसि जीवितं रणे हतोऽद्य रामेण शरैरजिह्मगैः ।।

मारीचस्य तु तद्वाक्यं क्षमं युक्तं च रावणः ।
उक्तो न प्रतिजग्राह मर्तुकाम इवौषधम् ।।

एवं मे निश्चिता बुद्धिर्हृदि मारीच विद्यते ।
न व्यावर्तयितुं शक्या सेन्द्रैरपि सुरासुरैः ।। 40.7

श्रुणु तत्कर्म साहाय्ये यत्कार्यं वचनान्मम ।
नो चेत्करोषि मारीच हन्मि त्वामहमद्य वै ।।

एतद् कार्यमवश्यं मे बलादपि करिष्यसि ।
राज्ञो विप्रतिकूलस्थो न जातु सुखमेधते ।।

आज्ञप्तो रावणेनेत्थं प्रतिकूलं च राजवत् ।
अब्रवीत् परुषं वाक्यं निःशङ्को राक्षसाधिपम् ।।

अमात्यैः कामवृत्तो हि राजा कापथमाश्रितः ।
निग्राह्यः सर्वथा सद्भिः स निग्राह्यो न गृह्यसे ।।

राज्यं पालयितुं शक्यं न तीक्ष्णेन निशाचर ।
न चाति प्रतिकूलेन नाविनीतेन राक्षस ।।

एवमुक्त्वा तु परुषं मारीचो रावणं ततः ।
गच्छावेत्यब्रवीत् दीनो भयाद् रात्रिंचरप्रभोः ।।

प्रहृष्टस्त्वभवत् तेन वचनेन स राक्षसः ।
परिष्वज्य सुसंश्लिष्टमिदं वचनमब्रवीत् ।।

आरुह्यतामयं शीघ्रं खगो रत्नविभूषितः ।
मया सह रथो युक्तः पिशाचवदनैः खरैः ।।

मनोहरस्निग्धवर्णो रत्नैर्नानाविधैर्वृतः ।
क्षणेन राक्षसो जातो मृगः परमशोभनः ।।

प्रलोभनार्थं वैदेह्या नानाधातुविचित्रितम् ।
विचरन् गच्छते सम्यक् शाद्वलानि समन्ततः ।। 42.21

परिभ्रमति चित्राणि मण्डलानि विनिष्पतन् ।
समुद्वीक्ष्य च सर्वे तं मृगा येऽन्ये वनेचराः ।।

तस्मिन्नेव ततः काले वैदेही शुभलोचना ।
कुसुमापचये व्यग्रा पादपानत्यवर्तत ।
कर्णिकारानशोकांश्च चूतांश्च मदिरेक्षणा ।।

मुक्तामणिविचित्राङ्गं ददर्श परमाङ्गना ।
तं वै रुचिरदन्तोऽहं रूप्यधातुतनूरुहम् ।।

अदृष्टपूर्वं दृष्ट्वा तं नानारत्नमयं मृगम् ।
विस्मयं परमं सीता जगाम जनकात्मजा ।।

आहूयाहूय च पुनस्तं मृगं साधु वीक्षते ।
आगच्छागच्छ शीघ्रं वै आर्यपुत्र सहानुज ।।

तावाहूतौ नरव्याघ्रौ वैदेह्या रामलक्ष्मणौ ।
वीक्षमाणौ तु तं देशं तदा ददृशतुर्मृगम् ।।

शङ्कमानस्तु तं दृष्ट्वा लक्ष्मणो वाक्यमब्रवीत् ।
तमेवैनमहं मन्ये मारीचं राक्षसं मृगम् ।।

मृगो ह्येवं विधो रत्नविचित्रो नास्ति राघव ।
जगत्यां जगतीनाथ मायैषा हि न संशयः ।।

एवं ब्रुवाणं काकुत्स्थं प्रतिवार्य सुचिस्मिता ।
उवाच सीता संहृष्टा छद्मना हृतचेतना ।।

आर्यपुत्राभिरामोऽसौ मृगो हरति मे मनः ।
आनयैनं महाबाहो क्रीडार्थं नो भविष्यति ।। 43.10



आर्यपुत्राभिरामोऽसौ मृगो हरति मे मनः ।
आनयैनं महाबाहो क्रीडार्थं नो भविष्यति ॥

भरतस्यार्यपुत्रस्य श्वश्रूणां मम च प्रभो ।
मृगरूपमिदं दिव्यं विस्मयं जनयिष्यति ।।

जीवन्न यदि तेऽभ्येति ग्रहणं मृगसत्तमः ।
अजिनं नरशार्दूल रुचिरं तु भविष्यति ।।

लोभितस्तेन रूपेण सीतया च प्रचोदितः ।
उवाच राघवो हृष्टो भ्रातरं लक्ष्मणं वचः ।।

एतस्य मृगरत्नस्य परार्घ्ये काञ्चनत्वचि ।
उपवेक्ष्यति वैदेही मया सह सुमध्यमा ।।

अस्यामायत्तमस्माकं यत्कृत्यं रघुनन्दन ।
अहमेनं वधिष्यामि ग्रहीष्याम्यथवा मृगम् ।।

यावद्गच्छामि सौमित्रे मृगमानयितुं द्रुतम् ।
पश्य लक्ष्मण वैदेह्या मृगत्वचि गतां स्पृहाम् ।।

यावत्पृषतमेकेन सायकेन निहन्म्यहम् ।
हत्वैतच्चर्म चादाय शीघ्रमेष्यामि लक्ष्मण ।।

प्रदक्षिणेनातिबलेन पक्षिणा जटायुषा बुद्धिमता च लक्ष्मण ।
भवाप्रमत्तः प्रतिगृह्य मैथिलीं प्रतिक्षणं सर्वत एव शङ्कितः ।।

बद्धासिर्धनुरादाय प्रदुद्राव यतो मृगः ।
तं स्म पश्यति रूपेण द्योतयन्तमिवाग्रतः ।।

दर्शनादर्शनेनैव सोऽपाकर्षत राघवम् ।
स दूरमाश्रमस्यास्य मारीचो मृगतां गतः ।। 44.8

स तं उन्मादयामास मृगरूपो निशाचरः ।
मृगैः परिवृतोऽथान्यैरदूरात् प्रत्यदृश्यत ।।

मुमोच ज्वलितं दीप्तमस्त्रं ब्रह्मविनिर्मितम् ।
शरीरं मृगरूपस्य विनिर्भिद्य शरोत्तमः ।।

व्यनदद् भैरवं नादं धरण्यामल्पजीवितः ।
म्रियमाणस्तु मारीचो जहौ तां कृत्रिमां तनुम् ।।

स प्राप्तकालमाज्ञाय चकार च ततः स्वनम् ।
सदृशं राघवस्यैव हा सीते लक्ष्मणेति च ।।

रामो रुधिरसिक्ताङ्गं चेष्टमानं महीतले ।
जगाम मनसा सीतां लक्ष्मणस्य वचः स्मरन् ।।

तत्र रामं भयं तीव्रमाविवेश विषादजम् ।
राक्षसं मृगरूपं तं हत्वा श्रुत्वा च तत्स्वनम् ।।
त्वरमाणो जनस्थानं ससाराभिमुखं तदा ।।

आर्तस्वरं तु तं भर्तुर्विज्ञाय सदृशं वने ।
उवाच लक्ष्मणं सीता गच्छ जानीहि राघवम् ।।

आक्रन्दमानं तु वने भ्रातरं त्रातुमर्हसि ।
तं क्षिप्रमभिधाव त्वं भ्रातरं शरणैषिणम् ।।

रक्षसां वशमापन्नं सिंहानामिव गोवृषाम् ।
न जगाम तथोक्तस्तु भ्रातुराज्ञाय शासनम् ।।

तमुवाच ततस्तत्र क्षुभिता जनकात्मजा ।
सौमित्रे मित्ररूपेण भ्रातुस्त्वमसि शत्रुवत् ।। 45.5

लोभात्तु मत्कृते नूनं नानुगच्छसि राघवम् ।
व्यसनं ते प्रियं मन्ये स्नेहो भ्रातरि नास्ति ते ।।

कर्तव्यमिह तिष्ठन्त्या यत्प्रधानस्त्वमागतः ।
एवं ब्रुवाणां वैदेहीं बाष्पशोकसमन्विताम् ।।

अब्रवीत् लक्ष्मणस्त्रस्तां सीतां मृगवधूमिव ।
पन्नगासुरगन्धर्वदेवदानवराक्षसैः ।।

अशक्यस्तव वैदेही भर्ता जेतुं न संशयः ।
देवि देवमनुष्येषु गन्धर्वेषु पतत्रिषु ।।

यो रामं प्रतियुध्येत समरे वासवोपमम् ।
अवध्यः समरे रामो नैवं त्वं वक्तुमर्हसि ।।

आगमिष्यति ते भर्ता शीघ्रं हत्वा मृगोत्तमम् ।
न स तस्य स्वरो व्यक्तं न कश्चिदपि दैवतः ।।

गन्धर्वनगरप्रख्या माया तस्य च रक्षसः ।
न्यासभूतासि वैदेहि न्यस्ता मयि महात्मना ।।
लक्ष्मणेनैवमुक्ता तु क्रुद्धा संरक्तलोचना ।।

अब्रवीत्परुषं वाक्यं लक्ष्मणं सत्यवादिनम् ।
अनार्याकरुणारम्भ नृशंस कुलपांसन ।।

रामं विना क्षणमपि नैव जीवामि भूतले ।
इत्युक्तः परुषं वाक्यं सीतया रोमहर्षणम् ।।

अब्रवीत् लक्ष्मणः सीतां प्राञ्जलिः स जितेन्द्रियः ।
वाक्यमप्रतिरूपं तु न चित्रं स्त्रीषु मैथिलि ।
स्वभावस्त्वेष नारीणामेषु लोकेषु दृश्यते ।। 45.21

न्यायवादी यथा वाक्यमुक्तोऽहं परुषं त्वया ।
धिक् त्वामद्य विनश्यन्ती यन्मामेवं विशङ्कसे ।।

गच्छामि यत्र काकुत्स्थः स्वस्ति तेऽस्तु वरानने ।
रक्षन्तु त्वां विशालाक्षि समग्राः वनदेवताः ।।

ततस्तु सीतामभिवाद्य लक्ष्मणः कृताञ्जलिः किञ्चिदभिप्रणम्य ।
अवेक्षमाणो बहुशः स मैथिलीं जगाम रामस्य समीपमात्मवान् ।।

तदासाद्य दशग्रीवः क्षिप्रमन्तरमास्थितः ।
अभिचक्राम वैदेहीं परिव्राजकरूपधृक् ।।

परिव्राजकरूपेण वैदेहीमन्ववर्तत ।
तामाससादातिबलो भ्रातृभ्यां रहितां वने ।

अभ्यवर्तत वैदेहीं चित्रामिव शनैश्चरः ।
सहसा भव्यरूपेण तृणैःकूप इवावृतः ।।

दृष्ट्वा कामशराविद्धो ब्रह्मघोषमुदीरयन् ।
अब्रवीत् प्रश्रितं वाक्यं रहिते राक्षसाधिपः ।।

तामुत्तमां त्रिलोकानां पद्महीनामिव श्रियम् ।
विभ्राजमानां वपुषा रावणः प्रशशंस ह ।।

कथमेका महारण्ये न बिभेषि वरानने ।
कासि कस्य कुतश्च त्वं किन्निमित्तं च दण्डकान् ।।

एका चरसि कल्याणि घोरान् राक्षससेवितान् ।
इति प्रशस्ता वैदेही रावणेन महात्मना ।। 46.32

द्विजातिवेषेण हि तं दृष्ट्वा रावणमागतम् ।
सर्वैरतिथिसत्कारैः पूजयामास मैथिली ।।

निमन्त्र्यमाणः प्रतिपूर्णभाषिणीं नरेन्द्रपत्नीं प्रसमीक्ष्य मैथिलीम् ।
प्रसह्य तस्या हरणे दृढं मनः समर्पयामास वधाय रावणः ।।

ततः सुवेषं मृगयागतं पतिं प्रतीक्षमाणा सहलक्ष्मणं तदा ।
निरीक्षमाणा हरितं ददर्श तन्महद्वनं नैव तु रामलक्ष्मणौ ।।

रावणेन तु वैदेही तदा पृष्टा जिहीर्षुणा ।
परिव्राजकरूपेण शशंसात्मानमात्मना ।।

ब्राह्मणश्चातिथिश्चैष अनुक्ते हि शपेत माम् ।
इति ध्यात्वा मुहूर्तं तु सीता वचनमब्रवीत् ।।

दुहिता जनकस्याहं मैथिलस्य महात्मनः ।
सीता नाम्नास्मि भद्रं ते रामस्य महिषी प्रिया ।।

जटी तापसरूपेण मया सह सहानुजः ।
प्रविष्टो दण्डकारण्यं धर्मनित्यो दृढव्रतः ।।
प्रत्युवाचोत्तरं तीव्रं रावणो राक्षसाधिपः ।।

येन वित्रासिता लोकाः सदेवासुरमानुषाः ।
अहं स रावणो नाम सीते रक्षोगणेश्वरः ।।

लङ्का नाम समुद्रस्य मध्ये मम महापुरी ।
सागरेण परिक्षिप्ता निविष्टा गिरिमूर्धनि ।।

तत्र सीते मया सार्धं वनेषु विचरिष्यसि ।
न चास्य वनवासस्य स्पृहयिष्यसि भामिनि ।। 47.30

रावणेनैवमुक्ता तु कुपिता जनकात्मजा ।
प्रत्युवाचानवद्याङ्गी तमनादृत्य राक्षसम् ।।

पूर्णचन्द्राननं रामं राजवत्सं जितेन्द्रियम् ।
पृथुकीर्त्तिं महाबाहुमहं राममनुव्रता ।।

यो रामस्य प्रियां भार्यां प्रधर्षयितुमिच्छसि ।
अग्निं प्रज्वलितं दृष्ट्वा वस्त्रेणाहर्तुमिच्छसि ।।

तस्मिन्सहस्राक्षसमप्रभावे रामे स्थिते कार्मुकबाणपाणौ ।
हृतापि तेऽहं न जरां गमिष्ये आज्यं यथा मक्षिकयावगीर्णम् ।।

इतीव तद्वाक्यमदुष्टभावा सुदुष्टमुक्त्वा रजनीचरं तम् ।
गात्रप्रकम्पाद् व्यथिता बभूव वातोद्धता सा कदलीव तन्वी ।।

एवं ब्रुवत्यां सीतायां संरब्धः परुषं वचः ।
ललाटे भ्रुकुटिं कृत्वा रावणः प्रत्युवाच ह ।।

भुञ्जाना मानुषान् भोगान् दिव्यांश्च वरवर्णिनि ।
न स्मरिष्यसि रामस्य मानुषस्य गतायुषः ।।

एवमुक्ता तु वैदेही क्रुद्धा संरक्तलोचना ।
अब्रवीत्परुषं वाक्यं रहिते राक्षसाधिपम् ।।

जीवेच्चिरं वज्रधरस्य पश्चाच्छचीं प्रधृष्याप्रतिरूपरूपाम् ।
न मादृशीं राक्षस धर्षयित्वा पीतामृतस्यापि तवास्ति मोक्षः ।।

सद्यः सौम्यं परित्यज्य तीक्ष्णरूपं स रावणः ।
स्वं रूपं कालरूपाभं भेजे वैश्रवणानुजः ।। 49.6

दशास्यो विंशतिभुजो बभूव क्षणदाचरः ।
स परिव्राजकच्छद्म महाकायो विहाय तत् ।।

अभिगम्य सुदुष्टात्मा राक्षसः काममोहितः ।
जग्राह रावणः सीतां बुधः खे रोहिणीमिव ।।

वामेन सीतां पद्माक्षीं मूर्धजेषु करेण सः ।
ऊर्वोस्तु दक्षिणेनैव परिजग्राह पाणिना ।।

ततस्तां परुषैर्वाक्यैरभितर्ज्य महास्वनः ।
अङ्केनादाय वैदेहीं रथमारोपयत्तदा ।।

ततः सा राक्षसेन्द्रेण ह्रियमाणा विहायसा ।
भृशं चुक्रोश मत्तेव भ्रान्तचित्ता यथातुरा ।।

हा लक्ष्मण महाबाहो गुरुचित्तप्रसादक ।
ह्रियमाणां न जानीषे रक्षसा कामरूपिणा ।।

आमन्त्रये जनस्थानं कर्णिकारांश्च पुष्पितान् ।
क्षिप्रं रामाय शसध्वं सीतां हरति रावणः ।।

हंससारससंघुष्टां वन्दे गोदावरीं नदीम् ।
क्षिप्रं रामाय शंस त्वं सीतां हरति रावणः ।।

सा तदा करुणा वाचो विलपन्ती सुदुःखिता ।
वनस्पतिगतं गृध्रं ददर्शायतलोचना ।।

जटायो पश्य मामार्य ह्रियमाणामनाथवत् ।
अनेन राक्षसेन्द्रेणाकरुणं पापकर्मणा ।। 49.38

रामाय तु यथातत्त्वं जटायो हरणं मम ।
लक्ष्मणाय च तत्सर्वमाख्यातव्यमशेषतः ।।

ततः पर्वतशृङ्गाभस्तीक्ष्णतुण्डः खगोत्तमः ।
वनस्पतिगतः श्रीमान् व्याजहार शुभां गिरम् ।।

दशग्रीव स्थितो धर्मे पुराणे सत्यसंश्रयः ।
भ्रातस्त्वं निन्दितं कर्म कर्तुं नार्हसि साम्प्रतम् ।।

सीता नाम वरारोहा यां त्वं हर्तुमिहेच्छसि ।
कथं राजा स्थितो धर्मे परदारान् परामृशेत् ।।

राजा धर्मश्च कामश्च द्रव्याणां चोत्तमो निधिः ।
धर्मः शुभं वा पापं वा राजमूलं प्रवर्तते ।।

क्षिप्रं विसृज वैदेहीं मा त्वां घोरेण चक्षुषा ।
दहेद् दहनभूतेन वृत्रमिन्द्राशनिर्यथा ।।

न शक्तस्त्वं बलाद्धर्तुं वैदेहीं मम पश्यतः ।
हेतुभिर्न्यायसंयुक्तैर्ध्रुवां वेदश्रुतीमिव ।।

अवश्यं तु मया कार्यं प्रियं तस्य महात्मनः ।
जीवितेनापि रामस्य तथा दशरथस्य च ।।
युद्धातिथ्यं प्रदास्यामि यथा प्राणं निशाचर ।।

स सम्प्रहारस्तुमुलस्तयोस्तस्मिन् महामृधे ।
बभूव वातोद्धुतयोर्मेघयोर्गगने यथा ।।

स राक्षसरथे पश्यन् जानकीं बाष्पलोचनाम् ।
अचिन्तयित्वा बाणांस्तान् राक्षसं समभिद्रवत् ।। 51.9

सारथेश्चास्य वेगेन तुण्डेन च महच्छिरः ।
पुनर्व्यपहनच्छ्रीमान् पक्षिराजो महाबलः ।।

स भग्नधन्वा विरथो हताश्वो हतसारथिः ।
अङ्केनादाय वैदेहीं पपात भुवि रावणः ।।

परिश्रान्तं तु तं दृष्ट्वा जरया पक्षियूथपम् ।
उत्पपात पुनर्हृष्टो मैथिलीं गृह्य रावणः ।।

पापानुबन्धो वै यस्य कर्मणः को नु तत् पुमान् ।
कुर्वीत लोकाधिपतिःस्वयंभूर्भगवानपि ।।

एवमुक्त्वा शुभं वाक्यं जटायुस्तस्य रक्षसः ।
निपपात भृशं पृष्ठे दशग्रीवस्य वीर्यवान् ।।

विददार नखैरस्य तुण्डं पृष्ठे समर्पयन् ।
केशांश्चोत्पाटयामास नखपक्षमुखायुधः ।।

ततः क्रोधाद्दशग्रीवः सीतामुत्सृज्य वीर्यवान् ।
पक्षौ पार्श्वौ च पादौ च खड्गमुद्धृत्य सोऽच्छिनत् ।।

स च्छिन्नपक्षः सहसा रक्षसा रौद्रकर्मणा ।
निपपात महागृध्रो धरण्यामल्पजीवितः ।।

सा तु ताराधिपमुखी रावणेन निरीक्ष्य तम् ।
गृध्रराजं विनिहतं विललाप सुदुःखिता ।।

क्रोशन्तीं राम रामेति रामेण रहितां वने ।
जीवितान्ताय केशेषु जग्राहान्तकसन्निभः ।। 52.8

स तु तां राम रामेति रुदतीं लक्ष्मणेति च ।
जगामादाय चाकाशं रावणो राक्षसेश्वरः ।।

चरणान्नूपुरं भ्रष्टं वैदेह्या रत्नभूषितम् ।
विद्युन्मण्डलसंकाशं पपात धरणीतले ।।

नास्ति धर्मः कुतः सत्यं नार्जवं नानृशंसता ।
यत्र रामस्य वैदेहीं सीतां हरति रावणः ।।

इति भूतानि सर्वाणि गणशः पर्यदेवयन् ।
वित्रस्तका दीनमुखा रुरुदुर्मृगपोतकाः ।।

अवेक्षमाणां बहुशो वैदेहीं धरणीतलम् ।
स तामाकुलकेशान्तां विप्रमृष्टविशेषकाम् ।
जहारात्मविनाशाय दशग्रीवो मनस्विनीम् ।।

खमुत्पतन्तं तं दृष्ट्वा मैथिली जनकात्मजा ।
दुःखिता परमोद्विग्ना भये महति वर्तिनी ।।

रोषरोदनताम्राक्षी भीमाक्षं राक्षसाधिपम् ।
रुदती करुणं सीता ह्रियमाणा तमब्रवीत् ।।

ईदृशं गर्हितं कर्म कथं कृत्वा न लज्जसे ।
स्त्रियाश्चाहरणं नीच रहिते च परस्य च ।।

पश्यामीह हि कण्ठे त्वां कालपाशावपाशितम् ।
यथा चास्मिन् भयस्थाने न बिभेषि निशाचर ।।

कथं स राघवो वीरः सर्वास्त्रकुशलो बली ।
न त्वां हन्याच्छरैस्तीक्ष्णैरिष्टभार्यापहारिणम् ।। 53.24

एतच्चान्यच्च परुषं वैदेही रावणाङ्कगा।
भयशोकसमाविष्टा करुणं विललाप ह ।।

ह्रियमाणा तु वैदेही कञ्चिन्नाथमपश्यती।
ददर्श गिरिशृङ्गस्थान् पञ्च वानरपुङ्गवान्।।

तेषां मध्ये विशालाक्षी कौशेयं कनकप्रभम्।
उत्तरीयं वरारोहा शुभान्याभरणानि च।।

मुमोच यदि रामाय शंसेयुरिति भामिनी।
वस्त्रमुत्सृज्य तन्मध्ये निक्षिप्तं सहभूषणम्।।

विक्रोशन्तीं तदा सीतां ददृशुर्वानरोत्तमाः।
स च पम्पामतिक्रम्य लङ्कामभिमुखः पुरीम्।।

प्रविवेश पुरीं लङ्कां रूपिणीं मृत्युमात्मनः।
सोऽभिगम्य पुरीं लङ्कां सुविभक्तमहापथाम्।।

संरूढकक्ष्यां बहुलां स्वमन्तःपुरमाविशत्।
तत्र तामसितापाङ्गीं शोकमोहसमन्विताम्।।

निदधे रावणः सीतां मयो मायामिवासुरीम्।
अब्रवीच्च दशग्रीवः पिशाचीर्घोरदर्शनाः।।

यथा नैनां पुमान् स्त्री वा सीतां पश्यत्यसम्मतः।
मुक्तामणिसुवर्णानि वस्त्राण्याभरणानि च ।।

यत् यदिच्छेत्तदैवास्या देयं मच्छन्दतो यथा।
या च वक्ष्यति वैदेहीं वचनं किंचिदप्रियम्।। 54.16

अज्ञानाद्यदि वा ज्ञानान् न तस्या जीवितं प्रियम्।
तथोक्त्वा राक्षसीस्तास्तु राक्षसेन्द्रः प्रतापवान्।।
स बलाद् दर्शयामास गृहं देवगृहोपमम्।।

हर्म्यप्रासादसम्बाधं स्त्रीसहस्रनिषेवितम्।
नानापक्षिगणैर्जुष्टं नानारत्नसमन्वितम्।।

दिव्यदुन्दुभिनिर्घोषं तप्तकाञ्चनभूषणम्।
सोपानं काञ्चनं चित्रमारुरोह तया सह।।

दीर्घिकाः पुष्करिण्यश्च नानापुष्पसमावृताः।
रावणो दर्शयामास सीतां शोकपरायणाम्।।

दर्शयित्वा तु वैदेहीं कृत्स्नं तद्भवनोत्तमम्।
उवाच वाक्यं पापात्मा सीतां लोभितुमिच्छया।।

बह्वीनामुत्तमस्त्रीणां मम योऽसौ परिग्रहः।
तासां त्वमीश्वरी सीते मम भार्या भव प्रिये।।

सा तथोक्ता तु वैदेही निर्भया शोककर्शिता।
तृणमन्तरतः कृत्वा रावणं प्रत्यभाषत।।

रामो नाम स धर्मात्मा त्रिषु लोकेषु विश्रुतः।
दीर्घबाहुर्विशालाक्षो दैवतं स पतिर्मम।।

प्रत्यक्षं यद्यहं तस्य त्वया वै धर्षिता बलात्।
शयिता त्वं हतः संख्ये जनस्थाने यथा खरः।।

यदि पश्येत् स रामस्त्वां रोषदीप्तेन चक्षुषा।
रक्षस्त्वमद्य निर्दग्धो यथा रुद्रेण मन्मथः।। 56.10

न ते पापमिदं कर्म सुखोदर्कं भविष्यति।
याहं नीता विनाभावं पतिपार्श्वात् त्वया बलात्।।

मां प्रधृष्य स ते कालः प्राप्तोऽयं राक्षसाधम।
आत्मनो राक्षसानां च वधायान्तःपुरस्य च।।

तथाऽहं धर्मनित्यस्य धर्मपत्नी दृढव्रता।
त्वया स्प्रष्टुं न शक्याऽहं राक्षसाधम पापिना।।

इदं शरीरं निःसंये बन्ध वा घातस्य वा ।
वेदं शरीरं रक्ष्यं मे जीवितं वापि राक्षस ।।

न तु शक्यमपक्रोशं पृथिव्यां दातुमात्मनः।
एवमुक्त्वा तु वैदेही क्रोधात् सपरुषं वचः।।

प्रत्युवाच ततः सीतां भयसन्दर्शनं वचः।
श्रृणु मैथिलि मद्वाक्यं मासान्द्वादश भामिनि।।

कालेनानेन नाभ्येषि यदि मां चारुहासिनि।
ततस्त्वां प्रातराशार्थं सूदाश्छेत्स्यन्ति लेशशः।।

शीघ्रमेव हि राक्षस्यो विरूपा घोरदर्शनाः।
दर्पमस्यापनेष्यन्तु मांसशोणितभोजनाः।।

वचनादेव तास्तस्य सुघोरा घोरदर्शनाः।
कृतप्राञ्जलयो भूत्वा मैथिलीं पर्यवारयन्।।

तत्रैनां तर्जनैर्घोरैः पुनः सान्त्वैश्च मैथिलीम्।
आनयध्वं वशं सर्वा वन्यां गजवधूमिव।। 56.31

इति प्रतिसमादिष्टा राक्षस्यो रावणेन ताः ।
अशोकवनिकां जग्मुर्मैथिलीं परिगृह्य तु ।।

सा तु शोकपरीताङ्गी मैथिली जनकात्मजा ।
राक्षसी वशमापन्ना व्याघ्रीणां हरिणी यथा ।।

न विन्दते तत्र तु शर्म मैथिली विरूपनेत्राभिरतीव तर्जिता ।
पतिं स्मरन्ती दयितं च देवरं विचेतनाभूद् भयशोकपीडिता ।।

राक्षसं मृगरूपेण चरन्तं कामरूपिणम् ।
निहत्य रामो मारीचं तूर्णं पथि न्यवर्तत ।।

तस्य संत्वरमाणस्य द्रष्टुकामस्य मैथिलीम् ।
क्रूरस्वनोऽथ गोमायुर्विननादास्य पृष्टतः ।।

अशुभं बत मन्येऽहं गोमायुर्वाश्यते यथा ।
स्वस्ति स्यादपि वैदेह्या राक्षसैर्भक्षणं विना ।।

राक्षसैः सहितैर्नूनं सीताया ईप्सितो वधः ।
काञ्चनश्च मृगो भूत्वा व्यपनीयाश्रमात्तु माम् ।।

सव्यं कृत्वा महात्मानं घोरांश्च ससृजुः स्वरान् ।
तानि दृष्ट्वा निमित्तानि महाघोराणि राघवः ।
न्यवर्तताऽथ त्वरितो जवेनाश्रममात्मनः ।।

ततो लक्ष्मणमायान्तं ददर्श विगतप्रभम् ।
ततोऽविदूरे रामेण समीयाय स लक्ष्मणः ।।

विहाय सीतां विजने वने राक्षससेविते ।
गृहीत्वा च करं सव्यं लक्ष्मणं रघुनन्दनः ।। 57.16

उवाच मधुरोदर्कमिदं परुषमार्तवत् ।
अहो लक्ष्मण गर्ह्यं ते कृतं यत् त्वं विहाय ताम् ।।

मनश्च मे दीनमिहाप्रहृष्टं चक्षुश्च सव्यं कुरुते विकारम् ।
असंशयं लक्ष्मण नास्ति सीता हृता मृता वा पथि वर्तते वा ।।

एवमुक्तस्तु सौमित्रिर्लक्ष्मणः शुभलक्षणः ।
भूयो दुःखसमाविष्टो दुःखितं राममब्रवीत् ।।

न स्वयं कामकारेण तां त्यक्त्वाहमिहागतः ।
प्रचोदितस्तयैवोग्रैः स्त्वत्सकाशमिहागतः ।।

आर्येणेव परिक्रुष्टं लक्ष्मणेति सुविस्तरम् ।
परित्राहीति यद्वाक्यं मैथिल्यास्तच्छ्रुतिं गतम् ।।

किं निमित्तं तु केनाऽपि भ्रातुरालम्ब्य मे स्वरम् ।
विस्वरं व्याहृतं वाक्यं लक्ष्मण त्राहीति मामिति ।।

राक्षसेनेरितं वाक्यं त्रासात्त्राहीति शोभने ।
न भवत्या व्यथा कार्या कुनारीजनसेविता ।।

जातो वा जायमानो वा संयुगे यः पराजयेत् ।
अजेयो राघवो युद्धे देवैः शक्रपुरोगमैः ।।

एवमुक्ता तु वैदेही परिमोहितचेतना ।
उवाचाश्रूणि मुञ्चन्ती दारुणं मामिदं वचः ।।

संकेताद्भरतेन त्वं रामं समनुगच्छसि ।
क्रोशन्तं हि यथात्यर्थं नैनमभ्यवपद्यसे ।। 59.18

एवमुक्तस्तु वैदेह्या संरब्धो रक्तलोचनः ।
क्रोधात्प्रस्फुरमाणोष्ट आश्रमादभिनिर्गतः ।।

एवं ब्रुवाणं सौमित्रिं रामः संतापमोहितः ।
अब्रवीद् दुष्कृतं सौम्य तां विना त्वमिहागतः ।।

सर्वथा त्वपनीतं ते सीतया यत्प्रचोदितः ।
क्रोधस्य वशमागम्य नाकरोः शासनं मम ।।

त्वरमाणो जगामाथ सीतादर्शनलालसः ।
शून्यमावसथं दृष्ट्वा बभूवोद्विग्नमानसः ।।

वृक्षात् वृक्षं प्रधावन् स गिरींश्चापि नदीनदम् ।
बभ्राम विलपन् रामः शोक पङ्कार्णवप्लुतः ।।

दृष्ट्वाऽऽश्रमपदं शून्यं रामो दशरथात्मजः ।
रहितां पर्णशालां च प्रविद्धान्यासनानि च ।।

क्व नु लक्ष्मण वैदेही कं वा देशमितो गता ।
केनाहृता वा सौमित्रे भक्षिता केन वा प्रिया ।।

सीतया रहितोऽहं वै नहि जीवामि लक्ष्मण ।
वृतं शोकेन महता सीताहरणजेन माम् ।।
लक्ष्मणो राममत्यर्थमुवाच हितकाम्यया ।।

वनं सर्वं विचिनुवो यत्र सा जनकात्मजा ।
मन्यसे यदि काकुत्स्थ मा स्म शोके मनःकृथाः ।।

एवमुक्तः स सौहार्दाल्लक्ष्मणेन समाहितः ।
सह सौमित्रिणा रामो विचेतुमुपचक्रमे ।। 61.19

तौ वनानि गिरींश्चैव सरितश्च सरांसि च ।
निखिलेन विचिन्वन्तौ सीतां दशरथात्मजौ ।।

सीतामपश्यन् धर्मात्मा शोकोपहतचेतनः ।
विललाप महाबाहू रामःकमललोचनः ।।

कथं नाम प्रवेक्ष्यामि शून्यमन्तःपुरं मम ।
निर्वीर्य इति लोको मां निर्दयश्चेति वक्ष्यति ।।

कुशलं परिपृच्छन्तं कथं शक्ष्ये निरीक्षितुम् ।
विदेहराजो नूनं मां दृष्ट्वा विरहितं तया ।।

मन्ये दीर्घा भविष्यन्ति रात्रयो मम जाग्रतः ।
मन्दाकिनीं जनस्थानमिमं प्रस्रवणं गिरिम् ।।

क्व सीतेति निरीक्षन्वै बाष्पसंरुद्धया गिरा ।
एवमुक्ता नरेन्द्रेण ते मृगाः सहसोत्थिताः ।।

दक्षिणाभिमुखाः सर्वे दर्शयन्तो नभः स्थलम् ।
मैथिली ह्रियमाणा सा दिशं यामभ्यपद्यत ।।

तेन मार्गेण गच्छन्तो निरीक्षन्ते नराधिपम् ।
येन मार्गं च भूमिं च निरीक्षन्ते स्म ते मृगाः ।।

उवाच लक्ष्मणो धीमाञ्ज्येष्ठं भ्रातरमार्तवत् ।
क्व सीतेति त्वया पृष्टा यथेमे सहसोत्थिताः ।।

दर्शयन्ति क्षितिं चैव दक्षिणां च दिशं मृगाः ।
साधु गच्छावहे देव दिशमेतां च नैर्ऋतीम् ।। 64.22

लक्ष्मणानुगतःश्रीमान् वीक्षमाणो वसुंधराम् ।
एवं सम्भाषमाणौ तावन्योन्यं भ्रातरावुभौ ।।

वसुन्धरायां पतितपुष्पमार्गमपश्यताम् ।
पुष्पवृष्टिं निपतितां दृष्ट्वा रामो महीतले ।।

ददर्श भूमौ निष्क्रान्तं राक्षसस्य पदं महत् ।
त्रस्ताया रामकाङ्क्षिण्यः प्रधावन्त्या इतस्ततः ।।

राक्षसेनानुसृप्ताय वैदेह्याश्च पदानि तु ।
स समीक्ष्य परिक्रान्तं सीताया राक्षसस्य च ।।

भग्नं धनुश्च तूणी च विकीर्णं बहुधा रथम् ।
सम्भ्रान्तहृदयो रामः शशंस भ्रातरं प्रियम् ।।

तप्तबिन्दुनिकाशैश्च चित्रैः क्षतजबिन्दुभिः ।
आवृतं पश्य सौमित्रे सर्वतो धरणीतलम् ।।

मुक्तामणिचितं चेदं रमणीयं विभूषितम् ।
धरण्यां पतितं सौम्य कस्य भग्नं महद् धनुः ।।

हृता मृता वा वैदेही भक्षिता वा तपस्विनी ।
न धर्मस्त्रायते सीतां ह्रियमाणां महावने ।।

भविष्यन्ति मम क्रोधात् त्रैलोक्ये विप्रणाशिते ।
देवदानवयक्षाणां लोका ये रक्षसामपि ।।

अदृष्टपूर्वं संक्रुद्धं दृष्ट्वा रामं स लक्ष्मणः ।
अब्रवीत् प्राञ्जलिर्वाक्यं मुखेन परिशुष्यता ।। 65.3

दिव्यं च मानुषं चैवमात्मनश्च पराक्रमम् ।
इक्ष्वाकुवृषभावेक्ष्य यतस्व द्विषतां वधे ।।

पूर्वजोऽप्युक्तमात्रस्तु लक्ष्मणेन सुभाषितम् ।
सारग्राही महासारं प्रतिजग्राह राघवः ।।

किं करिष्यावहे वत्स क्व वा गच्छाव लक्ष्मण ।
केनोपायेन पश्यावः सीतामिह विचिन्तय ।।

तं तथा परितापार्तं लक्ष्मणो वाक्यमब्रवीत् ।
इदमेव जनस्थानं त्वमन्वेषितुमर्हसि ।।

आपत्सु न प्रकम्पन्ते वायुवेगैरिवाचलाः ।
इत्युक्तस्तद् वनं सर्वं विचचार स लक्ष्मणः ।।

क्रुद्धो रामः शरं घोरं संधाय धनुषि क्षुरम् ।
ततः पर्वतकूटाभं महाभागम् द्विजोत्तमम् ।।
ददर्श पतितं भूमौ क्षतजार्दं जटायुषम् ।।

तं दीनं दीनया वाचा सफेनं रुधिरं वमन् ।
अभ्यभाषत पक्षी स रामं दशरथात्मजम् ।।

त्वया विरहिता देवी लक्ष्मणेन च राघव ।
ह्रियमाणा मया दृष्टा रावणेन बलीयसा ।।

सीतामभ्यवपन्नोऽहं रावणश्च रणे प्रभो ।
विध्वंसित रथच्छत्रः पतितो धरणीतले ।।

अयं तु सारथिस्तस्य मत्पक्षनिहतो भुवि ।
परिश्रान्तस्य मे पक्षौ छित्वा खड्गेन रावणः ।। 68.19

सीतामादाय वैदेहीमुत्पपात विहायसम् ।
रक्षसा निहतं पूर्वं मां न हन्तुं त्वमर्हसि ।।

रामस्तस्य तु विज्ञाय सीतासक्तां प्रियां कथाम् ।
गृध्रराजं परिष्वज्य परित्यज्य महद् धनुः ।।

निपपातावशो भूमौ रुरोद सहलक्ष्मणः ।
ब्रूहि ब्रूहीति रामस्य ब्रुवाणस्य कृताञ्जलेः ।
त्यक्त्वा शरीरं गृध्रस्य प्राणा जग्मुर्विहायसम् ।।

तं गृध्रं प्रेक्ष्य ताम्राक्षं गतासुमचलोपमम् ।
रामः सुबहुभिर्दुःखैर्दीनः सौमित्रिमब्रवीत् ।।

सर्वत्र खलु दृश्यन्ते साधवो धर्मचारिणः ।
शूराः शरण्याः सौमित्रे तिर्यग्योनिगतेष्वपि ।।

सौमित्रे हर काष्टानि निर्मथिष्यामि पावकम् ।
गृध्रराजं दिधक्ष्यामि मत्कृते निधनं गतम् ।।

मया त्वं समनुज्ञातो गच्छ लोकाननुत्तमान् ।
गृध्रराज महासत्व संस्कृतश्च मया व्रज ।।

एवमुक्त्वा चितां दीप्तामारोप्य पतगेश्वरम् ।
ददाह रामो धर्मात्मा स्वबन्धुमिव दुःखितः ।।

तां दिशं दक्षिणां गत्वा शरचापासिधारिणौ ।
क्रौञ्चारण्यं विविशतुर्गहनं तौ महौजसौ ।।

ततःपूर्वेण तौ गत्वा त्रिक्रोशं भ्रातरौ तदा ।
क्रौञ्चारण्यमतिक्रम्य मतङ्गाश्रममन्तरे ।। 69.8

दृष्ट्वा तु तद्वनं घोरं बहुभीममृगद्विजम् ।
नानावृक्षसमाकीर्णं सर्वं गहनपादपम् ।।

अथ तं समभिक्रम्य क्रोशमात्रे ददर्शतुः ।
महान्तं दारुणं भीमं कबन्धं भुजसंवृतम् ।।

स महाबाहुरत्यर्थं प्रसार्य विपुलौ भुजौ ।
जग्राह सहितावेव राघवौ पीडयन् बलात् ।।

ततस्तौ देशकालज्ञौ खड्गाभ्यामेव राघवौ ।
अच्छिन्दन्तां सुसंहृष्टौ बाहू तस्यांसदेशतः ।।

स पपात महाबाहुश्छिन्नबाहुर्महास्वनः ।
खं च गां च दिशश्चैव नादयन् जलदो यथा ।।

स निकृत्तौ भुजौ दृष्ट्वा शोणितौघपरिप्लुतः ।
दीनः पप्रच्छ तौ वीरौ कौ युवामिति दानवः ।।

अयमिक्ष्वाकुदायादो रामो नाम जनैः श्रुतः ।
तस्यैवावरजं विद्धि भ्रातरं मां च लक्ष्मणम् ।।

अस्य देवप्रभावस्य वसतो विजने वने ।
रक्षसापहृता भार्या यामिच्छन्ताविहागतौ ।।

त्वं तु को वा किमर्थं वा कबन्धसदृशो वने ।
आस्येनोरसि दीप्तेन भग्नजङ्घो विचेष्टसे ।।

एवमुक्तः कबन्धस्तु लक्ष्मणेनोत्तरं वचः ।
उवाच वचनं प्रीतस्तदिन्द्रवचनं स्मरन् ।। 70.17

विरूपं यच्च मे रूपं प्राप्तं ह्यविनयाद् यथा ।
तन्मे शृणु नरव्याघ्र तत्त्वतः शंसतस्तव ।।

ऋषीन् वनगतान् राम त्रासयामि ततस्ततः ।
ततः स्थूलशिरा नाम महर्षिः कोपितो मया ।।

एतदेवं नृशंसं ते रूपमस्तु विगर्हितम् ।
स मया याचितः क्रुद्धः शापस्यान्तो भवेदिति ।।

अभिशापकृतस्येति तेनेदं भाषितं वचः ।
यदा छित्वा भुजौ रामस्त्वां दहेद् विजने वने ।।
तदा त्वं प्राप्स्यसे रूपं स्वमेव विपुलं शुभम् ।।

तदा चास्यं च मे कुक्षौ तीक्ष्णदंष्ट्रमकल्पयत् ।
सोऽहं भुजाभ्यां दीर्घाभ्यां संक्षिप्यास्मिन् वनेचरान् ।।

छेत्स्यते समरे बाहू तदा स्वर्गं गमिष्यसि ।
अनेन वपुषा तात वनेऽस्मिन् राजसत्तम ।।

इमां बुद्धिं पुरस्कृत्य देहन्यासकृतश्रमः ।
स त्वं रामोऽसि भद्रं ते नाहमन्येत राघव ।।

शक्यो हन्तुं यथा तत्त्वमेवमुक्तं महर्षिणा ।
अहं हि पतिसाचिव्यं करिष्यामि नरर्षभ ।।

मित्रं चैवोपदेक्ष्यामि युवाभ्यां संस्कृतोऽग्निना ।
एवमुक्तस्तु धर्मात्मा दनुना तेन राघवः ।।

धक्ष्यामस्त्वां वयं वीर श्वभ्रे महति कल्पिते ।
स त्वं सीतां समाचक्ष्व येन वा यत्र वा हृता ।। 71.25

लक्ष्मणस्तु महोल्काभिर्ज्वलिताभिः समन्ततः।
चितामादीपयामास सा प्रजज्वाल सर्वतः।।

स विधूय चितामाशु विधूमोऽग्निरिवोत्थितः।
अरजे वाससी बिभ्रन् माल्यं दिव्यं महाबलः।।

सोऽन्तरिक्षगतो वाक्यं कबन्धो राममब्रवीत्।
शृणु राघव तत्त्वेन यथा सीतामवाप्स्यसि।।

श्रूयतां राम वक्ष्यामि सुग्रीवो नाम वानरः।
भ्रात्रा निरस्तः क्रुद्धेन वालिना शक्रसूनुना।।

ऋष्यमूके गिरिवरे पम्पापर्यन्तशोभिते।
निवसत्यात्मवान् वीर चतुर्भिः सह वानरैः ।।

स ते सहायो मित्रं च सीतायाः परिमार्गणे।
भविष्यति हि ते राम मा च शोके मनः कृथाः।।

गच्छ शीघ्रमितो वीर सुग्रीवं तं महाबलम्।
वयस्यं तं कुरु क्षिप्रमितो गत्वाद्य राघव।।

कृतज्ञः कामरूपी च सहायार्थी च वीर्यवान्।
शक्तौ ह्यद्य युवां कर्तुं कार्यं तस्य चिकीर्षितम्।।

तेषां गतानामद्यापि दृश्यते परिचारिणी।
श्रमणी शबरी नाम काकुत्स्थ चिरजीविनी।।

त्वां तु धर्मे स्थिता नित्यं सर्वभूतनमस्कृतम्।
दृष्ट्वा देवोपमं राम स्वर्गलोकं गमिष्यति।। 73.27

मतङ्गवनमित्येव विश्रुतं रघुनन्दन ।
तस्मिन् नन्दनसंकाशे देवारण्योपमे वने ।।

बहुमूलफलो रम्यो नानानगसमाकुलः ।
तस्यां वसति धर्मात्मा सुग्रीवः सह वानरैः ।।

प्रस्थितौ त्वं व्रजस्वेति वाक्यमूचतुरन्तिके ।
गम्यतां कार्यसिध्यर्थमिति तावब्रवीत्स च ।।
सुप्रीतौ तावनुज्ञाप्य कबन्धः प्रस्थितस्तदा ।।

तौ कबन्धेन तं मार्गं पम्पाया दर्शितं वने ।
आतस्थुर्दिशं गृह्य प्रतीचीं नृवरात्मजौ ।।

तौ पुष्करिण्याः पम्पायास्तीरमासाद्य पश्चिमम् ।
अपश्यतां ततस्तत्र शबर्यां रम्यमाश्रमम् ।।

तौ दृष्ट्वा तु तदा सिद्धा समुत्थाय कृताञ्जलिः ।
पादौ जग्राह रामस्य लक्ष्मणस्य च धीमतः ।।

पाद्यमाचमनीयं च सर्वं प्रादाद् यथाविधि ।
तामुवाच ततो रामः श्रमणीं धर्मसंस्थिताम् ।।

कच्चित्ते निर्जिता विघ्नाः कच्चित्ते मनसः सुखम् ।
कच्चित्ते गुरुशुश्रूषा सफला चारुभाषिणी ।।

रामेण तापसी पृष्टा सा सिद्धा सिद्धसम्मता ।
शशंस शबरी वृद्धा रामाय प्रत्यवस्थिता ।। 74.10



मया तु विविधं वन्यं संचितं पुरुषर्षभ ।
तवार्थे पुरुषव्याघ्र पम्पायास्तीरसंभवम् ॥

अद्य प्राप्ता तपः सिद्धिस्तव सन्दर्शनात् मया ।
अद्य मे सफलं जन्म गुरवश्च सुपूजिताः ।।

तवाहं चक्षुषा सौम्य पूता सौम्येन मानद ।
गमिष्याम्यक्षयान् लोकांस्त्वत्प्रसादादरिन्दम ।।

चित्रकूटं त्वयि प्राप्ते विमानैरतुलप्रभैः ।
इतस्ते दिवमारूढा यानहं पर्यचारिषम् ।।

तैश्चाहमुक्ता धर्मज्ञैर्महाभागैर्महर्षिभिः ।
आगमिष्यति ते रामः सुपुण्यमिममाश्रमम् ।।

स ते प्रतिग्रहीतव्यः सौमित्रिसहितोऽथितिः ।
तं च दृष्ट्वा वरान् लोकान् अक्षयांस्त्वं गमिष्यसि ।।

तामुवाच ततो रामः शबरीं संशितव्रताम् ।
अर्चितोऽहं त्वया भद्रे गच्छ कामं यथासुखम् ।।

इत्येवमुक्त्वा जटिला चीरकृष्णाजिनाम्बरा ।
अनुज्ञाता तु रामेण हुत्वाऽऽत्मानं हुताशने ।।
ज्वलत्पावकसङ्काशा स्वर्गमेव जगाम ह ।।

दिवं तु तस्यां यातायां शबर्यां स्वेन तेजसा ।
लक्ष्मणेन सह भ्रात्रा चिन्तयामास राघवः ।।

चिन्तयित्वा तु धर्मात्मा प्रभावं तं महात्मनाम् ।
हितकारिणमेकाग्रं लक्ष्मणं राघवोऽब्रवीत् ।। 75.2

ऋष्यमूको गिरिर्यत्र नातिदूरे प्रकाशते ।
यस्मिन् वसति धर्मात्मा सुग्रीवोंऽशुमतःसुतः ।।
तदधीनं हि मे कार्यं सीतायाः परिमार्गणम् ।

क्रमेण गत्वा प्रविलोकयन्वनं ददर्श पम्पां शुभदर्शकाननाम् ।
अनेकनानाविधपक्षिसंकुलां विवेश रामः सह लक्ष्मणेन ।।

**।। इत्यार्षे श्रीमद् वाल्मीकिरामायणसंग्रहे**

**अरण्यकाण्डम् सम्पूर्णम् ।।**

# ।। किष्किन्धाकाण्डम् ।।

तौ तु दृष्ट्वा महात्मानौ भ्रातरौ रामलक्ष्मणौ ।
वरायुधधरौ वीरौ सुग्रीवः शङ्कितोऽभवत् ।।

ततस्तु भयसन्त्रस्तं वालिकिल्बिषशङ्कितम् ।
उवाच हनुमान् वाक्यं सुग्रीवं वाक्यकोविदः ।।

बुद्धिर्विज्ञानसम्पन्नैरिङ्गितैः सर्वमाचर ।
नह्यबुद्धिं गतो राजा सर्वभूतानि शास्ति हि ।।

सुग्रीवस्तु शुभं वाक्यं श्रुत्वा सर्वं हनूमतः ।
ततःशुभतरं वाक्यं हनूमन्तमुवाच ह ।।

अरयश्च मनुष्येण विज्ञेयाश्छद्मचारिणः ।
विश्वस्तानामविश्वस्ताः छिद्रेषु प्रहरन्त्यपि ।।

ममैवाभिमुखं स्थित्वा पृच्छ त्वं हरिपुङ्गव ।
प्रयोजनं प्रवेशस्य वनस्यास्य धनुर्धरौ ।।

शुद्धात्मानौ यदि त्वेतौ जानीहि त्वं प्लवङ्गम ।
व्याभाषितैर्वा रूपैर्वा विज्ञेया दुष्टतानयोः ।।

तथेति सम्पूज्य वचस्तु तस्य कपेः सुभीतस्य दुरासदस्य ।
महानुभावो हनुमान् ययौ तदा स यत्र रामोऽतिबली सलक्ष्मणः ।।

कपिरूपं परित्यज्य हनुमान्मारुतात्मजः ।
भिक्षुरूपं ततो भेजे शठबुद्धितया कपिः ।। 3.2

आबभाषे च तौ वीरौ यथावत्प्रशशंस च ।
सम्पूज्य विधिवद् वीरौ हनुमान् वानरोत्तमः ।।

देशं कथमिमं प्राप्तौ भवन्तौ वरवर्णिनौ ।
त्रासयन्तौ मृगगणान् अन्यांश्च वनचारिणः ।।

श्रीमन्तौ रूपसम्पन्नौ वृषभश्रेष्टविक्रमौ ।
हस्तिहस्तोपमभुजौ द्युतिमन्तौ नरर्षभौ ।।

यदृच्छयेव सम्प्राप्तौ चन्द्रसूर्यौ वसुन्धराम् ।
विशालवक्षसौ वीरौ मानुषौ देवरूपिणौ ।।

सुग्रीवो नाम धर्मात्मा कश्चिद्वानरपुङ्गवः ।
वीरो विनिकृतो भ्रात्रा जगद् भ्रमति दुःखितः ।।

प्राप्तोऽहं प्रेषितस्तेन सुग्रीवेण महात्मना ।
राज्ञा वानरमुख्यानां हनुमान्नाम वानरः ।।

युवाभ्यां स हि धर्मात्मा सुग्रीवः सख्यमिच्छति ।
तस्य मां सचिवं विद्धि वानरं पवनात्मजम् ।।

एवमुक्त्वा तु हनुमांस्तौ वीरौ रामलक्ष्मणौ ।
वाक्यज्ञो वाक्यकुशलःपुनर्नोवाच किञ्चन ।।

एतच्छ्रुत्वा वचस्तस्य रामो लक्ष्मणमब्रवीत् ।
प्रहृष्टवदनः श्रीमान् भ्रातरं पार्श्वतः स्थितम् ।।

तमभ्यभाष सौमित्रे सुग्रीवसचिवं कपिम् ।
वाक्यज्ञं मधुरैर्वाक्यैः स्नेहयुक्तमरिन्दमम् ।। 3.27



सचिवोऽयं कपीन्द्रस्य सुग्रीवस्य महात्मनः ।
तमेव काङ्क्षमाणस्य ममान्तिकमुपागतः ॥

संस्कारक्रमसम्पन्नाम् अद्भुतामविलम्बिताम् ।
उच्चारयति कल्याणीं वाचं हृदयहारिणीम् ।।

एवंगुणगणैर्युक्ता यस्य स्युः कार्यसाधकाः ।
तस्य सिध्यन्ति सर्वेऽर्था दूतवाक्यप्रचोदिताः ।।

एवमुक्तस्तु सौमित्रिः सुग्रीवसचिवं कपिम् ।
अभ्यभाषत वाक्यज्ञो वाक्यज्ञं पवनात्मजम् ।।

विदिता नौ गुणा विद्वन् सुग्रीवस्य महात्मनः ।
तमेव चावां मार्गावः सुग्रीवं प्लवगेश्वरम् ।।

तत्तस्य वाक्यं निपुणं निशम्य प्रहृष्टरूपः पवनात्मजः कपिः ।
मनःसमाधाय जयोपपन्नौ सख्यं तदा कर्तुमियेष ताभ्याम् ।।

ततः परमसंहृष्टो हनूमान्प्लवगोत्तमः ।
प्रत्युवाच ततो वाक्यं रामं वाक्यविशारदः ।।

किमर्थं त्वं वनं घोरं पम्पाकाननमण्डितम् । आगतः
सानुजो दुर्गं नानाव्यालमृगायुतम् ।।

तस्य तद्वचनं श्रुत्वा लक्ष्मणो रामचोदितः ।
आचचक्षे महात्मानं रामं दशरथात्मजम् ।।

राजा दशरथो नाम द्युतिमान् धर्मवत्सलः ।
तस्यायं पूर्वजः पुत्रो रामो नाम जनैःश्रुतः ।।

राजलक्षणसंयुक्तः संयुक्तो राज्यसम्पदा ।
राज्याद् भ्रष्टो मया वस्तुं वने सार्धमिहागतः ।। 4.10

भार्यया च महाभाग सीतयानुगतो वशी ।
दिनक्षये महातेजाः प्रभयेव दिवाकरः ।।

रक्षसापहृता भार्या रहिते कामरूपिणा ।
तच्च न ज्ञायते रक्षः पत्नी येनास्य वा हृता ।।

दनुर्नाम दितेःपुत्रः शापाद् राक्षसतां गतः ।
आख्यातस्तेन सुग्रीवः समर्थो वानराधिपः ।।

स ज्ञास्यति महावीर्यस्तव भार्यापहारिणम् ।
एवमुक्त्वा दनुः स्वर्गं भ्राजमानो दिवं गतः ।।

एतत्ते सर्वमाख्यातं याथातथ्येन पृच्छतः ।
अहं चैव च रामश्च सुग्रीवं शरणं गतौ ।।

सर्वलोकस्य धर्मात्मा शरण्यः शरणं पुरा ।
गुरुर्मे राघवः सोऽयं सुग्रीवं शरणं गतः ।।

यस्य प्रसादे सततं प्रसीदेयुरिमाः प्रजाः ।
स रामो वानरेन्द्रस्य प्रसादमभिकाङ्क्षते ।।

शोकाभिभूते रामे तु शोकार्ते शरणं गते ।
कर्तुमर्हति सुग्रीवःप्रसादं सह यूथपैः ।।

एवं ब्रुवाणं सौमित्रिं करुणं साश्रुपातनम् ।
हनूमान् प्रत्युवाचेदं वाक्यं वाक्यविशारदः ।।

ईदृशा बुद्धिसंपन्ना जितक्रोधा जितेन्द्रियाः ।
द्रष्टव्या वानरेन्द्रेण दिष्ट्या दर्शनमागताः ।। 4.26

स हि राज्याच्च विभ्रष्टः कृतवैरश्च वालिना।
हृतदारो वने त्रस्तो भ्रात्रा विनिकृतो भृशम्।।

करिष्यति स साहाय्यं युवयोर्भास्करात्मजः।
सुग्रीवःसह चास्माभिः सीतायाःपरिमार्गणे।।

इत्येवमुक्त्वा हनुमान् श्लक्ष्णं मधुरया गिरा।
बभाषे साधु गच्छामः सुग्रीवमिति राघवम्।।

ततःस सुमहाप्राज्ञो हनूमान् मारुतात्मजः।
जगामादाय तौ वीरौ हरिराजाय राघवौ।।

ऋष्यमूकात्तु हनुमान् गत्वा तं मलयं गिरिम्।
आचचक्षे तदा वीरौ कपिराजाय राघवौ।।

तपसा सत्यवाक्येन वसुधा येन पालिता।
स्त्रीहेतोस्तस्य पुत्रोऽयं रामोऽरण्यं समागतः।।

तस्यास्य वसतोऽरण्ये नियतस्य महात्मनः।
रावणेन हृता भार्या स त्वां शरणमागतः।।

श्रुत्वा हनूमतो वाक्यं सुग्रीवो वानराधिपः।
दर्शनीयतमो भूत्वा प्रीत्योवाच च राघवम्।।

भवान् धर्मविनीतश्च सुतपाः सर्ववत्सलः।
आख्याता वायुपुत्रेण तत्त्वतो मे भवद्गुणाः।।

रोचते यदि मे सख्यं बाहुरेष प्रसारितः।
गृह्यतां पाणिना पाणिर्मर्यादां बध्यतां ध्रुवा।। 5.11

हृष्टःसौहृदमालम्ब्य पर्यष्वजत पीडितम् ।
ततो हनूमान् सन्त्यज्य भिक्षुरूपमरिन्दमः ।।

काष्टयोः स्वेन रूपेण जनयामास पावकम् ।
दीप्यमानं ततो वह्निं पुष्पैरभ्यर्च्य सत्कृतम् ।।

सुग्रीवो राघवश्चैव वयस्यत्वमुपागतौ ।
ततः सुप्रीतमनसौ तावुभौ हरिराघवौ ।।

सालस्यास्तीर्य सुग्रीवो निषसाद सराघवः ।
लक्ष्मणायाथ संहृष्टो हनुमान् मारुतात्मजः ।

शाखां चन्दनवृक्षस्य ददौ परमपुष्पिताम् ।
ततःप्रहृष्टःसुग्रीवःश्लक्ष्णं मधुरया गिरा ।।

प्रत्युवाच तदा रामं हर्षव्याकुललोचनः ।
हृतभार्यो वने त्रस्तो दुर्गमेतदुपाश्रितः ।
सोऽहं त्रस्तो वने भीतो वसाम्युद्भ्रान्तचेतनः ।।

वालिना निकृतो भ्रात्रा कृतवैरश्च राघव ।
वालिनो मे महाभाग भयार्तस्याभयं कुरु ।।

भार्यावियोगजं दुःखं नचिरात् त्वं विमोक्ष्यसे ।
अहं तामानयिष्यामि नष्टां वेदश्रुतीमिव ।।

अनुमानात्तु जानामि मैथिली सा न संशयः ।
ह्रियमाणा मया दृष्टा रक्षसा रौद्रकर्मणा ।।

क्रोशन्ती रामरामेति लक्ष्मणेति च विस्वरम् ।
स्फुरन्ती रावणस्याङ्के पन्नगेन्द्रवधूर्यथा ।। 6.10



उत्तरीयं गृहीत्वा तु शुभान्याभरणानि च ।
इदं पश्येति रामाय दर्शयामास वानरः ।

आत्मना पञ्चमं मां हि दृष्ट्वा शैलतले स्थितम् ।
उत्तरीयं तथा त्यक्तं शुभान्याभरणानि च ।।

तान्यस्माभिर्गृहीतानि निहितानि च राघव ।
आनयिष्याम्यहं तानि प्रत्यभिज्ञातुमर्हसि ।।

उत्तरीयं गृहीत्वा तु स तान्याभरणानि च ।
इदं पश्येति रामाय दर्शयामास वानरः ।।

अविच्छिन्नाश्रुवेगस्तु सौमित्रिं प्रेक्ष्य पार्श्वतः ।
परिदेवयितुं दीनं रामः समुपचक्रमे ।।

पश्य लक्ष्मण वैदेह्या सन्त्यक्तं ह्रियमाणया ।
उत्तरीयमिदं भूमौ शरीराद् भूषणानि च ।।

एवमुक्तस्तु रामेण लक्ष्मणो वाक्यमब्रवीत् ।
नाहं जानामि केयूरे नाहं जानामि कुण्डले ।
नूपुरे त्वभिजानामि नित्यं पादाभिवन्दनात् ।।

ततस्तु राघवो वाक्यं सुग्रीवमिदमब्रवीत् ।
ब्रूहि सुग्रीव कं देशं ह्रियन्ती लक्षिता त्वया ।
रक्षसा रौद्ररूपेण मम प्राणप्रिया हृता ।।

एवमुक्तस्तु सुग्रीवो रामेणार्तेन वानरः ।
अब्रवीत् प्राञ्जलिर्वाक्यं सबाष्पं बाष्पगद्गदः ।।

सत्यं तु प्रतिजानामि त्यज शोकमरिन्दम ।
करिष्यामि तथा यत्नं यथा प्राप्स्यसि मैथिलीम् ।। 7.3

अलं वैक्लव्यमालम्ब्य धैर्यमात्मगतं स्मर ।
त्वद्विधानां न सदृशमीदृशं बुद्धिलाघवम् ।।

बाष्पमापतितं धैर्यान्निग्रहीतुं त्वमर्हसि ।
मर्यादां सत्त्वयुक्तानां धृतिं नोत्स्रष्टुमर्हसि ।।

मधुरं सान्त्वितस्तेन सुग्रीवेण स राघवः ।
मुखमश्रुपरिक्लिन्नं वस्त्रान्तेन प्रमार्जयत् ।।

एवमेकान्तसम्पृक्तौ ततस्तौ नरवानरौ ।
उभावन्योन्यसदृशं सुखं दुःखमभाषताम् ।।

सुखोपविष्टं रामं तु प्रसन्नमुदधिं यथा ।
सालपुष्पावसंकीर्णे तस्मिन् गिरिवरोत्तमे ।।

ततःप्रहृष्टःसुग्रीवःश्लक्ष्णया शुभया गिरा ।
उवाच प्रणयाद् रामं हर्षव्याकुलिताक्षरम् ।।

अहं विनिकृतो भ्रात्रा चराम्येष भयार्दितः ।
ऋष्यमूकं गिरिवरं हृतभार्यः सुदुःखितः ।।

वालिनो मे भयार्तस्य सर्वलोक अभयङ्कर ।
ममापि त्वमनाथस्य प्रसादं कर्तुमर्हसि ।।

एवमुक्तस्तु तेजस्वी धर्मज्ञो धर्मवत्सलः ।
प्रत्युवाच स काकुत्स्थः सुग्रीवं प्रहसन्निव ।।

वालिसंज्ञममित्रं ते भ्रातरं कृतकिल्बिषम् ।
शरैर्विनिहतं पश्य विकीर्णमिव पर्वतम् ।। 8.24

राघवस्य वचः श्रुत्वा सुग्रीवो वाहिनीपतिः ।
प्रहर्षमतुलं लेभे साधुसाध्विति चाब्रवीत् ।।

संक्षेपस्त्वेष मे राम किमुक्त्वा विस्तरं हि ते ।
स मे ज्येष्टो रिपुर्भ्राता वाली विश्रुतपौरुषः ।।

सुखं हि कारणं श्रुत्वा वैरस्य तव वानर ।
आनन्तर्याद् विधास्यामि सम्प्रधार्य बलाबलम् ।।

ततः प्रहृष्टवदनः सुग्रीवो लक्ष्मणाग्रजे ।
वैरस्य कारणं तत्त्वमाख्यातुमुपचक्रमे ।।

वाली नाम मम भ्राता ज्येष्ठः शत्रुनिषूदनः ।
पितुर्बहुमतो नित्यं मम चापि तथा पुरा ।।

राज्यं प्रशासतस्तस्य पितृपैतामहं महत् ।
अहं सर्वेषु कालेषु प्रणतःप्रेष्यवत्स्थितः ।।

मायावी नाम तेजस्वी पूर्वजो दुन्दुभेःसुतः ।
तेन तस्य महद्वैरं वालिनःस्त्रीकृतं पुरा ।।

स तु सुप्ते जने रात्रौ किष्किन्धाद्वारमागतः ।
नर्दति स्म सुसंरब्धो वालिनं चाह्वयद्रणे ।।

स तु निर्धूय सर्वान्नो निर्जगाम महाबलः ।
ततोऽहमपि सौहार्दान्निःसृतो वालिना सह ।।

स तृणैरावृतं दुर्गं धरण्या विवरं महत् ।
प्रविवेशासुरो वेगादावामासाद्य विष्टितौ ।। 9.11

तं प्रविष्टं रिपुं दृष्ट्वा बिलं रोषवशं गतः ।
मामुवाच ततो वाली वचनं क्षुभितेन्द्रियः ।।

इह तिष्ठाद्य सुग्रीव बिलद्वारि समाहितः ।
यावदत्र प्रविश्याहं निहन्मि समरे रिपुम् ।।

मया त्वेतद् वचः श्रुत्वा याचितःस परन्तपः ।
शापयित्वा च मां पद्भ्यां प्रविवेश बिलं ततः ।।

तस्य प्रविष्टस्य बिलं साग्रः संवत्सरो गतः ।
स्थितस्य च बिलद्वारि स कालो व्यत्यवर्तत ।।

अथ दीर्घस्य कालस्य बिलात्तस्माद् विनिस्सृतम् ।
सफेनं रुधिरं दृष्ट्वा ततोऽहं भृशदुःखितः ।।

अहं त्ववगतो बुद्ध्या चिह्नैस्तैर्भ्रातरं हतम् ।
पिधाय च बिलद्वारं शिलया गिरिमात्रया ।।

ततोऽहं तैः समागम्य समेतैरभिषेचितः ।
राज्यं प्रशासतस्तस्य न्यायतो मम राघव ।।

आजगाम रिपुं हत्वा दानवं स तु वानरः ।
अभिषिक्तं तु मां दृष्ट्वा क्रोधात् संरक्तलोचनः ।।

नत्वा पादावहं तस्य मुकुटेनास्पृशं प्रभो ।
अपि वाली मम क्रोधात् न प्रसादं चकार सः ।।

तेनाहमपविद्धश्च हृतदारश्च राघव ।
तद्भयाच्च महीं सर्वां क्रान्तवान् सवनार्णवाम् ।। 10.27

ऋष्यमूकं गिरिवरं भार्याहरणदुःखितः ।
प्रविष्टोऽस्मि दुराधर्षं वालिनः कारणान्तरे ।।

वालिनश्च भयात्तस्य सर्वलोकभयावह ।
कर्तुमर्हसि मे वीर प्रसादं तस्य निग्रहात् ।।

महिषो दुन्दुभिर्नाम कैलासशिखरप्रभः ।
बलं नागसहस्रस्य धारयामास वीर्यवान् ।।

ततस्तु द्वारमागम्य किष्किन्धाया महाबलः ।
ननर्द कम्पयन् भूमिं दुन्दुभिर्दुन्दुभिर्यथा ।।

अयुध्यत तदा वाली शक्रतुल्यपराक्रमः ।
मुष्टिभिर्जानुभिःपद्भिः शिलाभिः पादपैस्तथा ।।

स्रोतोभ्यो बहुरक्तं तु तस्य सुस्राव पात्यतः ।
पपात च महाबाहुः क्षितौ पञ्चत्वमागतः ।।

तं तोलयित्वा बाहुभ्यां गतसत्त्वमचेतनम् ।
चिक्षेप वेगवान् वाली वेगेनैकेन योजनम् ।।

तस्य वेगप्रविद्धस्य वक्त्रात् क्षतजबिन्दवः ।
प्रपेतुर्मारुतोत्क्षिप्ता मतङ्गस्याश्रमं प्रति ।।

येनाहं सहसा स्पृष्टः शोणितेन दुरात्मना ।
कोऽयं दुरात्मा दुर्बुद्धिरकृतात्मा च बालिशः ।।

इत्युक्त्वा स विनिष्क्रम्य ददृशे मुनिसत्तमः ।
महिषं पर्वताकारं गतासुं पतितं भुवि ।। 11.51

स तु विज्ञाय तपसा वानरेण कृतं हि तत्।
उत्ससर्ज महाशापं क्षेप्तारं वानरं प्रति ।।

इह तेनाप्रवेष्टव्यं प्रविष्टस्य वधो भवेत्।
वनं मत्संश्रयं येन दूषितं रुधिरस्रवैः ।।

ततस्ते वानराः श्रुत्वा गिरं मुनिसमीरितम्।
निश्चक्रमुर्वनात् तस्मात् तान् दृष्ट्वा वालिरब्रवीत्।।

किं भवन्तः समस्ताश्च मतङ्गवनवासिनः ।
मत्समीपमनुप्राप्ता अपि स्वस्ति वनौकसाम्।।

ततस्ते कारणं सर्वं तथा शापं च वालिनः ।
शशंसुर्वानराः सर्वे वालिने हेममालिने ।।

एतच्छ्रुत्वा तदा वाली वचनं वानरेरितम्।
स महर्षिं समासाद्य याचते स्म कृताञ्जलिः ।।

महर्षिस्तमनादृत्य प्रविवेशाश्रमं प्रति ।
शापधारणभीतस्तु वाली विह्वलतां गतः ।।

ततः शापभयाद्भीतः ऋष्यमूकं महागिरिम्।
प्रवेष्टुं नेच्छति हरिः द्रष्टुं वापि नरेश्वर ।।

तस्याप्रवेशं ज्ञात्वाहमिदं राम महावनम्।
विचरामि सहामात्यो विषादेन विवर्जितः ।।

एषोऽस्थिनिचयस्तस्य दुन्दुभेःसम्प्रकाशते ।
वीरोत्सेकान्तितस्तस्य गिरिकूटनिभो महान्।। 11.66

इमे च विपुला:साला: सप्त शाखावलम्बिन: ।
यत्रैकं घटते वाली निष्पत्रयितुमोजसा ।।

एतदस्यासमं वीर्यं मया राम प्रकाशितम् ।
कथं तं वालिनं हन्तुं समरे शक्ष्यसे नृप ।।

हतस्य महिषस्यास्थि पादेनैकेन लक्ष्मण ।
उद्यम्य प्रक्षिपेच्चापि तरसा द्वे धनु:शते ।।

शूरश्च शूरमानी च प्रख्यातबलपौरुष: ।
बलवान् वानरो वाली संयुगेष्वपराजित: ।।

कामं राघव ते वाणी प्रमाणं धैर्यमाकृति: ।
सूचयन्ति परं तेजो भस्मच्छन्नमिवानलम् ।।

तस्य तद्वचनं श्रुत्वा सुग्रीवस्य महात्मन: ।
स्मितपूर्वमथो राम: प्रत्युवाच हरिं प्रति ।।

यदि न प्रत्ययोऽस्मासु विक्रमे तव वानर ।
प्रत्ययं समरे श्लाघ्यमहमुत्पादयामि ते ।।

एवमुक्त्वा तु सुग्रीवं सान्त्वयन् लक्ष्मणाग्रज: ।
राघवो दुन्दुभे: कायं पादाङ्गुष्ठेन लीलया ।
तोलयित्वा महाबाहुश्चिक्षेप दशयोजनम् ।।

स एव संशयस्तात तव तस्य च यद्बलम् ।
सालमेकं विनिर्भिद्य भवेद्व्यक्तिर्बलाबले ।। 11.90

इमं हि सालं प्रहितस्त्वया शरो न संशयोऽत्रास्ति विदारयिष्यति ।
अलं विमर्शेन मम प्रियं ध्रुवं कुरुष्व राजन् प्रतिशापितो मया ।।

एतच्च वचनं श्रुत्वा सुग्रीवस्य सुभाषितम् ।
प्रत्ययार्थं महातेजा रामो जग्राह कार्मुकम् ।।

स विसृष्टो बलवता बाणः स्वर्णपरिष्कृतः ।
भित्वा सालान् गिरिप्रस्थं सप्तभूमिं विवेश ह ।।

सायकस्तु मुहूर्तेन सालान् भित्वा महाजवः ।
निष्पत्य च पुनस्तूणं तमेव प्रविवेश ह ।।

येन सप्त महासाला गिरिर्भूमिश्च दारिताः ।
बाणेनैकेन काकुत्स्थ स्थाता ते को रणाग्रतः ।।

तमद्यैव प्रियार्थं मे वैरिणं भ्रातृरूपिणम् ।
वालिनं जहि काकुत्स्थ मया बद्धोऽयमञ्जलिः ।।

ततो रामः परिष्वज्य सुग्रीवं प्रियदर्शनम् ।
प्रत्युवाच महाप्राज्ञो लक्ष्मणानुगतं वचः ।।

अस्माद्गच्छाम किष्किन्धां क्षिप्रं गच्छ त्वमग्रतः ।
गत्वा चाह्वय सुग्रीव वालिनं भ्रातृगन्धिनम् ।।

सुग्रीवोऽप्यनदद् घोरं वालिनोऽह्वानकारणात् ।
गाढं परिहितो वेगात् नादैर्भिन्दन्निवाम्बरम् ।।

तं श्रुत्वा निनदं भ्रातुः क्रुद्धो वाली महाबलः ।
निष्पपात सुसंरब्धो भास्करोऽस्ततटादिव ।।

तलैरशनिकल्पैश्च वज्रकल्पैश्च मुष्टिभिः ।
जघ्नतुः समरेऽन्योन्यं भ्रातरौ क्रोधमूर्च्छितौ ।। 12.18

यन्नावगच्छत् सुग्रीवं वालिनं वापि राघवः।
ततो न कृतवान् बुद्धिं मोक्तुमन्तकरं शरम्।।

क्लान्तो रुधिरसिक्ताङ्गः प्रहारैर्जर्जरीकृतः।
वालिनाभिद्रुतःक्रोधात् प्रविवेश महावनम्।।

तं प्रविष्टं वनं दृष्ट्वा वाली शापभयात्ततः।
मुक्तो ह्यसि त्वमित्युक्त्वा स निवृत्तो महाबलः ।।

आह्वयस्वेति मामुक्त्वा दर्शयित्वा च विक्रमम्।
वैरिणा पातयित्वा च किमिदानीं त्वया कृतम्।।

तस्य चैवं ब्रुवाणस्य सुग्रीवस्य महात्मनः।
करुणं दीनया वाचा राघवः पुनरब्रवीत्।।

अलंकारेण वेषेण प्रमाणेन गतेन च।
त्वं च सुग्रीव वाली च सदृशौ स्थः परस्परम्।।

ततोऽहं रूपसादृश्यात् मोहितो वानरोत्तम।
नोत्सृजामि महावेगं शरं शत्रुनिबर्हणम्।।

अभिज्ञानं कुरुष्व त्वमात्मनो वानरेश्वर।
येन त्वामभिजानीयां द्वन्द्वयुद्धमुपागतम्।।

ततो गिरितटे जातामुत्पाट्य कुसुमायुताम्।
लक्ष्मणो गजपुष्पीं तां तस्य कण्ठे व्यसर्जयत्।।

विभ्राजमानो वपुषा रामवाक्यसमाहितः।
जगाम सह रामेण किष्किन्धां पुनराप सः।। 12.42

ततस्तु निनदं घोरं कृत्वा युद्धाय चाह्वयत् ।
परिवारैः परिवृतो नादैर्भिन्दन्निवाम्बरम् ।।

दृष्ट्वा रामं क्रियादक्षं सुग्रीवो वाक्यमब्रवीत् ।
प्रतिज्ञा या कृता वीर त्वया वालिवधे पुरा ।।

सफलां कुरु तां क्षिप्रं लतां काल इवागतः ।
एवमुक्तस्तु धर्मात्मा सुग्रीवेण स राघवः ।।

एकेनाहं प्रमोक्ष्यामि बाणमोक्षेण संयुगे ।
मम दर्शय सुग्रीव वैरिणं भ्रातृरूपिणम् ।।

धर्मलोभपरीतेन न च वक्ष्ये कथञ्चन ।
सफलां च करिष्यामि प्रतिज्ञां जहि सम्भ्रमम् ।।

ननर्द क्रूरनादेन विनिर्भिन्दन्निवाम्बरम् ।
तत्र शब्देन वित्रस्ता गावो यान्ति हतप्रभाः ।।

अथ तस्य निनादं तं सुग्रीवस्य महात्मनः ।
शुश्रावान्तःपुरगतो वाली भ्रातुरमर्षणः ।।

शब्दं दुर्मर्षणं श्रुत्वा निष्पपात ततो हरिः ।
वेगेन च पदन्यासैर्दारयन्निव मेदिनीम् ।।

तं तु तारा परिष्वज्य स्नेहाद् दर्शितसौहृदा ।
उवाच त्रस्तसम्भ्रान्ता हितोदर्कमिदं वचः ।।

सहसा तव निष्क्रामो मम तावन्न रोचते ।
श्रूयतामभिदास्यामि यन्निमित्तं निवार्यते ।। 15.9

पूर्वमेव मया वीर श्रुतं कथयतो वचः।
अङ्गदस्य कुमारस्य वक्ष्याम्यद्य हितं वचः।।

अयोध्याधिपतेःपुत्रौ शूरौ समरदुर्जयौ।
इक्ष्वाकूणां कुले जातौ प्रथितौ रामलक्ष्मणौ।।

रामःपरबलामर्दी युगान्ताग्निरिवोत्थितः।
निवासवृक्षः साधूनाम् आपन्नानां परा गतिः।।

श्रूयतां क्रियतां चैव तव वक्ष्यामि यद्धितम्।
यौवराज्येन सुग्रीवं तूर्णं साध्वभिषेचय।।

तामेवं ब्रुवतीं तारां ताराधिपनिभाननाम्।
वाली निर्भर्त्सयामास वचनं चेदमब्रवीत्।।

अधर्षितानां शूराणां समरेष्वनिवर्तिनाम्।
धर्षणामर्षणं भीरु मरणादतिरिच्यते।।

न च कार्यो विषादस्ते राघवं प्रति मत्कृते।
धर्मज्ञश्च कृतज्ञश्च कथं पापं करिष्यति।।

शापितासि मम प्राणैर्निवर्तस्व जनेन च ।
अलं जित्वा निवर्तिष्ये तमहं भ्रातरं रणे।।

ततःस्वस्त्ययनं कृत्वा मन्त्रविद् विजयैषिणी।
अन्तःपुरं सह स्त्रीभिः प्रविष्टा शोकमोहिता।।

प्रविष्टायां तु तारायां सह स्त्रीभिः स्वमालयम्।
नगर्या निर्ययौ क्रुद्धो महासर्प इव श्वसन्।। 16.13

स ददर्श ततः श्रीमान् सुग्रीवं हेमपिङ्गलम् ।
सुसंवीतमवष्टब्धं दीप्यमानमिवानलम् ।।

स वाली गाढसंवीतो मुष्टिमुद्यम्य वीर्यवान् ।
सुग्रीवमेवाभिमुखो ययौ योद्धुं कृतक्षणः ।।

तौ भीमबलविक्रान्तौ सुपर्णसमवेगितौ ।
प्रवृद्धौ घोरवपुषौ चन्द्रसूर्याविवाम्बरे ।।

मुष्टिभिर्जानुभिः पद्भिर्बाहुभिश्च पुनःपुनः ।
तयोर्युद्धमभूद्घोरं वृत्रवासवयोरिव ।।

ततो रामो महातेजा आर्तं दृष्ट्वा हरीश्वरम् ।
स शरं वीक्षते वीरो वालिनो वधकाङ्क्षया ।।

ततो धनुषि संधाय शरमाशीविषोपमम् ।
पूरयामास तच्चापं कालचक्रमिवान्तकः ।।

मुक्तस्तु वज्रनिर्घोषः प्रदीप्ताशनिसन्निभः ।
राघवेण महाबाणो वालिवक्षसि पातितः ।।

ततस्तेन महातेजा वीर्ययुक्तः कपीश्वरः ।
वेगेनाभिहतो वाली निपपात महीतले ।।

भूमौ निपतितस्यापि तस्य देहं महात्मनः ।
न श्रीर्जहाति न प्राणा न तेजो न पराक्रमः ।।

बहुमान्य च तं वीरं वीक्षमाणं शनैरिव ।
उपयतौ महावीर्यौ भ्रातरौ रामलक्ष्मणौ ।। 17.13

तं दृष्ट्वा राघवं वाली लक्ष्मणं च महाबलम् ।
अब्रवीत् परुषं वाक्यं प्रश्रितं धर्मसंहितम् ।।

त्वं नराधिपतेः पुत्रः प्रथितः प्रियदर्शनः ।
पराङ्मुखवधं कृत्वा कोऽत्र प्राप्तस्त्वया गुणः ।
यदहं युद्धसंरब्धस्त्वत्कृते निधनं गतः ।।

कुलीनः सत्त्वसम्पन्नस्तेजस्वी चरितव्रतः ।
रामःकरुणवेदी च प्रजानां च हिते रतः ।।

दमःशमःक्षमा धर्मो धृतिःसत्यं पराक्रमः ।
पार्थिवानां गुणा राजन् दण्डश्चाप्यपकारिषु ।।

फलमूलाशनं नित्यं वानरं वनगोचरम् ।
मामिहाप्रतियुध्यन्तमन्येन च समागतम् ।।

मामेव यदि पूर्वं त्वमेतदर्थमचोदयः ।
मैथिलीमहमेकाह्ना तव चानीतवान् भवेः ।।

इत्येवमुक्त्वा परिशुष्कवक्त्रः शराभिघाताद् व्यथितो महात्मा ।
समीक्ष्य रामं रविसन्निकाशं तूर्ष्णीं बभौ वानरराजसूनुः ।।

धर्मार्थगुणसम्पन्नं हरीश्वरमनुत्तमम् ।
अधिक्षिप्तस्तदा रामः पश्चाद् वालिनमब्रवीत् ।।

इक्ष्वाकूणामियं भूमिः सशैलवनकानना ।
मृगपक्षिमनुष्याणां निग्रहानुग्रहेष्वपि ।।

तां पालयति धर्मात्मा भरतःसत्यवानृजुः ।
धर्मकामार्थतत्त्वज्ञो निग्रहानुग्रहे रतः ।। 18.7

तस्मिन्नृपतिशार्दूले भरते धर्मवत्सले ।
पालयत्यखिलां पृथ्वीं कश्चरेद् धर्मविप्रियम् ।।

ते वयं मार्गविभ्रष्टं स्वधर्मे परमे स्थिताः ।
भरताज्ञां पुरस्कृत्य निगृह्णीमो यथाविधि ।।

ज्येष्ठो भ्राता पिता वापि यश्च विद्यां प्रयच्छति ।
त्रयस्ते पितरो ज्ञेया धर्मे च पथि वर्तिनः ।।

तदेतत् कारणं पश्य यदर्थं त्वं मया हतः ।
औरसीं भगिनीं वापि भार्यां वाप्यनुजस्य यः ।।

प्रचरेत नरः कामान् तस्य दण्डो वधः स्मृतः ।
सुग्रीवेण च मे सख्यं लक्ष्मणेन यथा तथा ।
दारराज्यनिमित्तं च निःश्रेयसकरःस मे ।।

प्रतिज्ञा च मया दत्ता तदा वानरसन्निधौ ।
प्रतिज्ञा च कथं शक्या मद्विधेनानवेक्षितुम् ।।

शृणु चाप्यपरं भूयः कारणं हरिपुङ्गव ।
वागुराभिश्च पाशैश्च कूटैश्च विविधैर्नरः ।।

प्रतिच्छन्नाश्च दृश्याश्च गृह्णन्ति सुबहून् मृगान् ।
प्रधावितान् वा वित्रस्तान् विस्रब्धान् अतिविष्ठितान् ।।

यान्ति राजर्षयश्चात्र मृगयां धर्मकोविदाः ।
तस्मात् त्वं निहतो युद्धे मया बाणेन वानर ।
अयुध्यन् प्रतियुध्यन् वा यस्मात् शाखामृगो ह्यसि ।। 18.40

त्वं तु धर्ममविज्ञाय केवलं रोषमास्थितः ।
विदूषयसि मां धर्मे पितृपैतामहे स्थितम् ।।

एवमुक्तस्तु रामेण वाली प्रव्यथितो भृशम् ।
न दोषं राघवे दध्यौ धर्मेऽधिगतनिश्चयः ।।

प्रत्युवाच ततो रामं प्राञ्जलिर्वानरेश्वरः ।
मामप्यवगतं धर्माद् व्यतिक्रान्तपुरस्कृतम् ।
धर्मसंहितया वाचा धर्मज्ञ परिपालय ।।

बालश्चाकृतबुद्धिश्च एकपुत्रश्च मे प्रियः ।
तारेयो राम भवता रक्षणीयो महाबलः ।।

मद्दोषकृतदोषां तां यथा तारां तपस्विनीम् ।
सुग्रीवो नावमन्येत तथाऽवस्थातुमर्हसि ।।

स तमाश्वासयद् रामो वालिनं व्यक्तदर्शनम् ।
साधुसम्मतया वाचा धर्मतत्त्वार्थयुक्तया ।।

न सन्तापस्त्वया कार्या एतदर्थं प्लवङ्गम ।
न वयं भवता चिन्त्या नाप्यात्मा हरिसत्तम ।।

तं भार्या बाणमोक्षेण रामदत्तेन संयुगे ।
हतं प्लवगशार्दूलं तारा शुश्राव वालिनम् ।।

सा व्रजन्ती ददर्शाथ पतिं निपतितं भुवि ।
रामं रामानुजं चैव भर्तुश्चैव तथानुजम् ।।

तानतीत्य समासाद्य भर्तारं निहतं रणे ।
समीक्ष्य व्यथिता भूमौ सम्भ्रान्ता निपपात ह ।। 19.26

तामवेक्ष्य तु सुग्रीवः क्रोशन्तीं कुररीमिव।
विषादमगमत्कष्टं दृष्ट्वा चाङ्गदमागतम्।।

वानरं पर्वतेन्द्राभं शोकसंतप्तमानसा।
तारा तरुमिवोन्मूलं पर्यदेवयदातुरा।।

ततो निपतितां तारां च्युतां तारामिवाम्बरात्।
शनैराश्वासयामास हनुमान् हरियूथपः।।

अङ्गदस्तु कुमारोऽयं द्रष्टव्यो जीवपुत्रया।
संस्कार्यो हरिराजस्य अङ्गदश्चाभिषिच्यताम्।
सिंहासनगतं पुत्रं पश्यन्ती शान्तिमेष्यति।।

सा तस्य वचनं श्रुत्वा भर्तृर्व्यसनपीडिता।
अब्रवीदुत्तरं तारा हनूमन्तमवस्थितम्।।

न ह्येषा बुद्धिरास्थेया हनूमन्नङ्गदं प्रति।
पिता हि बन्धुः पुत्रस्य न माता हरिसत्तम।।

तं प्राप्तविजयं वाली सुग्रीवं प्लवगेश्वरम्।
आभाष्य व्यक्तया वाचा सस्नेहमिदमब्रवीत्।।

युगपद् विहितं तात न मन्ये सुखमावयोः।
सौहार्दं भ्रातृयुक्तं हि तदिदं जातमन्यथा।।

मम प्राणैः प्रियतरं पुत्रं पुत्रमिवौरसम्।
मया हीनमहीनार्थं सर्वतः परिपालय।।

यदेषा साध्विति ब्रूयात् कार्यं तन्मुक्तसंशयम्।
न हि तारामतं किंचिदन्यथा परिवर्तते।। 22.14

इमां च मालामाधत्स्व दिव्यां सुग्रीव काञ्चनीम्।
उदारा श्रीः स्थिता ह्यस्या सम्प्रजह्यान्मृते मयि।।

तां मालां काञ्चनीं दत्वा दृष्ट्वा चैवात्मजं स्थितम्।
संसिद्धः प्रेत्यभावाय स्नेहादङ्गदमब्रवीत्।।

देशकालौ भजस्वाद्य क्षममाणः प्रियाप्रिये।
सुखदुःखसहः काले सुग्रीववशगो भव ।।

इत्युक्त्वा विवृत्ताक्षः शरसंपीडितो भृषम् ।
विवृत्तैदशनैर्भीमैः बभूवोत्क्रान्त जीवितः ।।

स सुग्रीवं च तारां च साङ्गदां सहलक्ष्मणः।
समानशोकः काकुत्स्थः सान्त्वयन्निदमब्रवीत्।।

लोकवृत्तमनुष्ठेयं कृतं वो बाष्पमोक्षणम्।
न कालादुत्तरं किंचित् कर्म शक्यमुपासितुम्।।

न कालस्यास्ति बन्धुत्वं न हेतुर्न पराक्रमः।
न मित्रज्ञातिसम्बन्धः कारणं नात्मनो वशः।।

इतः स्वां प्रकृतिं वाली गतःप्राप्तः क्रियाफलम्।
सामदानार्थसंयोगैः पवित्रं प्लवगेश्वरः।।

सुग्रीवेण ततःसार्धं सोऽङ्गदः पितरं रुदन्।
चितामारोपयामास शोकेनाभिप्लुतेन्द्रियः।।

ततस्ते सहितास्तत्र ह्यङ्गदं स्थाप्य चाग्रतः।
सुग्रीवतारासहिताः सिषिचुर्वानरा जलम्।। 25.52

सुग्रीवेणेव दीनेन दीनो भूत्वा महाबलः ।
समानशोकः काकुत्स्थः प्रेतकार्याण्यकारयत् ।।

अभिगम्य महाबाहुं राममक्लिष्टकारिणम् ।
स्थिताः प्राञ्जलयः सर्वे पितामहमिवर्षयः ।।

ततःकाञ्चनशैलाभस्तरुणार्कनिभाननः ।
अब्रवीत् प्राञ्जलिर्वाक्यं हनूमान् मारुतात्मजः ।।

महात्मनां सुदुष्प्रापं प्राप्तं राज्यमिदं प्रभो ।
भवता समनुज्ञातः प्रविश्य नगरं शुभम् ।।

अर्चयिष्यति माल्यैश्च रत्नैश्च त्वां विशेषतः ।
इमां गिरिगुहां रम्यामभिगन्तुं त्वमर्हसि ।।

प्रत्युवाच हनूमन्तं बुद्धिमान् वाक्यकोविदः ।
चतुर्दश समाः सौम्य ग्रामं वा यदि वा पुरम् ।।

न प्रवेक्ष्यामि हनूमन् पितुर्निर्देशपालकः ।
सुसमृद्धां गुहां दिव्यां सुग्रीवो वानरर्षभः ।।

प्रविष्टो विधिवद्वीरः क्षिप्रं राज्येऽभिषिच्यताम् ।
एवमुक्त्वा हनूमन्तं रामःसुग्रीवमब्रवीत् ।।

वृत्तज्ञो वृत्तसम्पन्नमुदारबलविक्रमम् ।
इममप्यङ्गदं वीरं यौवराज्येऽभिषेचय ।।

पूर्वोऽयं वार्षिको मासःश्रावणःसलिलागमः ।
प्रवृत्ताः सौम्य चत्वारो मासा वार्षिकसंज्ञिताः ।। 26.14

इयं गिरिगुहा रम्या विशाला युक्तमारुता ।
प्रभूतसलिला सौम्य प्रभूतकमलोत्पला ।।

कार्तिके समनुप्राप्ते त्वं रावणवधे यत ।
एष नः समयः सौम्य प्रविश त्वं स्वमालयम् ।।

अभिषिञ्चस्व राज्ये च सुहृदः सम्प्रहर्षय ।
इति रामाभ्यनुज्ञातः सुग्रीवो वानरर्षभः ।।

प्रविवेश पुरीं रम्यां किष्किन्धां वालिपालिताम् ।
तं वानरसहस्राणि प्रविष्टं वानरेश्वरम् ।
अभ्यषिञ्चन्त सुहृदः सहस्राक्षमिवामराः ।।

रामस्य तु वचः कुर्वन् सुग्रीवो वानरेश्वरः ।
अङ्गदं सम्परिष्वज्य यौवराज्येऽभ्यषेचयत् ।।

अभिषिक्ते तु सुग्रीवे प्रविष्टे वानरे गुहाम् ।
आजगाम सह भ्रात्रा रामः प्रस्रवणं गिरिम् ।।

अस्यां वत्स्याम सौमित्रे वर्षरात्रिमरिन्दम ।
गिरि शृङ्गमिदं रम्यमुत्तमं पार्थिवात्मज ।।

आविवेश न तं निद्रा निशासु शयनं गतम् ।
तत्समुत्थेन शोकेन बाष्पोपहतचेतनम् ।।

तं शोचमानं काकुत्स्थं नित्यं शोकपरायणम् ।
तुल्यदुःखोऽब्रवीद् भ्राता लक्ष्मणोऽनुनयं वचः ।।

भवान् क्रियापरो लोके भवान् देवपरायणः ।
आस्तिको धर्मशीलश्च व्यवसायी च राघव ।। 27.35

शमुन्मूलय शोकं त्वं व्यवसायं स्थिरीकुरु ।
ततः सपरिवारं तं रक्षसं हन्तुमर्हसि ।।

शरत्कालं प्रतीक्षस्व प्रावृट्कालोऽयमागतः ।
ततः सराष्ट्रं सगणं रावणं तं वधिष्यसि ।।

हितं तथ्यं च पथ्यं च सामधर्मार्थनीतिमत् ।
प्रणयप्रीतिसंयुक्तं विश्वासकृतनिश्चयम् ।
हरीश्वरमुपागम्य हनूमान्वाक्यमब्रवीत् ।।

राज्यं प्राप्तं यशश्चैव कौली श्रीरभिवर्धिता ।
मित्राणां सङ्ग्रहः शेषः तद् भवान् कर्तुमर्हति ।।

तदिदं मित्रकार्यं नः कालातीतमरिन्दम ।
क्रियतां राघवस्यैतद् वैदेह्याः परिमार्गणम् ।।

तस्य त्वं कुरु वै कार्यं पूर्वं तेन कृतं तव ।
हरीश्वर कपिश्रेष्ठानाज्ञापयितुमर्हसि ।।

तदाज्ञापय कः किं ते कुतो वाऽपि व्यवस्यतु ।
हरयो ह्यप्रधृष्यास्ते सन्ति कोऽस्त्यग्रतोऽनघ ।।

तस्य तद्वचनं श्रुत्वा काले साधु निरूपितम् ।
सुग्रीवः सत्त्वसम्पन्नश्चकार मतिमुत्तमाम् ।।

सन्दिदेशातिमतिमान् नीलं नित्यकृतोद्यमम् ।
दिक्षु सर्वासु सर्वेषां सैन्यानामुपसङ्ग्रहे ।।

ये त्वन्तपालाः प्लवगाः शीघ्रगा व्यवसायिनः ।
समानयन्तु ते शीघ्रं त्वरिताः शासनात् मम । 29.31

स्वयं चानन्तरं कार्यं भवानेवानुपश्यतु।
त्रिपञ्जरात्रादूर्ध्वं यः प्राप्नुयादिह वानरः।
तस्य प्राणान्तिको दण्डो नात्र कार्या विचारणा ।।

अथ पद्मपलाशाक्षीं मैथिलीमनुचिन्तयन्।
उवाच लक्ष्मणं रामो मुखेन परिशुष्यता।।

चत्वारो वार्षिका मासा गता वर्षशतोपमाः।
मम शोकाभितप्तस्य तथा सीतामपश्यतः।।

स कालं परिसंस्थाय सीतायाः परिमार्गणे।
कृतार्थः समयं कृत्वा दुर्मतिर्नावबुध्यते।।

स किष्किन्धां प्रविश्य त्वं ब्रूहि वानरपुङ्गवम्।
पूर्वं ग्राम्यसुखे सक्तं सुग्रीवं वचनान्मम।।

न स संकुचितः पन्था येन वाली हतो गतः।
समये तिष्ठ सुग्रीव मा वालिपथमन्वगाः।।

न धारये कोपमुदीर्णवेगं निहन्मि सुग्रीवमसत्यमद्य ।
हरि प्रवीरैः सह वालिपुत्रो नरेन्द्रपुत्र्या विचयं करोतु ।।

सामोपहितया वाचा रुक्षाणि परिवर्जयन् ।
वक्तुमर्हसि सुग्रीवं व्यतीतं कालपर्यये।।

सोऽग्रजेनानुशिष्टार्थो यथावत् पुरुषर्षभः।
प्रविवेश पुरीं वीरो लक्ष्मणः परवीरहा।।

तं दृष्ट्वा वानराः सर्वे लक्ष्मणं पुरुषर्षभम्।
शैलशृङ्गाणि शतशः प्रवृद्धांश्च महीरुहान् ।
जगृहुः कुञ्जरप्रख्या वानराः पर्वतान्तरे।। 31.18

तान् गृहीतप्रहरणान् सर्वान् दृष्ट्वा तु लक्ष्मणः ।
बभूव द्विगुणं क्रुद्धो बह्विन्धन इवाऽनलः ।।

ततः सुग्रीवभवनं प्रविश्य हरिपुङ्गवाः ।
क्रोधमागमनं चैव लक्ष्मणस्य न्यवेदयन् ।।

तं दीप्तमिव कालाग्निं नागेन्द्रमिव कोपितम् ।
समासाद्याङ्गदस्त्रासाद् विषादमगमत्परम् ।।

सोऽङ्गदं रोषताम्राक्षः सन्दिदेश महायशाः ।
सुग्रीवः कथ्यतां वत्स ममागमनमित्युत ।।

एष रामानुज़ः प्राप्तस्त्वत्सकाशमरिन्दम ।
भ्रातुर्व्यसनसन्तप्तो द्वारि तिष्ठति लक्ष्मणः ।।

लक्ष्मणस्य वचः श्रुत्वा शोकाविष्टोऽङ्गदोऽब्रवीत् ।
पितुः समीपमागम्य सौमित्रिरयमागतः ।।

स एष राघवभ्राता लक्ष्मणो वाक्यसारथिः ।
व्यवसायरथः प्राप्तः तस्य रामस्य शासनात् ।।

यथा हि रामो धर्मात्मा तत्कुरुष्व समाहितः ।
राजन् स्तिष्ठ स्वसमये भव सत्यप्रतिश्रवाः ।।

अङ्गदस्य वचः श्रुत्वा सुग्रीवः सचिवैः सह ।
लक्ष्मणं कुपितं श्रुत्वा मुमोचासनमात्मवान् ।।

अथ प्रतिसमादिष्टो लक्ष्मणः परवीरहा ।
प्रविवेश गुहां रम्यां किष्किन्धां रामशासनात् ।। 33.1

सुग्रीवस्य गृहं रम्यं प्रविवेश महाबलः।
अवार्यमाणः सौमित्रिर्महाभ्रमिव भास्करः।।

अङ्गदेन समाख्यातो ज्यास्वनेन च वानरः।
बुबुधे लक्ष्मणं प्राप्तं मुखं चास्य व्यशुष्यत।।

ततस्तारां हरिश्रेष्ठः सुग्रीवः प्रियदर्शनाम्।
उवाच हितमव्यग्रः त्राससम्भ्रान्तमानसः।।

किं नु तत् कारणं सुभ्रु प्रकृत्या मृदुमानसः।
सरोष इव सम्प्राप्तो येनायं राघवानुज :।।

अथवा स्वयमेवैनं द्रष्टुमर्हसि भामिनि।
वचनैः सान्त्वयुक्तैश्च प्रसादयितुमर्हसि।।

त्वद्दर्शने विशुद्धात्मा न स्म कोपं करिष्यति।
न हि स्त्रीषु महात्मानः क्वचित्कुर्वन्ति दारुणम्।।

त्वया सान्त्वैरुपक्रान्तं प्रसन्नेन्द्रियमानसम्।
ततः कमलपत्राक्षं द्रक्ष्याम्यहमरिन्दमम्।।

स तां समीक्ष्यैव हरीशपत्नीं तस्थावुदासीनतया महात्मा।
अवाङ्मुखोऽभूत् मनुजेन्द्रपुत्रः स्त्रीसंनिकर्षाद् विनिवृत्तकोपः।।

किं कोपमूलं मनुजेन्द्रपुत्र कस्ते न संतिष्ठति वाङ्निदेशे
कः शुष्कवृक्षं वनमापतन्तं दावाग्निमासीदिति निर्विशङ्कः।।

स तस्या वचनं श्रुत्वा सान्त्वपूर्वमशङ्कितः।
भूयःप्रणयदृष्टार्थं लक्ष्मणो वाक्यमब्रवीत्।। 33.42

स मासांश्चतुरः कृत्वा प्रमाणं प्लवगेश्वरः ।
व्यतीतान् तान्मदोदग्रो विहरन् नावबुध्यते ।।

धर्मलोपो महांस्तावत् कृते ह्यप्रतिकुर्वतः ।
अर्थलोपश्च मित्रस्य नाशे गुणवतो महान् ।।

सा तस्य धर्मार्थसमाधियुक्तं निशम्य वाक्यं मधुरस्वभावम् ।
तारा गतार्थे मनुजेन्द्रकार्ये विश्वासयुक्तं तमुवाच भूयः ।।

आगता हि महावीर्या हरयः कामरूपिणः ।
कोटीः शतसहस्राणि नानानगनिवासिनः ।।

तदागच्छ महाबाहो चारित्रं रक्षितं त्वया ।
अच्छलं मित्रभावेन सतां दारावलोकनम् ।।

रामप्रसादात्कीर्तिं च कपिराज्यं च शाश्वतम् ।
रामप्रियार्थं सुग्रीवस्त्यजेदिति मतिर्मम ।।

ते न शक्या रणे हन्तुमसहायेन लक्ष्मण ।
रावणः क्रूरकर्मा च सुग्रीवेण विशेषतः ।।

त्वत्सहायनिमित्तं हि प्रेषिता हरिपुङ्गवाः ।
आनेतुं वानरान् युद्धे सुबहून् हरिपुङ्गवान् ।।

इत्युक्तस्तारया वाक्यं प्रश्रितं धर्मसंहितम् ।
मृदुस्वभावः सौमित्रिः प्रतिजग्राह तद्वचः ।।

स लक्ष्मणं भीमबलं सर्ववानरसत्तमः ।
अब्रवीत्प्रश्रितं वाक्यं सुग्रीवः सम्प्रहर्षयन् ।। 36.4

सीतां प्राप्स्यति धर्मात्मा वधिष्यति च रावणम् ।
सहायमात्रेण मया राघवः स्वेन तेजसा ।।

यदि किञ्चिदतिक्रान्तं विश्वासात् प्रणयेन वा ।
प्रेष्यस्य क्षमितव्यं मे न कश्चिन्नापराध्यति ।।

इति तस्य ब्रुवाणस्य सुग्रीवस्य महात्मनः ।
अभवल्लक्ष्मणः प्रीतः प्रेम्णा चेदमुवाच ह ।।

सदृशश्चासि रामेण विक्रमेण बलेन च ।
सहायो दैवतैर्दत्तश्चिराय हरिपुङ्गव ।।

किन्तु शीघ्रमितो वीर निष्क्रम्य त्वं मया सह ।
सान्त्वयस्व वयस्यं च भार्याहरणदुःखितम् ।।

एवमुक्तस्तु सग्रीवो लक्ष्मणेन महात्मना ।
हनूमन्तं स्थितं पार्श्वे वचनं चेदमब्रवीत् ।।

प्रेषिता प्रथमं ये च मयाऽऽज्ञाता महाजवाः ।
त्वरणार्थं तु भूयस्त्वं सम्प्रेषय हरीश्वरान् ।।

शतान्यथ सहस्राणि कोट्यश्च मम शासनात् ।
प्रयान्तु कपिसिह्मानां निदेशे मम ये स्थिताः ।।

वनेभ्यो गह्वरेभ्यश्च सरिद्भ्यश्च महाबलाः ।
आगच्छद् वानरी सेना पिबन्तीव दिवाकरम् ।।

ते तु तेन मुहूर्तेन कपयः शीघ्रचारिणः ।
किष्किन्धां त्वरया प्राप्ताः सुग्रीवो यत्र वानरः ।। 37.34

स वानरशतैः तीक्ष्णैः बहुभिः शस्त्रपाणिभिः ।
परिकीर्णौ ययौ तत्र यत्र रामो व्यवस्थितः ।
स तं देशमनुप्राप्य श्रेष्ठं रामनिषेवितम् ।।

अवातरन्महातेजाः शिबिकायाः सलक्ष्मणः ।
आसाद्य च ततो रामं कृताञ्जलिपुटोऽभवत् ।।

प्रणष्टा श्रीश्च कीर्तिश्च कपिराज्यं च शाश्वतम् ।
त्वत्प्रसादान् महाबाहो पुनः प्राप्तमिदं मया ।।

शतैः शतसहस्रैश्च वर्तन्ते कोटिभिस्तथा ।
अयुतैश्चावृता वीर शङ्कुभिश्च परन्तप ।।

ते त्वामभिगमिष्यन्ति राक्षसं योद्धुमाहवे ।
निहत्य रावणं युद्धे ह्यानयिष्यन्ति मैथिलीम् ।।

इति ब्रुवाणं सुग्रीवं रामो धर्मभृतां वरः ।
बाहुभ्यां सम्परिष्वज्य प्रत्युवाच कृताञ्जलिम् ।।

त्वत्सनाथः सखे संख्ये जेतास्मि सकलानरीन् ।
त्वमेव मे सुहृन्मित्रं साहाय्यं कर्तुमर्हसि ।।

एतस्मिन्नन्तरे चैव रजःसमभिवर्तत ।
उष्णतीव्रां सहस्रांशोच्छादयद् गगने प्रभाम् ।।

निमेषान्तरमात्रेण ततस्तैर्हरियूथपैः ।
कोटीशतपरीवारैः वानरैर्हरियूथपैः ।।

अनेकैर्बहुसाहस्रैर्वानराणां समन्वितः ।
पिता हनुमतः श्रीमान् केसरी प्रत्यदृश्यत ।। 39.18

मैन्दश्च द्विविदश्चोभावश्विपुत्रौ महाबलौ ।
कोटिकोटिसहस्रेण वानराणामदृश्यताम् ।।

ऋक्षराजो महातेजा जाम्बवान्नाम नामतः ।
कोटिभिर्दशभिर्व्याप्तः सुग्रीवस्य वशे स्थितः ।।

ततःपद्मसहस्रेण वृतः शङ्कुशतेन च ।
युवराजोऽङ्गदः प्राप्तः पितुस्तुल्यपराक्रमः ।।

कैलासशिखराकारैर्वानरैर्भीमविक्रमैः ।
वृतः कोटिसहस्रेण हनुमान् प्रत्यदृश्यत ।।

शरभः कुमुदो वह्निर्वानरो रंह एव च ।
एते चान्ये च बहवो वानराः कामरूपिणः ।।

आवृत्य पृथिवीं सर्वां पर्वतांश्च वनानि च ।
यूथपाः समनुप्राप्ता येषां संख्या न विद्यते ।।

अपरे वानरश्रेष्ठाः सङ्गम्य च यथोचितम् ।
सुग्रीवेण समागम्य स्थिताः प्राञ्जलयस्तदा ।।

सुग्रीवस्त्वरितो रामे सर्वांस्तान् वानरर्षभान् ।
निवेदयित्वा धर्मज्ञः स्थितः प्राञ्जलिरब्रवीत् ।।

पृथिव्यम्बुचरा राम नानानगनिवासिनः ।
कोट्योधाश्च इमे प्राप्ता वानरास्तव किंकराः ।।

त इमे बहुसाहस्रैरनीकैर्भीमविक्रमैः ।
आगता वानरा घोरा दैत्यदानवसन्निभाः ।। 40.7

यन्मन्यसे नरव्याघ्र प्राप्तकालं तदुच्यताम् ।
त्वत्सैन्यं त्वद्वशे युक्तमाज्ञापयितुमर्हसि ।।

तथा ब्रुवाणं सुग्रीवं रामो दशरथात्मजः ।
बाहुभ्यां सम्परिष्वज्य इदं वचनमब्रवीत् ।।

ज्ञायतां सौम्य वैदेही यदि जीवति वा न वा ।
स च देशो महाप्राज्ञ यस्मिन् वसति रावणः ।।

अधिगम्य तु वैदेहीं निलयं रावणस्य च ।
प्राप्तकालं विधास्यामि तस्मिन् काले सह त्वया ।।

नाहमस्मिन् प्रभुः कार्ये वानरेन्द्र न लक्ष्मणः ।
त्वमस्य हेतुः कार्यस्य प्रभुश्च प्लवगेश्वर ।।

त्वमेवमाज्ञापय विभो मम कार्यविनिश्चयम् ।
त्वं हि जानासि मे कार्यं मम वीर न संशयः ।।

एवमुक्तस्तु सुग्रीवो विनतं नाम यूथपम् ।
अब्रवीद् रामसान्निध्ये लक्ष्मणस्य च धीमतः ।।

अधिगच्छ दिशं पूर्वां सशैलवनकाननाम् ।
तत्र सीतां च वैदेहीं निलयं रावणस्य च ।।

मार्गध्वं गिरिदुर्गेषु वनेषु च नदीषु च ।
सर्वं च तद् विचेतव्यं मार्गमद्भिस्ततस्ततः ।
मासे पूर्णे निवर्तध्वमुदयं प्राप्य पर्वतम् ।।

ततः प्रस्थाप्य सुग्रीवस्तन्महद्वानरं बलम् ।
दक्षिणां प्रेषयामास वानरानभिलक्षितान् ।। 41.1

नीलमग्निसुतं चैवं हनूमन्तं च वानरम् ।
पितामहसुतं चैव जाम्बवन्तं महौजसम् ।।

अङ्गदप्रमुखान् वीरान् वीरः कपिगणेश्वरः ।
वेगविक्रमसम्पन्नान् सन्दिदेश विशेषवित् ।।

तेषामग्रेसरं चैव बृहद्बलमथाङ्गदम् ।
विधाय हरिवीराणामादिशद्दक्षिणां दिशम् ।।

ततः सुषेणप्रमुखाः प्लवङ्गमाः सुग्रीववाक्यं निपुणं निशम्य ।
आमन्त्र्य सर्वे प्लवगाधिपास्ते जग्मुर्दिशं तां वरुणाभिगुप्ताम् ।।

ततः सन्दिश्य सुग्रीवः श्वशुरं पश्चिमां दिशम् ।
वीरं शरबलिं नाम वानरं वानराधिपः ।।

विशेषेण तु सुग्रीवो हनूमत्यर्थमुक्तवान् ।
स हि तस्मिन् न हरिश्रेष्ठे निश्चितार्थोऽर्थसाधने ।।

अब्रवीच्च हनूमन्तं विक्रान्तमनिलात्मजम् ।
सुग्रीवः परमप्रीतः प्रभुःसर्ववनौकसाम् ।।

न भूमौ नान्तरिक्षे वा नाम्बरे नामरालये ।
नाप्सु वा गतिसङ्गं ते पश्यामि हरिपुङ्गव ।।

तेजसा वापि ते भूतं न समं भुवि विद्यते ।
तद्यथा लभ्यते सीता तत्त्वमेवानुचिन्तय ।।

त्वय्येव हनूमन् नस्ति बलं बुद्धिः पराक्रमः ।
देशकालानुवृत्तिश्च नयश्च नयपण्डित ।। 44.7

ततः कार्यसमासङ्गमवगम्य हनूमति ।
विदित्वा हनूमन्तं च चिन्तयामास राघवः ।।

तदेवं प्रस्थितस्यास्य परिज्ञातस्य कर्मभिः ।
भर्त्रा परिगृहीतस्य ध्रुवः कार्यफलोदयः ।।

तं समीक्ष्य महातेजा व्यवसायोत्तरं हरिम् ।
कृतार्थ इव संहृष्टः प्रहृष्टेन्द्रियमानसः ।।

ददौ तस्य ततः प्रीतः स्वनामाङ्कोपशोभितम् ।
अङ्गुलीयमभिज्ञानं राजपुत्र्याः परन्तपः ।।

अनेन त्वां हरिश्रेष्ठ चिह्नेन जनकात्मजा ।
मत्सकाशादनुप्राप्तमनुद्विग्नानुपश्यति ।।

व्यवसायश्च ते वीर सत्त्वयुक्तश्च विक्रमः ।
सुग्रीवस्य च संदेशः सिद्धिं कथयतीव मे ।।

स तद् गृह्य हरिश्रेष्ठः कृत्वा मूर्ध्नि कृताञ्जलिः ।
वन्दित्वा चरणौ चैव प्रस्थितः प्लवगर्षभः ।।

सर्वांश्चाहूय सुग्रीवः प्लवगान् प्लवगर्षभः ।
समस्तांश्चाब्रवीद् राजा रामकार्यार्थसिद्धये ।।

एवमेतद् विचेतव्यं भवद्भिर्वानरोत्तमैः ।
तदुग्रशासनं भर्तुर्विज्ञाय हरिपुङ्गवाः ।।

शलभा इव सञ्छाद्य मेदिनीं सम्प्रतस्थिरे ।
रामः प्रस्रवणे तस्मिन् न्यवसत् सहलक्ष्मणः ।। 45:3

गतेषु वानरेन्द्रेषु रामःसुग्रीवमब्रवीत् ।
कथं भवान् विजानीते सर्वं वै मण्डलं भुवः ।।

सुग्रीवस्तु ततो राम उवाच प्रणतात्मवान् ।
यदा तु दुन्दुभिं नाम दानवं महिषाकृतिम् ।
प्रतिकालयते वाली मलयं प्रति पर्वतम् ।।

तदा विवेश महिषो मलयस्य गुहां प्रति ।
विवेश वाली तत्रापि मलयं तज्जिघांसया ।।

ततोऽहं तत्र निक्षिप्तो गुहाद्वारि विनीतवत् ।
न च निष्क्रामते वाली तदा संवत्सरे गते ।।

अथाहं गतबुद्धिस्तु सुव्यक्तं निहतो गुरुः ।
शिला पर्वतसंकाशा बिलद्वारि मया कृता ।।

राज्यं च सुमहत्प्राप्य तारां च रुमया सह ।
मित्रैश्च सहितस्तत्र वसामि विगतज्वरः ।।

आजगाम ततो वाली हत्वा तं वानरर्षभः ।
ततोऽहमददां राज्यं गौरवाद् भयमन्त्रितः ।।

ततोऽहं वालिना तेन सोऽनुबद्धः प्रधावितः ।
नदीश्च विविधाः पश्यन् वनानि नगराणि च ।।

आदर्शतलसंकाशा ततो वै पृथिवी मया ।
अलातचक्रप्रतिमा दृष्टा गोष्पदवत् कृता ।।

एवं मया तदा राजन् प्रत्यक्षमुपलक्षितम् ।
पृथिवीमण्डलं सर्वं गुहामस्म्यागतस्ततः ।। 46.24

दर्शनार्थं तु वैदेह्याः सर्वतः कपिकुञ्जराः ।
व्यादिष्टाः कपिराजेन यथोक्तं जग्मुरञ्जसा ।।

ते सरांसि सरित्कक्षान् आकाशं नगराणि च ।
नदीदुर्गांस्तथा देशान् विचिन्वन्ति समन्ततः ।।

सुग्रीवेण समाख्याताः सर्वे वानरयूथपाः ।
तत्र देशान्विचिन्वन्ति सशैलवनकाननान् ।।

तदहः प्रथमं कृत्वा मासे प्रस्रवणं गताः ।
कपिराजेन सङ्गम्य निराशाः कपिकुञ्जराः ।।

विचित्य तु दिशं पूर्वां यथोक्तां सचिवैः सह ।
अदृष्ट्वा विनतः सीतामाजगाम महाबलः ।।

दिशमप्युत्तरां सर्वां विविच्य स महाकपिः ।
आगतः सह सैन्येन भीतः शतबलिस्तदा ।।

सुषेणः पश्चिमामाशां विविच्य सह वानरैः ।
समेत्य मासे पूर्णे तु सुग्रीवमुपचक्रमे ।।

तं प्रस्रवणपृष्ठस्थं समासाद्याभिवाद्य च ।
आसीनं सह रामेण सुग्रीवमिदमब्रुवन् ।।

उदारसत्वाभिजनो हनूमान् स मैथिलीं ज्ञास्यति वानरेन्द्र ।
दिशं तु यामेव गता तु सीता तामास्थितो वायुसुतो हनूमान् ।।

सह ताराङ्गदाभ्यां तु सहसा हनूमान् कपिः ।
सुग्रीवेण यतोद्दिष्टं गन्तुं देशं प्रचक्रमे ।। 48.1

पर्वताग्रनदीदुर्गान् सरांसि विपुलद्रुमान् ।
वृक्षखण्डांश्च विविधान् पर्वतान् वनपादपान् ।।

अन्वेषमाणास्ते सर्वे वानराः सर्वतो दिशम् ।
न सीतां ददृशुर्वीरा मैथिलीं जनकात्मजाम् ।।

त्यक्त्वा तु तं देशं सर्वे वै हरियूथपाः ।
देशमन्यं दुराधर्षं विविशुश्चाकुतोभयाः ।।

प्रभवाणि नदीनां च विचिन्वन्ति समाहिताः ।
तत्र चापि महात्मानो नापश्यन् जनकात्मजाम् ।।

ते विचित्य पुनः खिन्ना विनिष्पत्य समागताः ।
एकान्ते वृक्षमूले तु निषेदुर्दीनमानसाः ।।

अथाङ्गदस्तदा सर्वान् वानरानिदमब्रवीत् ।
परिश्रान्तो महाप्राज्ञः समाश्वास्य शनैर्वचः ।।

अनिर्वेदं च दाक्ष्यं च मनसश्चापराजयम् ।
कार्यसिद्धिकराण्याहुस्तस्मादेतद् ब्रवीम्यहम् ।।

सुग्रीवः क्रोधनो राजा तीक्ष्णदण्डश्च वानराः ।
भेतव्यं तस्य सततं रामस्य च महात्मनः ।।

यथोद्दिष्टानि सर्वाणि सुग्रीवेण महात्मना ।
विचिन्वन्तु वनं सर्वे गिरिदुर्गाणि सङ्गताः ।।

ते मुहूर्तं समाश्वस्ताः किंचिद्भग्नपरिश्रमाः ।
पुनरेवोद्यताः कृत्स्नां मार्गितुं दक्षिणां दिशम् ।। 49.21

हनुमत्प्रमुखास्तावत् प्रस्थिताः प्लवगर्षभाः ।
विन्ध्यमेवादितः कृत्वा विचेरुश्च समन्ततः ।।

सह ताराङ्गदाभ्यां तु संगम्य हनुमान् कपिः ।
विचिन्वन्तस्ततस्तत्र ददृशुर्विवृतं बिलम् ।
दुर्गमृक्षबिलं नाम दानवेनाभिरक्षितम् ।।

वयं सर्वे परिश्रान्ता न च पश्याम मैथिलीम् ।
अस्माच्चापि बिलान् हंसाः क्रौञ्चाश्च सह सारसैः ।।

तथा चेमे बिलद्वारे स्निग्धास्तिष्ठन्ति पादपाः ।
इत्युक्तास्तद् बिलं सर्वे विविशुस्तिमिरावृतम् ।।

वायोरिव गतिस्तेषां दृष्टिस्तमसि वर्तते ।
अन्योन्यं सम्परिष्वज्य जग्मुर्योजनमन्तरम् ।।

परिपेतुर्बिले तस्मिन् केचित्कालमतन्द्रिताः ।
ते कृशा दीनवदनाः परिश्रान्ताः प्लवङ्गमाः ।।

आलोकं ददृशुर्वीरा निराशा जीविते यदा ।
ततस्तं देशमागम्य सौम्या वितिमिरं वनम् ।।

ददृशुर्वानराः शूराः स्त्रियं काञ्चिददूरतः ।
तां च ते ददृशुस्तत्र चीरकृष्णाजिनाम्बराम् ।।

तापसीं नियताहारां ज्वलन्तीमिव तेजसा ।
विस्मिता हरयस्तत्र व्यवतिष्ठन्त सर्वशः ।
पप्रच्छ हनुमांस्तत्र कासि त्वं कस्य वा बिलम् ।। 50.40

प्रत्युवाच हनूमन्तं सर्वभूतहिते रता ।
मयो नाम महातेजा मायावी वानरर्षभ ।।

तेनेदं निर्मितं सर्वं मायया काञ्चनं वनम् ।
स तु वर्षसहस्राणि तपस्तप्त्वा महद्वने ।।

इदं च ब्रह्मणा दत्तं हेमायै वनमुत्तमम् ।
तया दत्तवरा चास्मि रक्षामि भवनं महत् ।
किं कार्यं कस्य वा हेतोः कान्ताराणि प्रपद्यथ ।।

कथं चेदं वनं दुर्गं युष्माभिरुपलक्षितम् ।
शुचीन्यभ्यवहाराणि मूलानि च फलानि च ।
भुक्त्वा पीत्वा च पानीयं सर्वं मे वक्तुमर्हसि ।।

तस्यास्तद्वचनं श्रुत्वा हनूमान् मारुतात्मजः ।
आर्जवेन यथातत्त्वमाख्यातुमुपचक्रमे ।।

राजा सर्वस्य लोकस्य महेन्द्रवरुणोपमः ।
रामो दाशरथिः श्रीमान् प्रविष्टो दण्डकावनम् ।।

लक्ष्मणो सह भ्रात्रा वैदेह्या सह भार्यया ।
तस्य भार्या जनस्थानाद् रावणेन हृता बलात् ।।

वीरस्तस्य सखा राज्ञः सुग्रीवो नाम वानरः ।
राजा वानरमुख्यानां येन प्रस्थापिता वयम् ।।

रावणं सहिताः सर्वे राक्षसं कामरूपिणम् ।
सीतया सह वैदेह्या मार्गध्वमिति चोदिताः ।। 52.8

विचित्य तु वनं सर्वं समुद्रं दक्षिणां दिशम् ।
वयं बुभुक्षिताः सर्वे वृक्षमूलमुपाश्रिताः ।।

यत्त्वया रक्षिताः सर्वे म्रियमाणा बुभुक्षया ।
शरणं त्वां प्रपन्नाः स्मः सर्वे वै धर्मचारिणीम् ।।

त्रातुमर्हसि नः सर्वान् सुग्रीवभयशङ्कितान् ।
महच्च कार्यमस्माभिः कर्तव्यं धर्मचारिणि ।
एवमुक्ता हनुमता तापसी वाक्यमब्रवीत् ।।

सर्वानेव बिलादस्माद् तारयिष्यामि वानरान् ।
निमीलयत चक्षूंषि सर्वे वानरपुङ्गवाः ।।

नहि निष्क्रमितुं शक्यमनिमीलितलोचनैः ।
ततो निमीलिताः सर्वे सुकुमाराङ्गुलैः करैः ।।

निमेषान्तरमात्रेण बिलादुत्तारितास्तया ।
उवाच सर्वास्तांस्तत्र तापसी धर्मचारिणी ।।

एष प्रस्रवणः शैलः सागरोऽयं महोदधि ।
स्वस्ति वोऽस्तु गमिष्यामि भवनं वानरर्षभाः ।।
इत्युक्त्वा तद्बिलं श्रीमत्प्रविवेश स्वयंप्रभा ।।

मयस्य मायाविहितं गिरिदुर्गं विचिन्वताम् ।
तेषां मासो व्यतिक्रान्तो यो राज्ञा समयः कृतः ।।

विन्ध्यस्य तु गिरेः पादे सम्प्रपुष्पितपादपे ।
उपविश्य महात्मानश्चिन्तामापेदिरे तदा ।। 53.3

इदानीमकृतार्थानां मर्तव्यं नात्र संशयः ।
हरिराजस्य संदेशमकृत्वा कः सुखी भवेत् ।।

रामस्य वनवासं च क्षयं दशरथस्य च ।
जनस्थानवधं चैव वधं चैव जटायुषः ।।

हरणं चैव वैदेह्या वालिनश्च वधं तथा ।
रामकोपं च वदतां हरीणां भयमागतम् ।।

उपविष्टास्तु ते सर्वे यस्मिन्प्रायं गिरिस्थले ।
हरयो गृध्रराजश्च तं देशमुपचक्रमे ।।

सम्पातिर्नाम नाम्ना तु चिरजीवी विहङ्गमः ।
भ्राता जटायुषः श्रीमान् विख्यातबलपौरुषः ।।

परम्पराणां भक्षिष्ये वानराणां मृतं मृतम् ।
उवाचैतद् वचः पक्षी तान्निरीक्ष्य प्लवङ्गमान् ।।

तस्य तद्वचनं श्रुत्वा भक्ष्यलुब्धस्य पक्षिणः ।
अङ्गदः परमायस्तो हनूमन्तमथाऽब्रवीत् ।।

पश्य सीतापदेशेन साक्षाद् वैवस्वतो यमः ।
इमं देशमनुप्राप्तो वानराणां विपत्तये ।।

वैदेह्याः प्रियकामेन कृतं कर्म जटायुषा ।
गृध्रराजेन यत्तत्र श्रुतं वस्तदशेषतः ।।

कान्ताराणि प्रपन्नाः स्म न च पश्याम मैथिलीम् ।
मुक्तश्च सुग्रीवभयाद् गतश्च परमां गतिम् ।। 56.13

जटायुषो विनाशेन राज्ञो दशरथस्य च ।
हरणेन च वैदेह्याः संशयं हरयो गताः ।।

रामकोपादशेषाणां रक्षसां च तथा वधम् ।
कैकेय्या वरदानेन इदं च विकृतं कृतम् ।।

तत्तु श्रुत्वा तथा वाक्यमङ्गदस्य मुखाद्गतम् ।
अब्रवीद्वचनं गृध्रस्तीक्ष्णतुण्डो महास्वनः ।।

कोऽयं गिरा घोषयति प्राणैः प्रियतरस्य मे ।
जटायुषो वधं भ्रातुः कम्पयन्निव मे मनः ।।

कथमासीज्जनस्थाने युद्धं राक्षसगृध्रयोः ।
नामधेयमिदं भ्रातुश्चिरस्याद्य मया श्रुतम् ।।

भ्रातुर्जटायुषस्तस्य जनस्थाननिवासिनः ।
तस्यैव च मम भ्रातुः सखा दशरथः कथम् ।।

यस्य रामः प्रियः पुत्रो ज्येष्ठो गुरुजनप्रियः ।
सूर्यांशुदग्धपक्षत्वात् न शक्नोमि विसर्पितुम् ।।
इच्छेयं पर्वतादस्मादवतर्तुमरिन्दमाः ।।

एतां बुद्धिं ततश्चक्रुः सर्वे ते हरियूथपाः ।
अवतार्य गिरेः शृङ्गाद् गृध्रमाह अङ्गदस्तदा ।।

राजा कृत्स्नस्य जगत इक्ष्वाकूणां महारथः ।
रामो दाशरथिः श्रीमान् प्रविष्टो दण्डकावनम् ।।

तस्य भार्या जनस्थानाद्रावणेन हृता बलात् ।
रामस्य तु पितुर्मित्रं जटायुर्नाम गृध्रराट् ।। 57.9

दद‍र्श सीतां वैदेहीं ह्रियमाणां विहायसा ।
रावणं विरथं कृत्वा स्थापयित्वा च मैथिलीम् ।।

परिश्रान्तश्च वृद्धश्च रावणेन हतो रणे ।
ततो मम पितृव्येण सुग्रीवेण महात्मना ।
चकार राघवः सख्यं सोऽवधीत्पितरं मम ।।

स राज्ये स्थापितस्तेन सुग्रीवो वानरेश्वरः ।
राजा वानरमुख्यानां तेन प्रस्थापिता वयम् ।।

एवं रामप्रयुक्तास्तु मार्गमाणस्ततस्ततः ।
वैदेहीं नाधिगच्छामो रात्रौ सूर्यप्रभामिव ।।

ते वयं कपिराजस्य सर्वे वचनकारिणः ।
कृतां संस्थामतिक्रान्ता भयात्प्रायमुपासिताः ।।

इत्युक्तः करुणं वाक्यं वानरैस्त्यक्तजीवितैः ।
सबाष्पो वानरान् गृध्रः प्रत्युवाच महास्वनः ।।

यवीयान् स मम भ्राता जटायुर्नाम वानराः ।
यमाख्यात हतं युद्धे रावणेन बलीयसा ।

पुरा वृत्रवधे वृत्ते स चाहं च जयैषिणौ ।
आदित्यमुपयातो स्वो ज्वलन्तं रश्मिमालिनम् ।।

आवृत्याकाशमार्गेण जवेन स्वर्गतौ भृशम् ।
मध्यं प्राप्ते तु सूर्ये तु जटायुरवसीदति ।।

तमहं भ्रातरं दृष्ट्वा सूर्यरश्मिभिरर्दितम् ।
पक्षाभ्यां छादयामास स्नेहात् परमविह्वलम् ।। 58.6

निर्दग्धपत्रः पतितो विन्ध्येऽहं वानरर्षभाः ।
अहमस्मिन् वसन् भ्रातुः प्रवृत्तिं नोपलक्षये ।।

जटायुषस्त्वेवमुक्तो भ्रात्रा सम्पातिना तदा ।
युवराजो महाप्राज्ञः प्रत्युवाचाङ्गदस्तदा ।।

जटायुषो यदि भ्राता श्रुतं ते गदितं मया ।
आख्याहि यदि जानासि निलयं तस्य रक्षसः ।।

ततोऽब्रवीत् महातेजा ब्राता ज्येष्ठो जटायुषः ।
निर्दग्धपक्षो गृध्रोऽहं गतवीर्यः प्लवङ्गमाः ।
वाङ्मात्रेण तु रामस्य करिष्ये साह्यमुत्तमम् ।।

रामस्य यदिदं कार्यं कर्तव्यं प्रथमं मया ।
जरया च हतं तेजः प्राणाश्च शिथिला मम ।।

तरुणी रूपसम्पन्ना सर्वाभरणभूषिता ।
ह्रियमाणा मया दृष्टा रावणेन दुरात्मना ।।

क्रोशन्ती राम रामेति लक्ष्मणेति च भामिनी ।
भूषणान्यपविध्यन्ती गात्राणि च विधुन्वती ।।

तां तु सीताम् अहं मन्ये रामस्य परिकीर्तनात् ।
इतो द्वीपे समुद्रस्य सम्पूर्णे शतयोजने ।
तस्मिल्लङ्का पुरी रम्या निर्मिता विश्वकर्मणा ।।

प्राकारेणार्कवर्णेन महता च समन्विता ।
तस्यां वसति वैदेही दीना कौशेयवासिनी ।। 58 22

लङ्कायामथ गुप्तायां सागरेण समन्ततः ।
सम्प्राप्य सागरस्यान्तं सम्पूर्णं शतयोजनम् ।।

आसाद्य दक्षिणं तीरं ततो द्रक्ष्यथ रावणम् ।
तत्रैव त्वरिताः क्षिप्रं विक्रमध्वं प्लवङ्गमाः ।।

इहस्थोऽहं प्रपश्यामि रावणं जानकीं तथा ।
अस्माकमपि सौपर्णं दिव्यं चक्षुर्बलं तथा ।।

उपायो दृश्यतां कश्चिल्लङ्घने लवणाम्भसः ।
अभिगम्य तु वैदेहीं समृद्धार्था गमिष्यथ ।।

तस्य त्वेवं ब्रुवाणस्य संहतैर्वानरैः सह ।
आदित्यरश्मिनिर्दग्धौ पक्षौ पुनरुपस्थितौ ।।

यौवने वर्तमानस्य ममासीद् यः पराक्रमः ।
तमेवाद्यावगच्छामि बलं पौरुषमेव च ।
सर्वथा क्रियतां यत्नः सीतामधिगमिष्यथ ।।

पक्षलाभो ममायं वः सिद्धिप्रत्ययकारकः ।
इत्युक्त्वा तान्हरीन् सर्वान् सम्पातिः पतगोत्तमः ।
उत्पपात गिरेः शृङ्गात् जिज्ञासुः खगमो गतिम् ।।

तस्य तद्वचनं श्रुत्वा प्रतिसंहृष्टमानसाः ।
बभूवुर्हरिशार्दूला विक्रमाभ्युदयोन्मुखाः ।।

सम्पातेर्वचनं श्रुत्वा हरयो रावणक्षयम् ।
हृष्टाः सागरमाजग्मुः सीतादर्शनकाङ्क्षिणः ।। 64.2

आकाशमिव दुष्पारं सागरं प्रेक्ष्य वानराः ।
विषेदुः सहिताः सर्वे कथं कार्यमिति ब्रुवन् ।।

ततस्तान् हरिवृद्धांश्च तच्च सैन्यमरिन्दमः ।
अनुमान्याङ्गदः श्रीमान् वाक्यमर्थवदब्रवीत् ।।

क इदानीं महातेजा लङ्घयिष्यति सागरम् ।
कः करिष्यति सुग्रीवं सत्यसन्धमरिन्दमम् ।
ब्रुवध्वं यस्य या शक्तिः प्लवने प्लवगर्षभाः ।।

अथाङ्गदवचः श्रुत्वा ते सर्वे वानरर्षभाः ।
स्वं स्वं गतौ समुत्थाहमूचुस्तत्र यथाक्रमम् ।।

आबभाषे गजस्तत्र प्लवेयं दशयोजनम् ।
गवाक्षो योजनान्याह गमिष्यामीति विंशतिम् ।।

सुषेणस्तु महातेजाः सत्त्ववान् कपिसत्तमः ।
अशीतिं प्रतिजानेऽहं योजनानां पराक्रमे ।।

तेषां कथयतां तत्र सर्वांस्ताननुमान्य च ।
ततो वृद्धतमस्तेषां जाम्बवान् प्रत्यभाषत ।।

साम्प्रतं कालमस्माकं या गतिस्तां निबोधत ।
नवतिं योजनानां तु गमिष्यामि न संशयः ।।

सोऽङ्गदेन तदा वीरः प्रत्युक्तः प्लवगर्षभः ।
जाम्बवानुत्तमं वाक्यं प्रोवाचेदं ततोऽङ्गदम् ।।

तस्य ते वीर कार्यस्य न किञ्चित् परिहास्यते ।
एष सञ्चोदयाम्येनं यः कार्यं साधयिष्यति ।। 65.34

ततः प्रतीतं प्लवतां वरिष्ठमेकान्तमाश्रित्य सुखोपविष्टम् ।
संचोदयामास हरिप्रवीरो हरिप्रवीरं हनुमन्तमेव ।।

अनेकशतसाहस्रीं विषण्णां हरिवाहिनीम् ।
जाम्बवान् समुदीक्ष्यैवं हनूमन्तमथाब्रवीत् ।।

हनूमन् हरिराजस्य सुग्रीवस्य समो ह्यसि ।
रामलक्ष्मणयोश्चापि तेजसा च बलेन च ।।

अभ्युत्थितं ततः सूर्यं बालो दृष्ट्वा महावने ।
फलं चेति जिघृक्षस्त्वम् उत्पलुत्याभ्युत्पतो दिवम् ।।

शतानि त्रीणि गत्वाथ योजनानां महाकपे ।
क्षिप्तमिन्द्रेण ते वज्रं कोपाविष्टेन तेजसा ।।

तदा शैलाग्रशिखरे वामो हनुरभज्यत ।
ततो हि नामधेयं ते हनुमानिति कीर्तितम् ।।

ततस्त्वां निहतं दृष्ट्वा वायुर्गन्धवहः स्वयम् ।
त्रैलोक्यं भृशसंक्रुद्धो न ववौ वै प्रभञ्जनः ।।

प्रसादिते च पवने ब्रह्मा तुभ्यं वरं ददौ ।
अशस्त्रवध्यतां तात समरे सत्यविक्रम ।।

वज्रस्य च निपातेन विरुजं त्वां समीक्ष्य च ।
सहस्रनेत्रः प्रीतात्मा ददौ ते वरमुत्तमम् ।।

स्वच्छन्दतश्च मरणं तव स्यादिति वै प्रभो ।
स त्वं केसरिणः पुत्रः क्षेत्रजो भीमविक्रमः ।। 66.29

तद् विजृम्भस्व विक्रान्त प्लवतामुत्तमो ह्यसि ।
त्वद्वीर्यं द्रष्टुकामो हि सर्वा वानरवाहिनी ।।

उत्तिष्ठ हरिशार्दूल लङ्घयस्व महार्णवम् ।
परा हि सर्वभूतानां हनुमन् या गतिस्तव ।।

ततः कपीनामृषभेण चोदितः प्रतीतवेगः पवनात्मजः कपिः ।
प्रहर्षयंस्तां हरिवीरवाहिनीं चकार रूपं महदात्मनस्तदा ।।

तस्य संस्तूयमानस्य वृद्धैर्वानरपुङ्गवैः ।
तेजसाऽऽपूर्यमाणस्य रूपमासीदनुत्तमम् ।।

हरीणामुत्थितो मध्यात् सम्प्रहृष्टतनूरुहः ।
अभिवाद्य हरीन् वृद्धान् हनूमानिदमब्रवीत् ।।

पन्नगासनमाकाशे पतन्तं पक्षिसेवितम् ।
वैनतेयमहं शक्तः परिगन्तुं सहस्रशः ।।

बुद्ध्या चाहं प्रपश्यामि मनश्चेष्टा च मे तथा ।
अहं द्रक्ष्यामि वैदेहीं प्रमोदध्वं प्लवङ्गमाः ।।

स वेगवान् वेगसमाहितात्मा हरिप्रवीर परवीरहन्ता ।
मनः समाधाय महानुभावो जगाम लङ्कां मनसा मनस्वी ।।

।। इत्यार्षे श्रीमद् वाल्मीकिरामायणसंग्रहे
किष्किन्धाकाण्डम् सम्पूर्णम् ।।

# ।। सुन्दरकाण्डम् ।।

दुष्करं निष्प्रतिद्वन्द्वं चिकीर्षन् कर्म वानरः ।
समुदग्रशिरोग्रीवो गवां पतिरिवाबभौ ।।

अञ्जलिं प्राङ्मुखं कुर्वन् पवनायात्मयोनये ।
ततो हि ववृधे गन्तुं दक्षिणो दक्षिणां दिशम् ।।

प्लवगप्रवरैर्दृष्टः प्लवने कृतनिश्चयः ।
ववृधे रामवृद्ध्यर्थं समुद्र इव पर्वसु ।।

पद्भ्यां दृढमवस्थानं कृत्वा स कपिकुञ्जरः ।
निकुच्य कर्णौ हनुमानुत्पतिष्यन् महाबलः ।।

वानरान् वानरश्रेष्ठ इदं वचनमब्रवीत् ।
यथा राघवनिर्मुक्तः शरः श्वसनविक्रमः ।।

गच्छेत् तद्वद् गमिष्यामि लङ्कां रावणपालिताम् ।
न हि द्रक्ष्यामि यदि तां लङ्कायां जनकात्मजाम् ।।

अनेनैव हि वेगेन गमिष्यामि सुरालयम् ।
यदि वा त्रिदिवे सीतां न द्रक्ष्यामि कृतश्रमः ।।

बद्ध्वा राक्षसराजानमानयिष्यामि रावणम् ।
सर्वथा कृतकार्योऽहमेष्यामि सह सीतया ।।

आनयिष्यामि वा लङ्कां समुत्पाट्य सरावणाम् ।
एवमुक्त्वा तु हनुमान्वानरो वानरोत्तमः ।।

उत्पपाताथ वेगेन वेगवानविचारयन् ।
सुपर्णमिव चात्मानं मेने स कपिकुञ्जरः ।। 1.44

प्लवमानं तु तं दृष्ट्वा प्लवगं त्वरितं तदा ।
ववृषुस्तत्र पुष्पाणि देवगन्धर्वचारणाः ।।

तस्मिन् प्लवगशार्दूले प्लवमाने हनूमति ।
इक्ष्वाकुकुलमानार्थी चिन्तयामास सागरः ।।

अहमिक्ष्वाकुनाथेन सगरेण विवर्धितः ।
इक्ष्वाकुसचिवश्चायं तन्नार्हत्यवसादितुम् ।।

तथा मया विधातव्यं विश्रमेत यथा कपिः ।
शेषं च मयि विश्रान्तः सुखी सोऽतितरिष्यति ।।

इति कृत्वा मतिं साध्वीं समुद्रश्छन्नमम्भसि ।
हिरण्यनाभं मैनाकमुवाच गिरिसत्तमम् ।।

स एष कपिशार्दूलस्त्वामुपर्येति वीर्यवान् ।
हनुमान् रामकार्यार्थी भीमकर्मा खमाप्लुतः ।।

अस्य साह्यं मया कार्यमिक्ष्वाकुकुलवर्तिनः ।
मम इक्ष्वाकवः पूज्याः परं पूज्यतमास्तव ।।

सलिलादूर्ध्वमुत्तिष्ठ तिष्ठत्वेष कपिस्त्वयि ।
अस्माकमतिथिश्चैव पूज्यश्च प्लवतां वरः ।।

हिरण्यगर्भो मैनाको निशम्य लवणाम्भसः ।
उत्पपात जलात् तूर्णं महद्रुमलतावृतः ।।

स महात्मा मुहूर्तेन पर्वतः सलिलावृतः ।
दर्शयामास शृङ्गाणि सागरेण नियोजितः ।। 1.103

स तमुच्छ्रितमत्यर्थं महावेगो महाकपिः ।
उरसा पातयामास जीमूतमिव मारुतः ।।

तमाकाशगतं वीरमाकाशे समुपस्थितः ।
प्रीतो हृष्टमना वाक्यमब्रीत् पर्वतः कपिम् ।।

निपत्य मम शृङ्गेषु सुखं विश्रम्य गम्यताम् ।
राघवस्य कुले जातैरुदधिः परिवर्धितः ।।

स त्वां रामहिते युक्तं प्रत्यर्चयति सागरः ।
कृते च प्रतिकर्तव्यमेष धर्मः सनातनः ।।

अस्माकमपि सम्बन्धः कपिमुख्य त्वयास्ति वै ।
प्रख्यातस्त्रिषु लोकेषु महागुणपरिग्रहः ।।

श्रमं मोक्षय पूजां च गृहाण हरिसत्तम ।
प्रीतिं च मम मान्यस्य प्रीतोऽस्मि तव दर्शनात् ।।

एवमुक्तः कपिश्रेष्ठस्तं नगोत्तममब्रवीत् ।
प्रीतोऽस्मि कृतमातिथ्यं मन्युरेषोऽपनीयताम् ।।

इत्युक्त्वा पाणिना शैलमालभ्य हरिपुङ्गवः ।
जगामाकाशमाविश्य वीर्यवान् प्रहसन्निव ।।

अथोर्ध्वं दूरमागम्य हित्वा शैलमहार्णवौ ।
पितुः पन्थानमासाद्य जगाम विमलेऽम्बरे ।।

भूयश्चोर्ध्वं गतिं प्राप्य गिरिं तमवलोकयन् ।
वायुसूनुर्निरालम्बो जगाम कपिकुञ्जरः ।। 1.135

तद् द्वितीयं हनुमतो दृष्ट्वा कर्म सुदुष्करम् ।
प्रशशंसुः सुराः सर्वे सिद्धाश्च परमर्षयः ।।

स वै दत्तवरः शैलो बभूवावस्थितस्तदा ।
हनूमांश्च मुहूर्तेन व्यतिचक्राम सागरम् ।।

ततो देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः ।
अब्रुवन् सूर्यसङ्काशां सुरसां नागमातरम् ।।

अयं वातात्मजः श्रीमान् प्लवते सागरोपरि ।
हनूमान् नाम तस्य त्वं मुहूर्तं विघ्नमाचर ।।

राक्षसं रूपमास्थाय सुघोरं पर्वतोपमम् ।
दंष्ट्राकरालं पिङ्गाक्षं वक्त्रं कृत्वा नभः स्पृशम् ।।

बलमिच्छामहे ज्ञातुं भूयश्चास्य पराक्रमम् ।
त्वां विजेष्यत्युपायेन विषादं वा गमिष्यति ।।

विकृतं च विरूपं च सर्वस्य च भयावहम् ।
प्लवमानं हनूमन्तमावृत्येदमुवाच ह ।।

मम भक्ष्यः प्रदिष्टस्त्वमीश्वरैर्वानरर्षभ ।
अहं त्वां भक्षयिष्यामि प्रविशेदं ममाननम् ।।

एवमुक्तः सुरसया प्रहृष्टवदनोऽब्रवीत् ।
रामो दाशरथिर्नाम प्रविष्टो दण्डकावनम् ।।

अन्यकार्यविषक्तस्य बद्धवैरस्य राक्षसैः ।
तस्य सीता हृता भार्या रावणेन यशस्विनी ।। 1.153

तस्याः सकाशं दूतोऽहं गमिष्ये रामशासनात् ।
कर्तुमर्हसि रामस्य साह्यं विषयवासिनि ।।

तं प्रयान्तं समुद्वीक्ष्य सुरसा वाक्यमब्रवीत् ।
बलं जिज्ञासमाना सा नागमाता हनूमतः ।।

निविश्य वदनं मेऽद्य गन्तव्यं वानरोत्तम ।
वर एष पुरा दत्तो मम धात्रेति सत्वरा ।।

अब्रवीत् कुरु वै वक्त्रं येन मां विषहिष्यसि ।
इत्युक्त्वा सुरसां क्रुद्धो दशयोजनमायताम् ।।

दशयोजनविस्तारो हनूमानभवत् तदा ।
तं दृष्ट्वा मेघसङ्काशं दशयोजनमायतम् ।।

हनूमाननलप्रख्यो नवतिं योजनोच्छ्रितः ।
चकार सुरसा वक्त्रं शतयोजनमायतम् ।।

स संक्षिप्यात्मनः कायं जीमूत इव मारुतिः ।
तस्मिन् मुहूर्ते हनुमान् बभूवाङ्गुष्ठमात्रकः ।।

सोऽभिपद्याथ तद् वक्त्रं निष्पत्य च महाबलः ।
अन्तरिक्षे स्थितः श्रीमानिदं वचनमब्रवीत् ।।

प्रविष्टोऽस्मि हि ते वक्त्रं दाक्षायणि नमोऽस्तु ते ।
गमिष्ये यत्र वैदेही सत्यश्चासीद् वरस्तव ।।

अर्थसिद्ध्यै हरिश्रेष्ट गच्छ सौम्य यथासुखम् ।
समानय च वैदेहीं राघवेण महात्मना ।। 1.171

भेजेऽम्बरं नरालम्बं पक्षयुक्त इवाद्रिराट् ।
प्लवमानं तु तं दृष्ट्वा सिंहिका नाम राक्षसी ।।

मनसा चिन्तयामास प्रवृद्धा कामरूपिणी ।
अद्य दीर्घस्य कालस्य भविष्याम्यहमाशिता ।।

इदं मम महासत्त्वं चिरस्य वशमागतम् ।
इति सञ्चिन्त्य मनसा छायामस्य समाक्षिपत् ।।

सतां बुद्ध्वार्थतत्त्वेन सिंहिकां मतिमान् कपिः ।
व्यवर्धत महाकायः प्रावृषीव बलाहकः ।।

तस्य सा कायमुद्वीक्ष्य वर्धमानं महाकपेः ।
वक्त्रं प्रसारयामास पातालाम्बरसन्निभम् ।।

संक्षिप्य मुहुरात्मानं निपपात महाकपिः ।
आस्ये तस्या निमज्जन्तं ददृशुः सिद्धचारणाः ।।

ग्रस्यमानं यथा चन्द्रं पूर्णं पर्वणि राहुणा ।
ततस्तस्या नखैस्तीक्ष्णैर्मर्माण्युत्कृत्य वानरः ।।

कपिप्रवीरो वेगेन ववृधे पुनरात्मवान् ।
हृतहृत्सा हनुमता पपात विधुराम्बसि ।।

तां हतां वानरेणाशु पतितां वीक्ष्य सिंहिकाम् ।
भूतान्याकाशचारीणि तमूचुः प्लवगोत्तमम् ।।

यस्य त्वेतानि चत्वारि वानरेन्द्र यथा तव ।
धृतिर्दृष्टिर्मतिर्दाक्ष्यं स कर्मसु न सीदति ।। 1.201

तद्रूपमतिसंक्षिप्य हनूमान् प्रकृतौ स्थितः ।
त्रीन् क्रमानिव विक्रम्य बलिवीर्यहरो हरिः ।।

स सागरं दानवपन्नगायुतं बलेन विक्रम्य महोर्मिमालिनम् ।
निपत्य तीरे च महोदधेस्तदा ददर्श लङ्काममरावतीमिव ।।

स सागरमनाधृष्यमतिक्रम्य महाबलः ।
त्रिकूटस्य तटे लङ्कां स्थितः स्वस्थो ददर्श ह ।।

योजनानां शतं श्रीमांस्तीर्त्वाप्युत्तमविक्रमः ।
अनिःश्वसन् कपिस्तत्र न ग्लानिमधिगच्छति ।।

स तस्मिन्नचले तिष्ठन् वनान्युपवनानि च ।
स नगाग्रे स्थितां लङ्कां ददर्श पवनात्मजः ।।

सन्ततान् विविधैर्वृक्षैः सर्वर्तुफलपुष्पितैः।
उद्यानानि च रम्याणि ददर्श कपिकुञ्जरः।।

काञ्चनेनावृतां रम्यां प्राकारेण महापुरीम् ।
गृहैश्च गिरिसङ्काशैः शारदाम्बुदसन्निभैः ।।

गिरिमूर्ध्निस्थितां लङ्कां पाण्डरैर्भवनैः शुभैः ।
ददर्श स कपिः श्रीमान् पुरीमाकाशगामिव ।।

दंष्ट्राभिर्बहुभिःशूरैः शूलपट्टिशपाणिभिः ।
रक्षितां राक्षसैर्घोरैर्गुहामाशीविषैरिव ।।

तस्याश्च महतीं गुप्तिं सागरं च निरीक्ष्य सः ।
रावणं च रिपुं घोरं चिन्तयामास वानरः ।। 2.26

अनेन रूपेण मया न शक्या रक्षसां पुरी ।
प्रवेष्टुं राक्षसैर्गुप्ता क्रूरैर्बलसमन्वितैः ॥

लक्ष्यालक्ष्येण रूपेण रात्रौ लङ्कापुरी मया ।
प्राप्तकालं प्रवेष्टुं मे कृत्यं साधयितुं महत् ॥

तदहं स्वेन रूपेण रजन्यां ह्रस्वतां गतः ।
लङ्कामभिगमिष्यामि राघवस्यार्थसिद्धये ॥

सूर्ये चास्तं गते रात्रौ देहं संक्षिप्य मारुतिः ।
वृषदंशकमात्रोऽथ बभूवाद्भुतदर्शनः ॥

प्रासादमालाविततां स्तम्भैः काञ्चनसन्निभैः ।
शातकुम्भनिभैर्जालैर्गन्धर्वनगरोपमाम् ॥

वैदूर्यकृतसोपानैः स्पाटिकान्तरपांसुभिः ।
चारुसञ्जवनोपेतैः खमिवोत्पतितैः शुभैः ॥

क्रौञ्चबर्हिणसंघुष्टैः राजहंसनिषेवितैः ।
तूर्याभरणनिर्घोषैः सर्वतः परिनादिताम् ॥

वस्वोकसारप्रतिमां समीक्ष्य नगरीं ततः ।
खमिवोत्पतितां लङ्कां जहर्ष हनुमान् कपिः ॥

अथ सा हरिशार्दूलं प्रविशन्तं महाकपिम् ।
नगरी स्वेन रूपेण ददर्श पवनात्मजम् ॥

सा तं हरिवरं दृष्ट्वा लङ्का रावणपालिता ।
स्वयमेवोत्थिता तत्र विकृताननदर्शना ॥
मुञ्जमाना महानादमब्रवीत् पवनात्मजम् ॥ 3.22

कस्त्वं केन च कार्येण इह प्राप्तो वनालय ।
कथयस्वेह यत् तत्त्वं यावत् प्राणान्धरन्ति ते ।।

अहं राक्षसराजस्य रावणस्य महात्मनः ।
आज्ञाप्रतीक्षा दुर्धर्षा रक्षामि नगीमिमाम् ।।
आवभाषे अथ मेधावी सत्त्ववान् प्लवगर्षभ ।।

द्रक्ष्यामि नगरीं लङ्कां साट्टप्राकारतोरणाम् ।
इत्यर्थमिह सम्प्राप्तः परं कौतूहलं हि मे ।।

तस्य तद् वचनं श्रुत्वा लङ्का सा कामरूपिणी ।
भूय एव पुनर्वाक्यं बभाषे परुषाक्षरम् ।।

मामनिर्जित्य दुर्बुद्धे राक्षसेश्वरपालिताम् ।
न शक्यं ह्यद्य ते द्रष्टुं पुरीयं वानराधम ।।

ततः कृत्वा महानादं सा वै लङ्का भयङ्करम् ।
तलेन वानरश्रेष्टं ताडयामास वेगिता ।।

ततः संवर्तयामास वामहस्तस्य सोऽङ्गुलीः ।
मुष्टिनाभिजघानैनां हनुमान् क्रोधमूर्च्छितः ।।

स्त्री चेति मन्यमानेन नातिक्रोधः स्वयं कृतः ।
सा तु तेन प्रहारेण विह्वलाङ्गी निशाचरी ।
पपात सहसा भूमौ विकृताननदर्शना ।।

ततो वै भृशमुद्विग्ना लङ्का सा गद्गदाक्षरम् ।
उवाचागर्वितं वाक्यं हनुमन्तं प्लवङ्गमम् ।। 3.43

प्रसीद सुमहाबाहो त्रायस्व हरिसत्तम ।
समये सौम्य तिष्ठन्ति सत्त्ववन्तो महाबलाः ।।

अहं तु नगरी लङ्का स्वयमेव प्लवङ्गम ।
निर्जिताहं त्वया वीर विक्रमेण महाबल ।।

इदं च तथ्यं शृणु मे ब्रुवन्त्या वै हरीश्वर ।
स्वयं स्वयम्भुवा दत्तं वरदानं यथा मम ।।

यदा त्वां वानरः कश्चिद् विक्रमाद् वशमानयेत् ।
तदा त्वया हि विज्ञेयं रक्षसां भयमागतम् ।।

सीता निमित्तं राज्ञस्तु रावणस्य दुरात्मनः ।
रक्षसां चैव सर्वेषां विनाशः समुपागतः ।।

प्रविश्य शापोपहतां हरीश्वर पुरीं शुभां राक्षसमुख्यपालिताम् ।
यदृच्छया त्वं जनकात्मजां सतीं विमार्ग सर्वत्र गतो यथासुखम् ।।

स निर्जित्य पुरीं लङ्कां श्रेष्टां तां कामरूपिणीम् ।
विक्रमेण महातेजा हनूमान् कपिसत्तमः ।।

अद्वारेण महावीर्यः प्राकारमवपुप्लुवे ।
निशि लङ्कां महासत्त्वो विवेश कपिकुञ्जरः ।।

राघवार्थे चरन् श्रीमान् ददर्श च ननन्द च ।
भवनाद् भवनं गच्छन् ददर्श कपिकुञ्जरः ।।

शुश्राव जपतां तत्र मन्त्रान् रक्षो गृहेषु वै ।
स्वाध्याय निरतांश्चैव यातुधानान् ददर्श सः ।। 4.13

स हेमजाम्बूनदचक्रवालं महार्हमुक्तामणिभूषितान्तम् ।
परार्घ्यकालागरुचन्दनार्हं स रावणान्तःपुरमाविवेश ।।

ननन्द दृष्ट्वा स च तान् सुरूपान् नानागुणानात्मगुणानुरूपान् ।
विद्योतमानान् स च तान् सुरूपान् ददर्श कांश्चिच्च पुनर्विरूपान् ।।

न त्वेव सीतां परमाभिजातां पथि स्थिते राजकुले प्रजानाम् ।
लतां प्रफुल्लामिव साधु जातां ददर्श तन्वीं मनसाभिजाताम् ।।

सीतामपश्यन्मनुजेश्वरस्य रामस्य पत्नीं वदतां वरस्य ।
बभूव दुःखोपहतश्चिरस्य प्लवङ्गमो मन्द इवाचिरस्य ।।

गृहाद् गृहं राक्षसानामुद्यानानि च सर्वशः ।
वीक्षमाणोऽप्यसंत्रस्तः प्रासादांश्च चचार सः ।।

तेषु तेषु महार्हेषु भवनेषु महायशाः ।
तेषामृद्धिमतामृद्धिं ददर्श स महाकपिः ।।

ध्वजयष्टिभिराकीर्णं ददर्श भवनोत्तमम् ।
अनन्तरत्ननिचयं निधिजालं समन्ततः ।
धीरनिष्ठितकर्माङ्गं गृहं भूतपतेरिव ।।

संपरिक्रम्य हनूमान् रावणस्य निवेशनान् ।
अदृष्ट्वा जानकीं सीतामब्रवीद्वचनं कपिः ।।

लोलिता वसुधा सर्वा न च पश्यामि जानकीम् ।
इह सम्पातिना सीता रावणस्य निवेशने ।
आख्याता गृध्रराजेन न च सा दृश्यते न किम् ।। 13.5

हा राम लक्ष्मणेत्येवं हायोध्ये चेति मैथिली ।
विलप्य बहु वैदेही न्यस्तदेहा भविष्यति ।।

गत्वा तु यदि काकुत्स्थं वक्ष्यामि परुषं वचः ।
न दृष्टेति मया सीता ततस्त्यक्ष्यति जीवितम् ।।

घोरमारादनं मन्ये गते मयि भविष्यति ।
इक्ष्वाकुकुलनाशश्च नाशश्चैव वनौकसाम् ।।

एवं बहुविधं दुःखं मनसा धारयन् बहु ।
नाध्यगच्छत् तदा पारं शोकस्य कपिकुञ्जरः ।।
ध्यानशोकपरीतात्मा चिन्तयामास वानरः ।।

यावत् सीतां न पश्यामि रामपत्नीं यशस्विनीम् ।
तावदेतां पुरीं लङ्कां विचिनोमि पुनः पुनः ।।

स गत्वा मनसा पूर्वमशोकवनिकां शुभाम् ।
उत्तरं चिन्तयामास वानरो मारुतात्मजः ।।

संक्षिप्तोऽयं मयाऽऽत्मा च रामार्थे रावणस्य च ।
सिद्धिं दिशन्तु मे सर्वे देवाः सर्षिगणास्त्विह ।।

स मुहूर्तमिव ध्यात्वा मनसा चाधिगम्य ताम् ।
अवप्लुतो महातेजाः प्राकारं तस्य वेश्मनः ।।

सुपुष्पिताग्रान् रुचिरांस्तरुणाङ्कुरपल्लवान् ।
तामारुह्य महावेगः शिंशपां पर्णसंवृताम् ।।

इतो द्रक्ष्यामि वैदेहीं रामदर्शनलालसाम् ।
इतश्चेतश्च दुःखार्तां सम्पतन्तीं यदृच्छया ।। 14.42

इयं च नलिनी रम्या द्विजसङ्घनिषेविता ।
इमां सा राजमहिषी नूनमेष्यति जानकी ।।

यदि जीवति सा देवी ताराधिपनिभानना ।
आगमिष्यति सावश्यमिमां शीतजलां नदीम् ।।

एवं तु मत्वा हनुमान् महात्मा प्रतीक्षमाणो मनुजेन्द्रपत्नीम् ।
अवेक्षमाणश्च ददर्श सर्वं सुपुष्पिते पर्णघने निलीनः ।।

पुष्परत्नशतैश्चित्रं पश्चमं सागरं यथा ।
सर्वर्तुपुष्पैर्निचितं पादपैर्मधुगन्धिभिः ।।

प्रवालकृतसोपानं तप्तकाश्चनवेदिकम् ।
मुष्णन्तमिव चक्षूंषि द्योतमानमिव श्रिया ।।

निर्मलं प्रांशुभावत्वादुल्लिखन्तमिवाम्बरम् ।
ततो मलिनसंवीतां राक्षसीभिः समावृताम् ।।

उपवासकृशां दीनां निश्वसन्तीं पुनः पुनः ।
ददर्श शुक्लपक्षादौ चन्द्ररेखामिवामलाम् ।।

पीतेनैकेन संवीतां क्लिष्टेनोत्तमवाससा ।
सपङ्कामनलङ्कारां विपद्मामिव पद्मिनीम् ।।

अश्रुपूर्णमुखीं दीनां कृशामनशनेन च ।
शोककध्यानपरां दीनां नित्यं दुःखपरायणाम् ।।

एवं सीतां तथा दृष्ट्वा हृष्टः पवनसम्भवः ।
जगाम मनसा रामं प्रशशंस च तं प्रभुम् ।। 15.54

स मुहूर्तमिव ध्यात्वा बाष्पपर्याकुलेक्षणः ।
सीतामाश्रित्य तेजस्वी हनुमान् विललाप ह ।।

मान्या गुरुविनीतस्य लक्ष्मणस्य गुरुप्रिया ।
यदि सीता हि दुःखार्ता कालो हि दुरतिक्रमः ।।

तुल्यशीलवयोवृत्तां तुल्याभिजनलक्षणाम् ।
राघवोऽर्हति वैदेहीं तं चेयमसितेक्षणा ।।

सर्वान् भोगान् परित्यज्य भर्तृस्नेहबलात् कृता ।
अचिन्तयित्वा कष्टानि प्रविष्ट निर्जनं वनम् ।।

संतुष्टा फलमूलेन भर्तृशुश्रूषणा परा ।
या परां भजते प्रीतिं वनेऽपि भवने यथा ।।

इत्येवमर्थं कपिरन्ववेक्ष्य सीतेयमित्येव तु जातबुद्धिः ।
संश्रित्य तस्मिन् निषसाद वृक्षे बली हरीणामृषभस्तरस्वी ।।

स ददर्श ततः सीतां पूर्णचन्द्रनिभाननाम् ।
शोकभारैरिव न्यस्तां भारैर्नावमिवाम्भसि ।।

दिधृक्षमाणो वैदेहीं हनूमान् मारुतात्मजः ।
स ददर्शाविदूरस्था राक्षसीर्घोरदर्शनाः ।।

अशोकवनिकामध्ये शोकसागरमाप्लुताम् ।
ताभिः परिवृतां तत्र सग्रहामिव रोहिणीम् ।।

तां देवीं दीनवदनामदीनां भर्तृतेजसा ।
रक्षितां स्वेन शीलेन सीतामसितलोचनाम् ।। 17.27

नमस्कृत्वाऽथ रामाय लक्ष्मणाय च वीर्यवान् ।
सीतादर्शनसंहृष्टो हनुमान् संवृतोऽभवत् ।।

तथा विप्रेक्षमाणस्य वनं पुष्पितपादपम् ।
विचिन्वतश्च वैदेहीं किंचिच्छेषा निशाभवत् ।।

षडङ्गवेदविदुषां क्रतुप्रवरयाजिनाम् ।
शुश्राव ब्रह्मघोषान् स विरात्रे ब्रह्मरक्षसाम् ।।

अथ मङ्गलवादित्रैः शब्दैः श्रोत्रमनोहरैः ।
प्राबोध्यत महाबाहुर्दशग्रीवो महाबलः ।।

स च कामपराधीनः पतिस्तासां महाबलः ।
सीतासक्तमना मन्दो मन्दाञ्चितगतिर्बभौ ।।

तं पत्रविटपे लीनः पत्रपुष्पशतावृतः ।
समीपमुपसङ्क्रान्तं विज्ञातुमुपचक्रमे ।।

अवेक्षमाणस्तु तदा ददर्श कपिकुञ्जरः ।
रूपयौवनसम्पन्ना रावणस्य वरस्त्रियः ।।

ताभिः परिवृतो राजा सुरूपाभिर्महायशाः ।
तन्मृगद्विजसंघुष्टं प्रविष्टः प्रमदावनम् ।।

ततो दृष्ट्वैव वैदेही रावणं राक्षसाधिपम् ।
प्रावेपत वरारोहा प्रवाते कदली यथा ।।

ऊरुभ्यामुदरं छाद्य बाहुभ्यां च पयोधरौ ।
उपविष्टा विशालाक्षी रुदती वरवर्णिनी ।। 19.3

शुष्यन्तीं रुदतीमेकां ध्यानशोकपरायणाम् ।
दुःखस्यान्तमपश्यन्तीं रामां राममनुव्रताम् ।।

सुकुमारीं सुजाताङ्गीं रत्नगर्भगृहोचिताम् ।
तप्यमानामिवोष्णेन मृणालीमचिरोद्धृताम् ।।

उपवासेन शोकेन ध्यानेन च भयेन च ।
परिक्षीणां कृशां दीनामल्पाहारां तपोधनाम् ।।

समीक्षमाणां रुदतीमनिन्दितां सुपक्ष्मताम्रायतशुक्ललोचनाम् ।
अनुव्रतां राममतीव मैथिलीं प्रलोभयामास वधाय रावणः ।।

स तां परिवृतां दीनां निरानन्दां तपस्विनीम् ।
साकारैर्मधुरैर्वाक्यैर्न्यदर्शयत रावणः ।।

भव मैथिलि भार्या मे मोहमेतं विसर्जय ।
बह्वीनामुत्तमस्त्रीणां ममाग्रमहिषी भव ।।

तस्य तद्वचनं श्रुत्वा सीता रौद्रस्य रक्षसः ।
आर्ता दीनस्वरा दीनं प्रत्युवाच ततः शनैः ।।

तृणमन्तरतः कृत्वा प्रत्युवाच शुचिस्मिता ।
निवर्तय मनो मत्तः स्वजने प्रीयतां मनः ।।

साधु धर्ममवेक्षस्व साधु साधुव्रतं चर ।
यथा तव तथान्येषां रक्ष्या दारा निशाचर ।।

इह सन्तो न वा सन्ति सतो वा नानुवर्तसे ।
यथा हि विपरीता ते बुद्धिराचारवर्जिता ।। 21.9

उपधाय भुजं तस्य लोकनाथस्य सत्कृतम् ।
कथं नामोपधास्यामि भुजमन्यस्य कस्यचित् ।।

साधु रावण रामेण मां समानय दुःखिताम् ।
वने वासितया सार्धं करेष्वेव गजाधिपम् ।।

आश्रमं तत्तयोः शून्यं प्रविश्य नरसिंहयोः ।
गोचरं गतयोर्भ्रात्रोरपनीता त्वयाधम ।।

गिरिं कुबेरस्य गतोऽथवाऽऽलयम् सभां गतो वा वरुणस्य राज्ञः ।
असंशयं दाशरथेरवेक्ष्यसे महाद्रुमः कालहतोऽशनेरिव ।।

सीताया वचनं श्रुत्वा परुषं राक्षसेश्वरः ।
प्रत्युवाच ततः सीतां विप्रियं प्रियदर्शनाम् ।।

सन्नियच्छति मे क्रोधं त्वयि कामः समुत्थितः ।
द्रवतो मार्गमासाद्य हयानिव सुसारथिः ।।

द्वाभ्यामूर्ध्वं तु मासाभ्यां भर्तारं मामनिच्छतीम् ।
मम त्वां प्रातराशार्थे सूदाश्छेत्स्यन्ति खण्डशः ।।

तां भर्त्स्यमानां सम्प्रेक्ष्य राक्षसेन्द्रेण जानकीम् ।
देवगन्धर्वकन्यास्ता विषेदुर्विकृतेक्षणाः ।।

ताभिराश्वासिता सीता रावणं राक्षसाधिपम् ।
उवाचात्महितं वाक्यं वृत्तशौटीर्यगर्वितम् ।।

राक्षसाधम रामस्य भार्याममिततेजसः ।
उक्तवानसि यत्पापं क्व गतस्तस्य मोक्ष्यसे ।। 22.15

तस्य धर्मात्मनः पत्नी स्नुषा दशरथस्य च ।
कथं व्याहरतो मां ते न जिह्वा पाप शीर्यते ।।

नापहर्तुमहं शक्या तस्य रामस्य धीमतः ।
विधिस्तव वधार्थाय विहितो नात्र संशयः ।।

सीताया वचनं श्रुत्वा रावणो राक्षसाधिपः ।
विवृत्य नयने क्रूरे जानकीमन्ववैक्षत ।।
उपगम्य ततः क्षिप्रं राक्षसी धान्यमालिनी ।।

परिष्वज्य दशग्रीवं इदं वचनमब्रवीत् ।
विवर्णया कृपणया मानुष्या राक्षसेश्वर ।
नूनमस्यां महाराज न देवा भोगसत्तमान् ।।

इच्छती कामयानस्य प्रीतिर्भवति शोभना ।
एवमुक्तस्तु राक्षस्या समुत्क्षिप्तस्ततो बली ।
प्रहसन् मेघसंकाशो राक्षसः स न्यवर्तत ।।

स मैथिलीं धर्मपरामवस्थितां प्रवेपमानां परिभर्त्स्य रावणः ।
विहत्य सीतां मदनेन मोहितः स्वमेव वेश्म प्रविवेश रावणः ।।

ततः सीतामुपागम्य राक्षस्यः क्रोधमूर्च्छिताः ।
परं परुषया वाचा वैदेहीमिदमब्रुवन् ।।

तस्य त्वं राक्षसेन्द्रस्य भार्या भवितुमर्हसि ।
वीर्योत्सिक्तस्य शूरस्य संग्रामेष्वनिवर्तिनः ।।

साधु ते तत्त्वतो देवि कथितं साधु भामिनि ।
गृहाण सुस्मिते वाक्यमन्यथा न भविष्यसि ।। 24.19

ततः सीतां समस्तास्ता राक्षस्यो विकृताननाः ।
परुषं परुषानर्हामूचुस्तद्वाक्यमप्रियम् ।।

राक्षसीनां वचः श्रुत्वा सीता पद्मनिभेक्षणा ।
नेत्राभ्यामश्रुपूर्णाभ्यामिदं वचनमब्रवीत् ।।

दीनो वा राज्यहीनो वा यो मे भर्ता स मे गुरुः ।
तं नित्यमनुरक्तास्मि यथा सूर्यं सुवर्चला ।।

यथा शची महाभागा शक्रं समुपतिष्ठति ।
सावित्री सत्यवन्तं च कपिलं श्रीमती यथा ।।

तथाऽहमिक्ष्वाकुवरं रामं पतिमनुव्रता ।
सीताया वचनं श्रुत्वा राक्षस्याः क्रोधमूर्च्छिताः ।
भर्त्सयन्ति स्म परुषैर्वाक्यैः रावणचोदिताः ।।

ततस्तां शिंशपां सीता राक्षसीभिः समावृता ।
अभिगम्य विशालाक्षी तस्थौ शोकपरिप्लुता ।।

राक्षसीवशमापन्ना भर्त्स्यमाना च दारुणम् ।
चिन्तयन्ती सुदुःखार्ता नाहं जीवितुमुत्सहे ।।

इहस्थां मां न जानीते शङ्के लक्ष्मणपूर्वजः ।
जानन्नपि स तेजस्वी धर्षणां मर्षयिष्यति ।।

हृतेति मां योऽधिगत्य राघवाय निवेदयत् ।
गृध्रराजोऽपि स रणे रावणेन निपातितः ।।

अहं तु राम त्वयि जातकामा चिरं विनाशाय निबद्धभावा ।
मोघं चरित्वाथ तपोव्रतं च त्यक्ष्यामि धिग्जीवितमल्पभाग्याम् ।। 28.15

उपस्थिता सा मृदुसर्वगात्री शाखां गृहीत्वा च नगस्य तस्य ।
तस्यास्तु रामं परिचिन्तयन्त्या रामानुजं स्वं च कुलं शुभाङ्ग्या ः ।।

तस्या विशोकानि तदा बहूनि धैर्यार्जितानि प्रवराणि लोके ।
प्रादुर्निमित्तानि तदा बभूवुः पुरापि सिद्धान्युपलक्षितानि ।।

हनुमानपि विक्रान्तः सर्वं शुश्राव तत्त्वतः ।
ततो बहुविधां चिन्तां चिन्तयामास वानरः ।।

अनेन रात्रिशेषेण यदि नाश्वास्यते मया ।
सर्वथा नास्ति संदेहः परित्यक्ष्यति जीवितम् ।।

रामस्तु यदि पृच्छेन्मां किं मां सीताऽब्रवीद् वचः ।
किमहं तं प्रतिब्रूयामसम्भाष्य सुमध्यमाम् ।।

यदि वाचं प्रदास्यामि द्विजातिरिव संस्कृताम् ।
रावणं मन्यमाना मां सीता भीता भविष्यति ।। XXX.18

अवश्यमेव वक्तव्यं मानुषं वाक्यमर्थवत् ।
मया सान्त्वयितुं शक्या नान्यथेयमनिन्दिता ।।

श्रावयिष्यामि सर्वाणि मधुरां प्रब्रुवन् गिरम् ।
श्रद्धास्यति यथा सीता तथा सर्वं समादधे ।।

एवं बहुविधां चिन्तां चिन्तयित्वा महामतिः ।
संश्रवे मधुरं वाक्यं वैदेह्या व्याजहार ह ।।

राजा दशरथो नाम रथकुञ्जरवाजिमान् ।
पुण्यशीलो महाकीर्तिरिक्ष्वाकूणां महायशाः ।। 31.2

तस्य पुत्रः प्रियो ज्येष्टस्ताराधिपनिभाननः ।
रामो नाम विशेषज्ञः श्रेष्टः सर्वधनुष्मताम् ।।

रक्षिता स्वस्य वृत्तस्य स्वजनस्यापि रक्षिता ।
रक्षिता जीवलोकस्य धर्मस्य च परन्तपः ।।

तस्य सत्याभिसन्धस्य वृद्धस्य वचनात् पितुः ।
सभार्यः सह च भ्रात्रा वीरः प्रव्राजितो वनम् ।।

तेन तत्र महारण्ये मृगयां परिधावता ।
राक्षसा निहताः शूरा बहवः कामरूपिणः ।।

जनस्थानवधं श्रुत्वा निहतौ खरदूषणौ ।
ततस्त्वमर्षापहृता जानकी रावणेन तु ।।

वञ्चयित्वा वने रामं मृगरूपेण मायया ।
स मार्गमाणस्तां देवीं रामः सीतामनिन्दिताम् ।।

आससाद वने मित्रं सुग्रीवं नाम वानरम् ।
ततः स वालिनं हत्वा रामः परपुरञ्जयः ।।

अयच्छत् कपिराज्यं तु सुग्रीवाय महात्मने ।
सुग्रीवेणाभिसंदिष्टा हरयः कामरूपिणः ।।

दिक्षु सर्वासु तां देवीं विचिन्वन्तः सहस्रशः ।
अहं सम्पातिवचनाच्छतयोजनमायतम् ।।

तस्या हेतोर्विशालाक्ष्याः समुद्रं वेगवान् प्लुतः ।
यथारूपां यथावर्णां यथालक्ष्मवतीं च ताम् ।। 31.15

अश्रौषं राघवस्याहं सेयमासादिता मया ।
विररामैवमुक्त्वा स वाचं वानरपुङ्गवः ।।

जानकी चापि तच्छ्रुत्वा विस्मयं परमं गता ।
ततः सा वक्रकेशान्ता सुकेशी केशसंवृतम् ।
उन्नम्य वदनं भीरुः शिंशपामन्ववैक्षत ।।

निशम्य सीता वचनं कपेश्च दिशश्च सर्वाः प्रदिशश्च वीक्ष्य ।
स्वयं प्रहर्षं परमं जगाम सर्वात्मना राममनुस्मरन्ती ।।

सा ददर्श कपिं तत्र प्रश्रितं प्रियवादिनम् ।
फुल्लाशोकोत्कराभासं तप्तचामीकरेक्षणम् ।।

सोऽवतीर्य द्रुमात् तस्माद् विद्रुमप्रतिमाननः।
विनीतवेषः कृपणः प्रणिपत्योपसृत्य च ।।

तामब्रवीन्महातेजा हनुमान्मारुतात्मजः ।
शिरस्यञ्जलिमादाय सीतां मधुरया गिरा ।।

का नु पद्मपलाशाक्षि क्लिष्टकौशेयवासिनि ।
द्रुमस्य शाखामालम्ब्य तिष्ठसि त्वमनिन्दिते ।।

किमर्थं तव नेत्राभ्यां वारि स्रवति शोकजम् ।
पुण्डरीकपलाशाभ्यां विप्रकीर्णमिवोदकम् ।।

व्यञ्जनानि हि ते यानि लक्षणानि च लक्षये ।
महिषी भूमिपालस्य राजकन्या च मे मता ।।

रावणेन जनस्थानाद् बलात् प्रमथिता यदि ।
सीता त्वमसि भद्रं ते तन्ममाचक्ष्व पृच्छतः ।। 33.12

सा तस्य वचनं श्रुत्वा रामकीर्तनहर्षिता ।
उवाच वाक्यं वैदेही हनूमन्तं द्रुमाश्रितम् ।।

पृथिव्यां राजसिंहानां मुख्यस्य विदितात्मनः ।
स्नुषा दशरथस्याहं शत्रुसैन्यप्रणाशिनः ।।

दुहिता जनकस्याहं वैदेहस्य महात्मनः ।
सीतेति नाम्ना चोक्ताहं भार्या रामस्य धीमतः ।।

ते वयं भर्तुरादेशं बहुमान्य दृढव्रताः ।
प्रविष्टाः स्म पुरादृष्टं वनं गम्भीरदर्शनम् ।।

वसतो दण्डकारण्ये तस्याहममितौजसः ।
रक्षसापहृता भार्या रावणेन दुरात्मना ।।

द्वौ मासौ तेन मे कालो जीवितानुग्रहः कृतः ।
ऊर्ध्वं द्वाभ्यां तु मासाभ्यां ततस्त्यक्ष्यामि जीवितम् ।।

तस्यास्तद्वचनं श्रुत्वा हनूमान् हरिपुङ्गवः ।
दुःखाद् दुःखाभिभूतायाः सान्त्वमुत्तरमब्रवीत् ।।

अहं रामस्य सन्देशाद् देवि दूतस्तवागतः ।
वैदेहि कुशली रामः स त्वां कौशलमब्रवीत् ।।

लक्ष्मणश्च महातेजा भर्तुस्तेऽनुचरः प्रियः ।
कृतवाञ्छोकसन्तप्तः शिरसा तेऽभिवादनम् ।।

राजा वानरमुख्यानां स त्वां कौशलमब्रवीत् ।
नित्यं स्मरति ते रामः ससुग्रीवः सलक्ष्मणः ।। 34.36

त्वां द्रष्टुमुपयातोऽहं समाश्रित्य पराक्रमम् ।
तां तु रामकथां श्रुत्वा वैदेही वानरर्षभात् ।
उवाच वचनं सान्त्वमिदं मधुरया गिरा ॥

यानि रामस्य चिह्नानि लक्ष्मणस्य च वानर ।
तानि भूयः समाचक्ष्व न मां शोकः समाविशेत् ॥

एवमुक्तस्तु वैदेह्या हनूमान् मारुतात्मजः ।
ततो रामं यथातत्त्वमाख्यातुमुपचक्रमे ॥

रामः कमलपत्राक्षः पूर्णचन्द्रनिभाननः ।
रूपदाक्षिण्यसम्पन्नः प्रसूतो जनकात्मजे ॥

तेजसाऽऽदित्यसङ्काशः क्षमया पृथिवीसमः ।
बृहस्पतिसमो बुद्ध्या यशसा वासवोपमः ॥

राजनीत्यां विनीतश्च ब्राह्मणानामुपासकः ।
ज्ञानवान् शीलसम्पन्नो विनीतश्च परन्तपः ॥

भ्राता चास्य च वैमात्रः सौमित्रिरमितप्रभः ।
अनुरागेण रूपेण गुणैश्चापि तथाविधः ॥

स सुवर्णच्छविः श्रीमान् रामः श्यामो महायशाः ।
तावुभौ नरशार्दूलौ त्वद्दर्शनकृतोत्सवौ ॥

विचिन्वन्तौ महीं कृत्स्नामस्माभिः सह सङ्गतौ ।
त्वामेव मार्गमाणौ तौ विचरन्तौ वसुन्धराम् ॥

भ्रातुर्भयार्तमासीनं सुग्रीवं प्रियदर्शनम् ।
वयं च हरिराजं तं सुग्रीवं सत्यसङ्गरम् ॥ 35.26



वानरोऽहं महाभागे दूतो रामस्य धीमतः ।
रामनामाङ्कितं चेदं पश्य देव्यङ्गुलीयकम्

परिचर्यामहे राज्यात् पूर्वजेनावरोपितम् ।
ततस्तौ चीरवसनौ धनुः प्रवरपाणिनौ ।।
निवेदितौ च तत्त्वेन सुग्रीवाय महात्मने ।।

यान्याभरणजालानि पातितानि महीतले ।
तानि सर्वाणि रामाय आनीय हरियूथपाः ।।

संहृष्टा दर्शयामासुर्गतिं तु न विदुस्तव ।
तानि रामाय दत्तानि मयैवोपहृतानि च ।।

तानि दृष्ट्वा महार्हाणि दर्शयित्वा मुहुर्मुहुः ।
राघवः सहसौमित्रिः सुग्रीवे संन्यवेशयत् ।।

स तवादर्शनादर्थे राघवः परितप्यते ।
महता ज्वलता नित्यमग्निनेवाग्निपर्वतः ।।

अभिभाषस्व मां देवि दूतो दाशरथेरहम् ।
तन्मां रामकृतोद्योगं त्वन्निमित्तमिहागतम् ।।

वानरोऽहं महाभागे दूतो रामस्य धीमतः ।
रामनामाङ्कितं चेदं पश्य देव्यङ्गुलीयकम् ।।

प्रत्ययार्थं तवानीतं तेन दत्तं महात्मना ।
समाश्वसिहि भद्रं ते क्षीणदुःखफला ह्यसि ।।

गृहीत्वा प्रेक्षमाणा सा भर्तुः करविभूषितम् ।
भर्तारमिव सम्प्राप्तं जानकी मुदिताऽभवत् ।।

ततः सा ह्रीमती बाला भर्तुः सन्देशहर्षिता ।
परितुष्टा प्रियं कृत्वा प्रशशंस महाकपिम् ।। 36.6

विक्रान्तस्त्वं समर्थस्त्वं प्राज्ञस्त्वं वानरोत्तम ।
येनेदं राक्षसपदं त्वयैकेन प्रघर्षितम् ।।

कुशली यदि काकुत्स्थः किं न सागरमेखलाम् ।
महीं दहति कोपेन युगान्ताग्निरिवोत्थितः ।।

रौद्रेण कच्चिदस्त्रेण रामेण निहतं रणे ।
द्रक्ष्याम्यल्पेन कालेन रावणं ससुहृज्जनम् ।।

इतीव देवीवचनं महार्थं तं वानरेन्द्रं मधुरार्थमुक्त्वा ।
श्रोतुं पुनस्तस्य वचोऽभिरामं रामार्थयुक्तं विरराम रामा ।।

सीतायाः वचनं श्रुत्वा मारुतिः भीमविक्रमः ।
शिरस्यञ्जालिमादाय वाक्यमुत्तरमब्रवीत् ।।

न त्वामिहस्थां जानीते रामः कमललोचनः ।
तेन त्वां नानयत्याशु शचीमिव पुरन्दरः ।।

क्षिप्रं द्रक्ष्यसि वैदेहि रामं प्रस्रवणे गिरौ ।
शतक्रतुमिवासीनं नागपृष्टस्य मूर्धनि ।।

अनिद्रः सततं रामः सुप्तोऽपि च नरोत्तमः ।
सीतेति मधुरां वाणीं व्याहरन् प्रतिबुध्यते ।।

सा रामसंकीर्तनवीतशोका रामस्य शोकेन समानशोका ।
शरन्मुखेनाम्बुतशेषचन्द्रा निशेव वैदेहसुता बभूव ।।

सा सीता वचनं श्रुत्वा पूर्णचन्द्रनिभानना ।
हनूमन्तमुवाचेदं धर्मार्थसहितं वचः ।। 37.1

शोकस्यास्य कथं पारं राघवोऽधिगमिष्यति ।
प्लवमानः परिक्रान्तो हतनौः सागरे यथा ।।

स वाच्यः सन्त्वरस्वेति यावदेव न पूर्यते ।
अयं संवत्सरः कालस्तावद्धि मम जीवितम् ।।

मम प्रतिप्रदानं हि रावणस्य न रोचते ।
रावणं मार्गते संख्ये मृत्युः कालवशं गतम् ।।

आशंसेयं हरिश्रेष्ठ क्षिप्रं मां प्राप्स्यते पतिः ।
अन्तरात्मा हि मे शुद्धस्तस्मिंश्च बहवो गुणाः ।।

इति सञ्जल्पमानां तां रामार्थे शोककर्शिताम् ।
अश्रुसंपूर्णवदनामुवाच हनुमान् कपिः ।।

अथवा मोचयिष्यामि त्वामद्यैव सराक्षसात् ।
अस्माद् दुःखादुपारोह मम पृष्टमनिन्दिते ।।

द्रक्ष्यस्यद्यैव वैदेहि राघवं सहलक्ष्मणम् ।
व्यवसायसमायुक्तं विष्णुं दैत्यवधे यथा ।।

मैथिली तु हरिश्रेष्ठात् श्रुत्वा वचनमद्भुतम् ।
हर्षविस्मितसर्वाङ्गी हनुमन्तमथाब्रवीत् ।।

कथं चाल्पशरीरस्त्वं मामितो नेतुमिच्छसि ।
सकाशं मानवेन्द्रस्य भर्तुर्मे प्लवगर्षभ ।।

अयुक्तं तु कपिश्रेष्ठ मया गन्तुं त्वया सह ।
वायुवेगसवेगस्य वेगो मां मोहयेत् तव ।। 37.45

कामं त्वमपि पर्याप्तो निहन्तुं सर्वराक्षसान् ।
राघवस्य यशो हीयेत् त्वया शस्तैस्तु राक्षसैः ।।

मयि जीवितमायत्तं राघवस्यामितौजसः ।
भ्रातॄणां च महाबाहो तव राजकुलस्य च ।।

भर्तृभक्तिं पुरस्कृत्य रामादन्यस्य वानर ।
नाहं स्प्रष्टुं स्वतो गात्रमिच्छेयं वानरोत्तम ।।

यदहं गात्रसंस्पर्शं रावणस्य गता बलात् ।
अनीशा किं करिष्यामि विनाथा विवशा सती ।।

यदि रामो दशग्रीवमिह हत्वा सराक्षसम् ।
मामितो गृह्य गच्छेत तत् तस्य सदृशं भवेत् ।।

स मे कपिश्रेष्ठ सलक्ष्मणं प्रियं सयूथपं क्षिप्रमिहोपपादय ।
चिराय रामं प्रति शोककर्शितां कुरुष्व मां वानरवीर हर्षिताम् ।।

ततः स कपिशार्दूलस्तेन वाक्येन तोषितः ।
सीतामुवाच तच्छ्रुत्वा वाक्यं वाक्यविशारदः ।।

युक्तरूपं त्वया देवि भाषितं शुभदर्शने ।
सदृशं स्त्रीस्वभावस्य साध्वीनां विनयस्य च ।।

द्वितीयं कारणं यच्च ब्रवीषि विनयान्विते ।
रामादन्यस्य नार्हामि संसर्गमिति जानकि ।।

एतत् ते देवि सदृशं पत्न्यास्तस्य महात्मनः ।
का ह्यन्या त्वामृते देवि ब्रूयाद् वचनमीदृशम् ।। 38.5

इच्छामि त्वां समानेतुमद्यैव रघुनन्दिना ।
गुरुस्नेहेन भक्त्या च नान्यथा तदुदाहृतम् ।।

यदि नोत्सहसे यातुं मया सार्धमनिन्दिते ।
अभिज्ञानं प्रयच्छ त्वं जानीयाद् राघवो हि यत् ।।

एवमुक्ता हनुमता सीता सुरसुतोपमा ।
उवाच वचनं मन्दं बाष्पप्रग्रथिताक्षरम् ।।

मत्कृते काकमात्रेऽपि ब्रह्मास्त्रं समुदीरितम् ।
कस्माद् यो माहरत् त्वत्तः क्षमसे तं महीपते ।।

इदं ब्रूयाश्च मे नाथं शूरं रामं पुनः पुनः ।
जीवितं धारयिष्यामि मासं दशरथात्मज ।।

ऊर्ध्वं मासान्न जीवेयं सत्येनाहं ब्रवीमि ते ।
रावणेनोपरुद्धां मां निकृत्या पापकर्मणा ।
त्रातुमर्हसि वीर त्वं पातालादिव कौशिकीम् ।।

ततो वस्त्रगतं मुक्त्वा दिव्यं चूडामणिं शुभम् ।
प्रदेयो राघवायेति सीता हनुमते ददौ ।।

मणिरत्नं कपिवरः प्रतिगृह्याभिवाद्य च ।
सीतां प्रदक्षिणं कृत्वा प्रणतः पार्श्वतः स्थितः ।।

शिरसा वन्द्य वैदेहीं गमनायोपचक्रमे ।
ज्ञात्वा सम्प्रस्थितं देवी वानरं पवनात्मजम् ।।

बाष्पगद्गदया वाचा मैथिली वाक्यमब्रवीत् ।
हनूमन् कुशलं ब्रूयाः सहितौ रामलक्ष्मणौ ।। 39.8

यथा च स महाबाहुर्मां तारयति राघवः ।
अस्माद् दुःखाम्बुसंरोधात् त्वं समाधातुमर्हसि ॥
निशम्य हनुमान् शेषं वाक्यमुत्तरमब्रवीत् ॥

देवि हर्यृक्षसैन्यानामीश्वरः प्लवतां वरः ।
सुग्रीवः सत्यसम्पन्नस्तवार्थे कृतनिश्चयः ॥

मद्विशिष्टाश्च तुल्याश्च सन्ति तत्र वनौकसः ।
मत्तः प्रत्यवरः कश्चिन्नास्ति सुग्रीवसन्निधौ ॥

मम पृष्ठगतौ तौ च चन्द्रसूर्याविवोदितौ ।
त्वत्सकाशं महासङ्घौ नृसिंहावगमिष्यतः ॥

तदाश्वसिहि भद्रं ते भव त्वं कालकाङ्क्षिणि ।
न चिराद् द्रक्ष्यसे रामं प्रज्वलन्तमिवानलम् ॥

स राजपुत्र्या प्रतिवेदितार्थः कपिः कृतार्थः परिहृष्टचेताः ।
तदल्पशेषं प्रसमीक्ष्य कार्यं दिशं ह्युदीचीं मनसा जगाम ॥

इहैव तावत्कृतनिश्चयो ह्यहं व्रजेयमद्य प्लवगेश्वरालयम् ।
परात्मसम्मर्दविशेषतत्त्ववित् ततः कृतं स्यान्मम भर्तृशासनम् ॥

कथं नु खल्वद्य भवेत् सुखागतं प्रसह्य युद्धं मम राक्षसैः सह ।
तथैव खल्वात्मबलं च सारवत् समानयेन्मां च रणे दशाननः ॥

ततः समासाद्य रणे दशाननं समन्त्रिवर्गं सबलं सयायिनम् ।
हृदि स्थितं तस्य मतं बलं च सुखेन मत्वाहमितः पुनर्व्रजे ॥

इदं विध्वंसयिष्यामि शुष्कं वनमिवानलः ।
अस्मिन् भग्ने ततः कोपं करिष्यति स रावणः ॥ 41.11

ततो मारुतवत् क्रुद्धो मारुतिर्भीमविक्रमः ।
ऊरुवेगेन महता द्रुमान् क्षेप्तुमथारभत् ।।

ततो गतायां निद्रायां राक्षस्यो विकृताननाः ।
तद्वनं ददृशुर्भग्नं तं च वीरं महाकपिम् ।।

स ता दृष्ट्वा महाबाहुर्महासत्त्वो महाबलः ।
चकार सुमहद्रूपं राक्षसीनां भयावहम् ।।

रावणस्य समीपे तु राक्षस्यो विकृताननाः ।
विरूपं वानरं भीमं रावणाय न्यवेदिषुः ।।

अशोकवनिकामध्ये राजन् भीमवपुः कपिः ।
सीतया कृतसंवादस्तिष्ठत्यमितविक्रमः ।।

तस्योग्ररूपस्योग्रं त्वं दण्डमाज्ञातुमर्हसि ।
सीता सम्भाषिता येन वनं तेन विनाशितम् ।।

राक्षसीनां वचःश्रुत्वा रावणो राक्षसेश्वरः ।
चिताग्निरिव जज्वाल कोपसंवर्तितेक्षणः ।।

आत्मनः सदृशान् वीरान् किंकरान्नाम राक्षसान् ।
व्यादिदेश महातेजा निग्रहार्थं हनूमतः ।।

मुद्गरैः पट्टिशैः शूलैः प्रासतोमरपाणयः ।
परिवार्य हनूमन्तं सहसा तस्थुरग्रतः ।।

स तं परिघमादाय जघान रजनीचरान् ।
स पन्नगमिवादाय स्फुरन्तं विनतासुतः ।। 42.40

चैत्यप्रासादमुत्प्लुत्य मेरुशृङ्गमिवोन्नतम् ।
आरुरोह हरिश्रेष्ठो हनूमान् मारुतात्मजः ॥

सन्दिष्टो राक्षसेन्द्रेण प्रहस्तस्य सुतो बली ।
जम्बुमाली महादंष्ट्रो निर्जगाम धनुर्धरः ॥

अतिवेगोऽतिवेगेन भ्रामयित्वा बलोत्कटः ।
परिघं पातयामास जम्बुमालेर्महोरसि ॥

स हतस्तरसा तेन जम्बुमाली महारथः ।
पपात निहतो भूमौ चूर्णिताङ्ग इव द्रुमः ॥

ततस्ते राक्षसेन्द्रेण चोदिता मन्त्रिणः सुताः ।
निर्ययुर्भवनात् तस्मात् सप्त सप्तार्चिवर्चसः ॥

स कृत्वा निनदं घोरं त्रासंयस्तां महाचमूम् ।
चकार हनुमान् वेगं तेषु रक्षःसु वीर्यवान् ॥

तलेनाभिहनत् कांश्चित् पादैः कांश्चित् परन्तपः ।
मुष्टिभिश्चाहनत् कांश्चिन्नखैः कांश्चिद् व्यदारयत् ॥

हतान् मन्त्रिसुतान् बुद्ध्वा वानरेण महात्मना ।
रावणः संवृताकारश्चकार मतिमुत्तमाम् ॥

सन्दिदेश दशग्रीवो वीरान् नय विशारदान् ।
हनुमद् ग्रहणेऽव्यग्रान् वायुवेगसमान् सुधि ॥

सेनापतीन् पञ्च स तु प्रमापितान् हनूमता सानुचरान् सवाहनान् ।
निशम्या राजा समरोद्धतोन्मुखं कुमारमक्षं प्रसमैक्षताक्षम् ॥ 47.1

निहत्य तं वज्रिसुतोपमं रणे कुमारमक्षं क्षतजोपमेक्षणम् ।
तदेव वीरोऽभिजगाम तोरणं कृतक्षणः काल इव प्रजाक्षये ।।

ततस्तु रक्षोऽधिपतिर्महात्मा हनूमताक्षे निहते कुमारे ।
मनस्समाधाय स देवकल्पं समादिदेशेन्द्रजितं सरोषः ।।

तमेवमर्थं प्रसमीक्ष्य सम्यक् स्वकर्मसाम्याद्धि समाहितात्मा ।
स्मरंश्च दिव्यं धनुषोऽस्य वीर्यं व्रजाक्षतं कर्म समारभस्व ।।

ततः पितुस्तद्वचनं निशम्य प्रदक्षिणं दक्षसुतप्रभावः ।
चकार भर्तारमतित्वरेण रणाय वीरः प्रतिपन्नबुद्धिः ।।

स रथी धन्विनां श्रेष्टः शस्त्रज्ञोऽस्त्रविदां वरः ।
रथेनाभिययौ क्षिप्रं हनूमान् यत्र सोऽभवत् ।।

स तस्य वीरस्य महारथस्य धनुष्मतः संयति सम्मतस्य ।
शरप्रवेगं व्यहनत् प्रवृद्धश्चचार मार्गे पितुरप्रमेयः ।।

तावुभौ वेगसम्पन्नौ रणकर्मविशारदौ ।
सर्वभूतमनोग्राहि चक्रतुर्युद्धमुत्तमम् ।।

ततो मतिं राक्षसराजसूनुश्चकार तस्मिन् हरिवीरमुख्ये ।
अवध्यतां तस्य कपेः समीक्ष्य कथं निगच्छेदिति निग्रहार्थम् ।।

ततःपैतामहं वीरः सोऽस्त्रमस्त्रविदां वरः ।
सन्दधे सुमहातेजास्तं हरिप्रवरं प्रति ।।

अवध्योऽयमिति ज्ञात्वा तमस्त्रेणास्त्रतत्त्ववित् ।
निजग्राह महाबाहुं मारुतात्मजमिन्द्रजित् ।। 48.37

स वीर्यमस्त्रस्य कपिर्विचार्य पितामहानुग्रहमात्मनश्च ।
विमोक्षशक्तिं परिचिन्तयित्वा पितामहाज्ञामनुवर्तते स्म।।

ततस्ते राक्षसा दृष्ट्वा विनिश्चेष्टमरिन्दमम् ।
बबन्धुः शणवल्कैश्च द्रुमचीरैश्च संहतैः ।।

स बद्धस्तेन वल्केन विमुक्तोऽस्त्रेण वीर्यवान् ।
अस्त्रबन्धः स चान्यं हि न बन्धमनुवर्तते ।।

तं मत्तमिव मातङ्गं बद्धं कपिवरोत्तमम् ।
राक्षसा राक्षसेन्द्राय रावणाय न्यवेदयन् ।।

स रोषसंवर्तितताम्रदृष्टिर्दशाननस्तं कपिमन्ववेक्ष्य ।
अथोपविष्टान् कुलशीलवृद्धान् समादिशत् तं प्रति मुख्यमन्त्रीन् ।।

यथाक्रमं तैः स कपिश्च पृष्टः कार्यार्थमर्थस्य च मूलमादौ ।
निवेदयामास हरीश्वरस्य दूतः सकाशादहमागतोऽस्मि ।।

ततः स कर्मणा तस्य विस्मितो भीमविक्रमः ।
हनूमान् क्रोधताम्राक्षो रक्षोऽधिपमवैक्षत ।।

भ्राजमानं ततो दृष्ट्वा हनुमान् राक्षसेश्वरम् ।
मनसा चिन्तयामास तेजसा तस्य मोहितः ।।

यद्यधर्मो न बलवान् स्यादयं राक्षसेश्वरः ।
स्यादयं सुरलोकस्य सशक्रस्यापि रक्षिता ।।

तमुद्वीक्ष्य महाबाहुः पिङ्गाक्षं पुरतःस्थितम् ।
रोषेण महताऽऽविष्टो रावणो लोकरावणः ।। 50.1

शङ्काहतात्मा दध्यौ स कपीन्द्रं तेजसावृतम् ।
किमेष भगवान् नन्दी भवेत् साक्षादिहागतः ।।

येन शप्तोऽस्मि कैलासे मया प्रहसिते पुरे ।
सोऽयं वानरमूर्तिः स्यात्किंस्विद् बाणोऽपि वाऽसुरः ।।

स राजा रोषताम्राक्षः प्रहस्तं मन्त्रिसत्तमम् ।
कालयुक्तमुवाचेदं वचो विपुलमर्थवत् ।।

दुरात्मा पृच्छ्यतामेष कुतः किं वाऽस्य कारणम् ।
वनभङ्गे च कोऽस्यार्थो राक्षसानां च तर्जने ।।

रावणस्य वचः श्रुत्वा प्रहस्तो वाक्यमब्रवीत् ।
समाश्वसिहि भद्रं ते न भीः कार्या त्वया कपे: ।।

तत्त्वतः कथयस्वाद्य ततो वानर मोक्ष्यसे ।
अनृतं वदतश्चापि दुर्लभं तव जीवितम् ।।

अथवा यन्निमित्तस्ते प्रवेशो रावणालये ।
एवमुक्तो हरिवरस्तदा रक्षोगणेश्वरम् ।।

अब्रवीन्नास्मि शक्रस्य यमस्य वरुणस्य च ।
धनदेन न मे सख्यं विष्णुना नास्मि चोदितः ।।

वनं राक्षसराजस्य दर्शनार्थे विनाशितम् ।
ततस्ते राक्षसाः प्राप्ता बलिनो युद्धकाङ्क्षिणः ।।

रक्षणार्थं च देहस्य प्रतियुद्धा मया रणे ।
अस्त्रपाशैर्न शक्योऽहं बद्धुं देवासुरैरपि ।। 50.16

पितामहादेष वरो ममापि हि समागतः ।
राजानं द्रष्टुकामेन मयाऽस्त्रमनुवर्तितम् ।।

दूतोऽहमिति विज्ञाय राघवस्यामितौजसः ।
श्रूयतामेव वचनं मम पथ्यमिदं प्रभो ।।

अहं तु हनुमन्नाम मारुतस्यौरसःसुतः ।
सीतायास्तु कृते तूर्णं शतयोजनमायतम् ।।

समुद्रं लङ्घयित्वैव त्वां दिधृक्षुरिहागतः ।
भ्रमतः च मया दृष्टा गृहे ते जनकात्मजा ।।

सत्यं राक्षसराजेन्द्र शृणुष्व वचनं मम ।
रामदासस्य दूतस्य वानरस्य विशेषतः ।।

सर्वांल्लोकान् सुसंहृत्य स भूतान् सचराचरान् ।
पुनरेव तथा स्रष्टुं शक्तौ रामो महायशाः ।।

स सौष्ठवोपेतमदीनवादिनः कपेर्निशम्याप्रतिमोऽप्रियं वचः ।
दशाननः कोपनिवृत्तलोचनः समादिशत् तस्य वधं महाकपेः ।।

वधे तस्य समाज्ञप्ते रावणेन दुरात्मना ।
निवेदितवतो दौत्यं नानुमेने विभीषणः ।।

निश्चितार्थस्ततः साम्ना पूज्यं शत्रुजिदग्रजम् ।
उवाच हितमत्यर्थं वाक्यं वाक्यविशारदः ।।

राजन् धर्मविरुद्धं च लोकवृत्तेश्च गर्हितम् ।
तव चासदृशं वीर कपेरस्य प्रमापणम् ।। 52.6

तस्य तद्वचनं श्रुत्वा दशग्रीवो महात्मनः ।
देशकालहितं वाक्यं भ्रातुरुत्तरमब्रवीत् ।।

कपीनां किल लाङ्गूलमिष्टं भवति भूषणम् ।
तदस्य दीप्यतां शीघ्रं तेन दग्धेन गच्छतु ।।

आज्ञापयद् राक्षसेन्द्रः पुरं सर्वं सचत्वरम् ।
लाङ्गूलेन प्रदीप्तेन रक्षोभिः परिणीयताम् ।।

तस्य तद्वचनं श्रुत्वा राक्षसाः कोपकर्कशाः ।
वेष्टन्ते तस्य लाङ्गूलं जीर्णैः कार्पासिकैः पटैः ।।

सन्दीप्यमानां वित्रस्तां त्रस्तरक्षोगणां पुरीम् ।
अवेक्ष्य हनुमान् लङ्कां चिन्तयामास वानरः ।।

राक्षस्यस्तां विरूपाक्ष्यः शंसुर्देव्यास्तदप्रियम् ।
यस्त्वया कृतसंवादः सीते ताम्रमुखःकपिः ।।

लाङ्गूलेन प्रदीप्तेन स एव परिणीयते ।
श्रुत्वा तद्वचनं क्रूरं आत्मापहरणोपमम् ।।

वैदेही शोकसंतप्ता हुताशनमुपागमत् ।
मङ्गलाभिमुखी तस्य सा तदासीन्महाकपेः ।।

उपतस्थे विशालाक्षी प्रयता हव्यवाहनम् ।
यद्यस्ति पतिशुश्रूषा यद्यस्ति चरितं तपः ।।

यदि मां वृत्तसम्पन्नां तत्समागमलालसाम् ।
स विजानाति धर्मात्मा शीतो भव हनूमतः ।। 53.29

दह्यमाने च लाङ्गूले चिन्तयामास वानरः ।
प्रदीप्तोऽग्निरियं कस्मान्न मां दहति सर्वतः ।।

अथवा तदिदं व्यक्तं यद् दृष्टं प्लवता मया ।
रामप्रभावादाश्चर्यं पर्वतः सरितां पतौ ।।

सीतायाश्चानृशंस्येन तेजसा राघवस्य च ।
पितुश्च मम सख्येन न मां दहति पावकः ।।

वीक्षमाणश्च ददृशे परिघं तोरणाश्रितम् ।
स तं गृह्य महाबाहुः कालायसपरिष्कृतम् ।
रक्षिणस्तान् पुनः सर्वान् सूदयामास मारुतिः ।।

वर्जयित्वा महातेजा विभीषणगृहं प्रति ।
क्रममाणः क्रमेणैव ददाह हरिपुङ्गवः ।।

हनूमता वेगवता वानरेण महात्मना ।
लङ्कापुरं प्रदग्धं तद् रुद्रेण त्रिपुरं यथा ।।

ततस्तु लङ्का सहसा प्रदग्धा सराक्षसा साश्वरथा सनागा ।
सपक्षिसङ्घा समृगा सवृक्षा रुरोद दीना तुमुलं सशब्दम् ।।

स राक्षसांस्तान् सुबहूंश्च हत्वा वनं च भङ्क्त्वा बहुपादपं तत् ।
विसृज्य रक्षोभवनेषु चाग्निं जगाम रामं मनसा महात्मा ।।

लङ्कां समस्तां सम्पीड्य लाङ्गूलाग्निं महाकपिः ।
निर्वापयामास तदा समुद्रे हरिपुङ्गवः ।।

संदीप्यमानां वित्रस्तां त्रस्तरक्षोगणां पुरीम् ।
अवेक्ष्य हनुमॉल्लङ्कां चिन्तयामास वानरः ।। 55.1



लङ्कां समस्तां संदीप्य लाङ्गूलाग्निं महाबलः । निर्वापयामास तदा समुद्रे हरिसत्तमः ॥
यदि दग्धा त्वियं लङ्का नूनमार्यापि जानकी । मया हि दहता लङ्कां न सीता परिरक्षिता ।

धिगस्तु मां सुदुर्बुद्धिं निर्लज्जं पापकृत्तमम् ।
अचिन्तयित्वा तां सीतामग्निदं स्वामिघातकम् ।।

यदि दग्धा त्वियं सर्वा नूनमार्याऽपि जानकी ।
दग्धा तेन मया भर्तुर्हतं कार्यमजानता ।।

अथवा चारुसर्वाङ्गी रक्षिता स्वेन तेजसा ।
न नशिष्यति कल्याणी नाग्निरग्नौ प्रवर्तते ।।

स तथा चिन्तयन् तत्र देव्या धर्मपरिग्रहम् ।
शुश्राव हनुमांस्तत्र चारणानां महात्मनाम् ।।

दग्धेयं नगरी लङ्का साट्टप्राकारतोरणा ।
जानकी न च दग्धेति विस्मयोऽद्भुत एव नः ।।

इति शुश्राव हनुमान् वाचंताममृतोपमाम् ।
बभूव चास्य मनसो हर्षस्तत्कालसम्भवः ।।

ततःकपिःप्राप्तमनोरथार्थस्तामक्षतां राजसुतां विदित्वा ।
प्रत्यक्षतस्तां पुनरेव दृष्ट्वा प्रतिप्रयाणाय मतिं चकार ।।

ततस्तु शिंशपामूले जानकीं पर्यवस्थिताम् ।
अभिवाद्याब्रवीत् दिष्ट्या पश्यामि त्वामिहाक्षताम् ।।

ततस्तं प्रस्थितं सीता वीक्षमाणा पुनः पुनः ।
भर्तुः स्नेहान्विता वाक्यं हनूमन्तमभाषत ।।

अयं च वीर सन्देहस्तिष्ठतीव ममाग्रतः ।
सुमहत्सु सहायेषु हर्यृक्षेषु महाबलः ।। 56.7

कथं नु खलु दुष्पारं सन्तरिष्यति सागरम् ।
तानि हर्यृक्षसैन्यानि तौ वा नरवरात्मजौ ।।

बलैस्तु संकुलां कृत्वा लङ्कां परबलार्दनः ।
मां नयेद् यदि काकुत्स्थस्तत् तस्य सदृशं भवेत् ।।

तदर्थोपहितं वाक्यं प्रश्रितं हेतु संहितम् ।
निशम्य हनुमान् वीरो वाक्यमुत्तरमब्रवीत् ।।

स वानरसहस्राणां कोटिभिरभिसंवृतः ।
क्षिप्रमेष्यति वैदेहि सुग्रीवः प्लवगाधिपः ।।

तौ च वीरौ नरवरौ सहितौ रामलक्ष्मणौ ।
आगम्य नगरीं लङ्कां सायकैर्वधमिष्यतः ।।

समाश्वसिहि भद्रं ते भव त्वं कालकाङ्क्षिणी ।
क्षिप्रं द्रक्ष्यसि रामेण निहतं रावणं रणे ।।

एवमाश्वास्य वैदेहीं हनूमान् मारुतात्मजः ।
गमनाय मतिं कृत्वा वैदेहीमभ्यवादयत् ।।

प्रतिगन्तुं मनश्चक्रे पुनर्मध्येन सागरम् ।
ततः स कपिशार्दूलः स्वामिसंदर्शनोत्सुकः ।।
स तमारुह्य शैलेन्द्रं व्यवर्धत महाकपिः ।।

ददर्श सागरं भीमं भीमोरगनिषेवितम् ।
स मारुत इवाकाशं मारुतस्यात्मसंभवः ।। 56.40

प्रपेदे हरिशार्दूलो दक्षिणादुत्तरां दिशम् ।
नदन्नादेन महता मेघस्वनमहास्वनः ।
स तं देशमनुप्राप्तः सुहृद्दर्शनलालसः ।।

निशम्य नदतो नादं वानरास्ते समन्ततः ।
बभूवुरुत्सुकाः सर्वे सुहृद्दर्शनकाङ्क्षिणः ।।

गिरिगह्वरसंलीनो यथा गर्जति मारुतः ।
एवं जगर्ज बलवान् हनूमान् मारुतात्मजः ।।

ततस्तु वेगवान्वीरो गिरेर्गिरिनिभः कपिः ।
निपपात गिरेस्तस्य शिखरे पादपाकुले ।।

ततस्ते प्रीतमनसः सर्वे वानरपुङ्गवाः ।
हनूमन्तं महात्मानं परिवार्योपतस्थिरे ।।

हनूमांस्तु गुरून् वृद्धाञ्जाम्बवत्प्रमुखांस्तदा ।
कुमारमङ्गदं चैव सोऽवन्दत महाकपिः ।।

प्रीतिमत्सूपविष्टेषु वानरेषु महात्मसु ।
तं ततः प्रतिसंहृष्टः प्रीतियुक्तं महाकपिम् ।।

जाम्बवान् कार्यवृत्तान्तमपृच्छदनिलात्मजम् ।
कथं दृष्टा त्वया देवी कथं वा तत्र वर्तते ।।

स नियुक्तस्ततस्तेन सम्प्रहृष्टतनूरुहः ।
नमस्यञ्शिरसा देव्यै सीतायै प्रत्यभाषत ।।

दक्षिणं तीरमुदधेर्लङ्का यत्र गता पुरी ।
अस्तं दिनकरे याते रक्षसां निलयं पुरीम् ।। 58.47

प्रविष्टोऽहमविज्ञातो रक्षोभिर्भीमविक्रमैः ।
तत्र प्रविशतश्चापि कल्पान्तघनसप्रभा ॥

अट्टहासं विमुञ्चन्ती नारी काप्युत्थिता पुरः ।
सव्यमुष्टिप्रहारेण पराजित्य सुभैरवाम् ।
प्रदोषकाले प्रविशं भीतयाहं तयोदितः ॥

अहं लङ्कापुरी वीर निर्जिता विक्रमेण ते ।
यस्मात् तस्माद् विजेतासि सर्वरक्ष्यांस्यशेषतः ॥

तत्राहं सर्वरात्रं तु विचरञ्जनकात्मजाम् ।
रावणान्तः पुरगतो न चापश्यं सुमध्यमाम् ॥

सप्राकारमवाप्लुत्य पश्यामि बहुपादपम् ।
अशोकवनिकामध्ये शिंशपापादपो महान् ॥

तमारुह्य च पश्यामि काञ्चनं कदलीवनम् ।
अदूरांच्छिंशपावृक्षात् पश्यामि वरवर्णिनीम् ॥

श्यामां कमलपत्राक्षीमुपवासकृशाननाम् ।
तदेकवासः संवीतां रजोध्वस्तशिरोरुहाम् ॥

मांसशोणितभक्ष्याभिर्व्याघ्रीभिर्हरिणीं यथा ।
सा मया राक्षसीमध्ये तर्ज्यमाना मुहुर्मुहुः ॥

एकवेणीधरा दीना भर्तुचिन्तापरायणा ।
भूमिशय्या विवर्णाङ्गी पद्मिनीव हिमागमे ॥

तां दृष्ट्वा तादृशीं नारीं रामपत्नीं यशस्विनीम् ।
तत्रैव शिंशपावृक्षे पश्यन्नहमवस्थितः ॥ 58.62

ततो रावणदाराश्च रावणश्च महाबलः ।
तं देशमनुसम्प्राप्तो यत्र सीताऽभवत् स्थिता ।।

तामुवाच दशग्रीवः सीतां परमदुःखिताम् ।
अवाक्शिरः प्रपतितो बहुमन्यस्व मामिति ।।

एतच्छ्रुत्वा वचस्तस्य रावणस्य दुरात्मनः ।
उवाच परमक्रुद्धा सीता वचनमुत्तमम् ।।

अपहृत्यागतः पाप तेनादृष्टो महात्मना ।
न त्वं रामस्य सदृशो दास्येऽप्यस्य न युज्यसे ।।

अजेयः सत्यवाक् शूरो रणश्लाघी च राघवः ।
जानक्या परुषं वाक्यमेवमुक्तो दशाननः ।।

जज्ज्वाल सहसा कोपाच्चितास्थ इव पावकः ।
विवृत्य नयने क्रूरे मुष्टिमुद्यम्य दक्षिणम् ।।

ततस्ताभिः समेताभिर्नारीभिः स महाबलः ।
उत्थाप्य सहसा नीतो भवनं स्वं निशाचरः ।।

ततस्ताः सहिताः सर्वा विहताशा निरुद्यमाः ।
परिक्लिश्य समस्तास्ता निद्रावशमुपागताः ।।

इक्ष्वाकुकुलवंशस्तु स्तुतो मम पुरस्कृतः ।
श्रुत्वा तु गदितां वाचं राजर्षिगणभूषिताम् ।।

प्रत्यभाषत मां देवी बाष्पैः पिहितलोचना ।
कस्त्वं केन कथं चेह प्राप्तो वानरपुङ्गव ।। 58.95

देवी रामस्य भर्तुस्ते सहायो भीमविक्रमः ।
सुग्रीवो नाम विक्रान्तो वानरेन्द्रो महाबलः ।।

तस्य मां विद्धि भृत्यं त्वं हनूमन्तमिहागतम् ।
भर्त्रा सम्प्रहितस्तुभ्यं रामेणाक्लिष्टकर्मणा ।।

इदं तु पुरुषव्याघ्रः श्रीमान् दाशरथिः स्वयम् ।
अङ्गुलीयमभिज्ञानमदात् तुभ्यं यशस्विनि ।।

तदिच्छामि त्वयाज्ञप्तं देवि किं करवाण्यहम् ।
रामलक्ष्मणयोः पार्श्वं नयामि त्वां किमुत्तरम् ।।

एतच्छ्रुत्वा विदित्वा च सीता जनकनन्दिनी ।
आह रावणमुत्पाद्य राघवो मां नयत्विति ।।

यथा श्रुत्वैव न चिरात् तावुभौ रामलक्ष्मणौ ।
सुग्रीवसहितौ वीरावुपेयातां तथा कुरु ।।

ततोऽवर्धत मे कायस्तदा पर्वतसंनिभः ।
युद्धाकाङ्क्षी वनं तस्य विनाशयितुमारभे ।।

तच्छ्रुत्वा राक्षसेन्द्रेण विसृष्टा बहुदुर्जयः ।
राक्षसा किंकरा नाम रावणस्य मनोऽनुगाः ।।

तेषामशीतिसाहस्रं शूलमुद्गरपाणिनाम् ।
मया तस्मिन्वनोद्देशे परिघेण निषूदितम् ।।

ततश्चेन्द्रजितं नाम द्वितीयं रावणः सुतम् ।
व्यादिदेश सुसङ्क्रुद्धो बलिनं युद्धदुर्मदम् ।। 58.127

ब्रह्मणोऽस्त्रेण स तु मां प्रबद्ध्वा चातिवेगिनः ।
रज्जुभिश्चापि बध्नन्ति ततो मां तत्र राक्षसाः ।।

रावणस्य समीपं च गृहीत्वा मामुपागमन् ।
दृष्ट्वा सम्भाषितश्चाहं रावणेन दुरात्मना ।।

रामदूतं च मां विद्धि सुग्रीवसचिवं कपिम् ।
सोऽहं दौत्येन रामस्य त्वत्सकाशमिहागतः ।।

क्षिप्रमानीयतां सीता दीयतां राघवस्य च ।
यावन्न हरयो वीरा विधमन्ति बलं तव ।।

इति वानरराजस्त्वामाहेत्यभिहितो मया ।
मामैक्षत ततो रुष्टश्चक्षुषा प्रदहन्निव ।।

तेन वध्योऽहमाज्ञप्तो रक्षसा रौद्रकर्मणा ।
ततो विभीषणो नाम तस्य भ्राता महामतिः ।
तेन राक्षसराजश्च याचितो मम कारणात् ।।

दूतवध्या न दृष्टा हि राजशास्त्रेषु राक्षस ।
दूतेन वेदितव्यं च यथाभिहितवादिना ।।

विभीषणेनैवमुक्तो रावणः संदिदेश तान् ।
राक्षसानेतदेवाद्य लाङ्गूलं दह्यतामिति ।।

पुच्छेन च प्रदीप्तेन तां पुरीं साट्टगोपुराम् ।
दहाम्यहमसम्भ्रान्तो युगान्ताग्निरिव प्रजाः ।।

ततः पर्वतमासाद्य तत्रारिष्टमहं पुनः ।
प्रतिप्लवनमारेभे युष्मद्दर्शनकाङ्क्षया ।। 58.166

एतत्सर्वं मया तत्र यथावदुपपादितम् ।
तत्र यन्न कृतं शेषं तत्सर्वं क्रियतामिति ।।

प्रीतिमन्तस्ततः सर्वे वायुपुत्रपुरः सराः ।
महेन्द्राग्रात् समुत्पत्य पुप्लुवुः प्लवगर्षभाः ।।

प्लवमाना खमाप्लुत्य ततस्ते काननौकसः ।
नन्दनोपममासेदुर्वनं द्रुमशतायुतम् ।।

ततः कुमारस्तान् वृद्धाञ्जाम्बवत्प्रमुखान् कपीन् ।
अनुमान्य ददौ तेषां निसर्गं मधुभक्षणे ।।

ते निसृष्टाः कुमारेण धीमता वालिसूनुना ।
हरयः समपद्यन्त द्रुमान् मधुकराकुलान् ।।

ततश्चानुमताः सर्वे सुसंहृष्टा वनौकसः ।
मुदिताश्च ततस्ते च प्रनृत्यन्ति ततस्ततः ।।

अङ्गदं पुरतः कृत्वा हनूमन्तं च वानरम् ।
तेऽम्बरं सहसोत्पत्य वेगवन्तः प्लवङ्गमाः ।।

तेऽङ्गदप्रमुखा वीराः प्रहृष्टाश्च मुदान्विताः ।
निपेतुर्हरिराजस्य समीपे राघवस्य च ।।

हनूमांश्च महाबाहुः प्रणम्य शिरसा ततः ।
नियतामक्षतां देवीं राघवाय न्यवेदयत् ।।

दृष्टा देवीति हनूमद्वदनादमृतोपमम् ।
आकर्ण्य वचनं रामो हर्षमाप सलक्ष्मणः ।। 64.43

एतदाख्याय ते सर्वं हरयो रामसन्निधौ ।
वैदेहीमक्षतां श्रुत्वा रामस्तूत्तरमब्रवीत् ।।

क्व सीता वर्तते देवी कथं च मयि वर्तते ।
एतन्मे सर्वमाख्यात वैदेहीं प्रति वानराः ।।

रामस्य गदितं श्रुत्वा हरयो रामसन्निधौ ।
चोदयन्ति हनूमन्तं सीतावृत्तान्तकोविदम् ।।

श्रुत्वा तु वचनं तेषां हनूमान् मारुतात्मजः ।
प्रणम्य शिरसा देव्यै सीतायै तां दिशं प्रति ।।

उवाच वाक्यं वाक्यज्ञः सीताया दर्शनं यथा ।
तं मणिं काञ्चनं दिव्यं दीप्यमानं स्वतेजसा ।।

दत्वा रामाय हनूमांस्ततः प्राञ्जलिरब्रवीत् ।
समुद्रं लङ्घयित्वाहं शतयोजनमायतम् ।।

दक्षिणस्य समुद्रस्य तीरे वसति दक्षिणे ।
तत्र सीता मया दृष्टा रावणान्तःपुरे सती ।।

त्वयि सन्न्यस्य जीवन्ती रामा राम मनोरथम् ।
दृष्टा मे राक्षसीमध्ये तर्ज्यमाना मुहुर्मुहुः ।।

रावणान्तः पुरे रुद्धा राक्षसीभिः सुरक्षिता ।
एकवेणीधरा दीना त्वयि चिन्तापरायणा ।।

अधःशय्या विवर्णाङ्गी पद्मिनीव हिमागमे ।
रावणाद् विनिवृत्तार्था मर्तव्यकृतनिश्चया ।। 65.15

देवी कथंचित् काकुत्स्थ त्वन्मना मार्गिता मया ।
इक्ष्वाकुवंशविख्यातिं शनैःकीर्तयताऽनघ ।।

सा मया नरशार्दूल शनैर्विश्वासिता तदा ।
ततः सम्भाषिता देवी सर्वमर्थं च दर्शिता ।।

एवं मया महाभाग दृष्टा जनकनन्दिनी ।
उग्रेण तपसा युक्ता त्वद्भक्त्या पुरुषर्षभ ।।

अभिज्ञानं च मे दत्तं यथावृत्तं तवान्तिके ।
चित्रकूटे महाप्राज्ञ वायसं प्रति राघव ।।

विज्ञाप्यः पुनरप्येष रामो वायुसुत त्वया ।
अखिलेन यथा दृष्टमिति मामाह जानकी ।।

अयं चास्मै प्रदातव्यो यत्नात् सुपरिरक्षितः ।
ब्रुवता वचनान्येवं सुग्रीवस्योपशृण्वतः ।।

एष चूडामणिः श्रीमान् मया ते यत्नरक्षितः ।
मनः शिलायास्तिलकं तत् स्मरस्वेति चाब्रवीत् ।।

जीवितं धारयिष्यामि मासं दशरथात्मज ।
ऊर्ध्वं मासान्न जीवेयं रक्षसां वशमागता ।।

इति मामब्रवीत् सीता कृशाङ्गी धर्मचारिणी ।
रावणान्तः पुरे रुद्धा मृगीवोत्फुल्ललोचना ।। 65.26

तौ जाताश्वासौ राजपुत्रौ विदित्वा तच्चाभिज्ञानं राघवाय प्रदाय ।
देव्या चाख्यातं सर्वमेवानुपूर्व्याद् वाचा सम्पूर्णं वायुपुत्रः शशंस ।।

तं तु दृष्ट्वा मणिश्रेष्ठं राघवः शोककर्शितः ।
नेत्राभ्यामश्रुपूर्णाभ्यां सुग्रीवमिदमब्रवीत् ।।

मणिरत्नमिदं दत्तं वैदेह्याः श्वशुरेण मे ।
वधूकाले यथा बद्धमाधिकं मूर्ध्नि शोभते ।।

किमाह सीता वैदेही ब्रूहि सौम्य पुनः पुनः ।
परासुमिव तोयेन सिञ्चन्ती वाक्यवारिणा ।।

कथं सा मम सुश्रोणी भीरुभीरुः सती तदा ।
भयावहानां घोराणां मध्ये तिष्ठति रक्षसाम् ।।

मधुरा मधुरालापा किमाह मम भामिनी ।
मद्विहीना वरारोहा हनूमन् कथयस्व मे ।।
दुःखाद् दुःखतरं प्राप्य कथं जीवति जानकी ।।

एवमुक्तस्तु हनुमान् राघवेण महात्मना ।
सीताया भाषितं सर्वं न्यवेदयत राघवे ।।

**।। इत्यार्षे श्रीमद् वाल्मीकिरामायणसंग्रहे**

**सुन्दरकाण्डम् सम्पूर्णम् ।।**

## ।। युद्धकाण्डम् ।।

श्रुत्वा हनूमतो वाक्यं यथावदभिभाषितम् ।
रामः प्रीतिसमायुक्तो वाक्यमुत्तरमब्रवीत् ।।

कृतं हनुमता कार्यं सुमहद् भुवि दुर्लभम् ।
मनसापि यदन्येन न शक्यं धरणीतले ।।

अहं च रघुवंशश्च लक्ष्मणश्च महाबलः ।
वैदेह्या दर्शनेनाद्य धर्मतः परिरक्षिताः ।।

एष सर्वस्वभूतस्तु परिष्वङ्गो हनूमतः ।
मया कालमिमं प्राप्य दूतस्तस्य महात्मनः ।।

ध्यात्वा पुनरुवाचेदं वचनं रघुसत्तमः ।
हरीणामीश्वरस्यापि सुग्रीवस्योपशृण्वतः ।।

कथं नाम समुद्रस्य दुष्पारस्य महाम्भसः ।
हरयो दक्षिणं पारं गमिष्यन्ति समागताः ।।

इत्युक्त्वा शोकसम्भ्रान्तो रामः शत्रुनिबर्हणः ।
तं तु शोकपरिद्यूनं रामं दशरथात्मजम् ।
उवाच वचनं श्रीमान् सुग्रीवः शोकनाशनम् ।।

सेतुरत्र यथा बद्ध्येद् यथा पश्येम तां पुरीम् ।
तस्य राक्षसराजस्य तथा त्वं कुरु राघव ।।

तत्त्वं बुद्धिमतां श्रेष्ठः सर्वशास्त्रार्थकोविदः ।
मद्विधैः सचिवैः सार्धमरिं जेतुं समर्हसि ।।

लङ्घनार्थं च घोरस्य समुद्रस्य महीपतेः ।
सहास्माभिरिहोपेतः सूक्ष्मबुद्धिर्विचारय ।। 2.20

किमुक्त्वा बहुधा चापि सर्वथा विजयी भवान् ।
निमित्तानि च पश्यामि मनो मे सम्प्रहृष्यति ।।

सुग्रीवस्य वचः श्रुत्वा हेतुमत् परमार्थवत् ।
प्रतिजग्राह काकुत्स्थो हनूमन्तमथाब्रवीत् ।।

कति दुर्गाणि दुर्गाया लङ्कायास्तद् ब्रवीष्व मे ।
ज्ञातुमिच्छामि तत् सर्वं दर्शनादिव वानर ।।
एवमुक्त्वा कपिश्रेष्ठः कथयामास तत्त्वतः ।।

हर्षप्रमुदिता लङ्का मत्तद्विपसमाकुला ।
महती रथसम्पूर्णा रक्षोगणनिषेविता: ।।

दृढबद्धकपाटानि महापरिघवन्ति च ।
चत्वारि विपुलान्यस्या द्वाराणि सुमहान्ति च ।।

लङ्का पुनर्निरालम्बा देवदुर्गा भयावहा ।
नादेयं पार्वतं वान्यं कृत्रिमं च चतुर्विधम् ।।

स्थिता पारे समुद्रस्य दूरपारस्य राघव ।
नौपथश्चापि नान्यत्र निरुद्देशश्च सर्वतः ।।

शैलाग्रे रचिता दुर्गा सा पूर्देवपुरोपमा ।
दग्धा च नगरी लङ्का प्राकाराश्चावसादिता: ।
बलैकदेशः क्षपितो रक्षसानां महात्मनाम् ।।

एवमाज्ञापय क्षिप्रं बलानां सर्वसंग्रहम् ।
मुहूर्तेन तु युक्तेन प्रस्थानमभिरोचय ।। 3.33

श्रुत्वा हनूमतो वाक्यं यथावदनुपूर्वशः ।
ततोऽब्रवीन्महातेजा रामस्सत्यपराक्रमः ।।

अस्मिन्मुहूर्ते सुग्रीव प्रस्थानमभिरोचय ।
युक्ते मुहूर्ते विजये प्राप्तो मध्यं दिवाकरः ।।

उत्तराफाल्गुनी ह्यद्य श्वस्तु हस्तेन योक्ष्यते ।
अभिप्रयाम सुग्रीव सर्वानीकसमावृताः ।।

गजश्च गिरिसङ्काशो गवयश्च महाबलः ।
गवाक्षश्चाग्रतो यातु गवां दृप्त इवर्षभः ।।

यातु वानरवाहिन्या वानरः प्लवगां पतिः ।
पालयन् दक्षिणं पार्श्वमृषभो वानरर्षभः ।।

यास्यामि बलमध्येऽहं बलौघमभिहर्षयन् ।
अधिरुह्य हनूमन्तमैरावतमिवेश्वरः ।।

अङ्गेदेनैष संयातु लक्ष्मणश्चान्तकोपमः ।
सार्वभौमेन भूतेशो द्रविणाधिपतिर्यथा ।।

जाम्बवांश्च सुषेणश्च वेगदर्शी च वानरः ।
ऋक्षराजो महाबाहुः कुक्षिं रक्षन्तु ते त्रयः ।।

राघवस्य वचः श्रुत्वा सुग्रीवो वाहिनीपतिः ।
व्यादिदेश महावीर्यो वानरान् वानरर्षभः ।।

ततो वानरराजेन लक्ष्मणेन च पूजितः ।
जगाम रामो धर्मात्मा ससैन्यो दक्षिणां दिशम् ।। 4.23

मध्ये तु राजा सुग्रीवो रामो लक्ष्मण एव च ।
बलिभिर्बहुभिर्भीमैर्वृत शत्रुनिबर्हण: ।।

एवं ते शार्दूला गच्छन्ति बलदर्पिता: ।
अपश्यन्त गिरिश्रेष्ठं सह्यं गिरिशंतायुतम् ।।

महेन्द्रमथ सम्प्राप्य रामो राजीवलोचन: ।
आरुरोह महाबाहु: शिखरं द्रुमभूषितम् ।।

तत: शिखरमारुह्य रामो दशरथात्मज: ।
कूर्ममीनसमाकीर्णमपश्यत् सलिलाशयम् ।।

तदिहैव निवेशोऽस्तु मन्त्र: प्रस्तूयतामिह ।
यथेदं वानरबलं परं पारमवाप्नुयात् ।।

इतीव स महाबाहु: सीताहरणकर्शित: ।
राम: सागरमासाद्य वासमाज्ञापयत् तदा ।।

रामस्य वचनं श्रुत्वा सुग्रीव: सहलक्ष्मण: ।
सेनां निवेशयत् तीरे सागरस्य द्रुमायुते ।।

निविष्टायां तु सेनायां तीरे नदनदीपते: ।
पार्श्वस्थं लक्ष्मणं दृष्ट्वा रामो वचनमब्रवीत् ।।

कथं जनकराजस्य दुहिता मम च प्रिया ।
राक्षसीमध्यगा शेते स्नुषा दशरथस्य च ।।

एवं विलपतस्तस्य तत्र रामस्य धीमत: ।
दिनक्षयान्मन्दवपुर्भास्करोऽस्तमुपासत ।। 5.22

लङ्कायां तु कृतं कर्म घोरं दृष्ट्वा भयावहम् ।
राक्षसेन्द्रो हनुमता शक्रेणेव महात्मना ।
अब्रवीद् राक्षसान् सर्वान् ह्रिया किंचिदवाङ्मुखः ।।

वानराणां हि धीराणां सहस्रैः परिवारितः ।
रामोऽभ्येति पुरीं लङ्कामस्माकमुपरोधकः ।।

तरिष्यति च सुव्यक्तं राघवः सागरं सुखम् ।
तरसा युक्तरूपेण सानुजः सबलानुगः ।।

समुद्रमुच्छोषयति वीर्येणान्यत्करोति वा ।
तस्मिन्नेवंविधे कार्ये विरुद्धे वानरैः सह ।
हितं पुरे च सैन्ये च सर्वं सम्मन्त्र्यतां मम ।।

इत्युक्ता राक्षसेन्द्रेण राक्षसास्ते महाबलाः।
ऊचुःप्राञ्जलयः सर्वे रावणं राक्षसेश्वरम् ।।

अद्य रामं वधिष्यामः सुग्रीवं च सलक्ष्मणम् ।
कृपणं च हनूमन्तं लङ्का येन प्रधर्षिता ।।

तान् गृहीतायुधान् सर्वान् वारयित्वा विभीषणः ।
अब्रवीत् प्राञ्जलिर्वाक्यं पुनः प्रत्युपवेश्य तान् ।।

किं च राक्षसराजस्य रामेणापकृतं पुरा ।
आजहार जनस्थानाद् यस्य भार्या यशस्विनः ।।

न तु क्षमं वीर्यवता तेन धर्मानुवर्तिना ।
वैरं निरर्थकं कर्तुं दीयतामस्य मैथिली ।। 9.16

रामस्य दयिता पत्नी न स्वयं यदि दीयते ।
प्रसादये त्वां बन्धुत्वात् कुरुष्व वचनं मम ।
हितं तथ्यं त्वहं ब्रूमि दीयतामस्य मैथिली ।।

विभीषणवचः श्रुत्वा रावणो राक्षसेश्वरः ।
विसर्जयित्वा तान् सर्वान् प्रविवेश स्वकं गृहम् ।।

अतीतसमये काले तस्मिन् वै युधि रावणः ।
अमात्यैश्च सुहृद्भिश्च प्राप्तकालममन्यत ।।

अदेया च यथा सीता वध्यौ दशरथात्मजौ ।
भवद्भिर्मन्त्र्यतां मन्त्रः सुनीतं चाभिधीयताम् ।।

तस्य कामपरीतस्य निशम्य परिदेवितम् ।
कुम्भकर्णः प्रचुक्रोध वचनं चेदमब्रवीत् ।।

सर्वमेतन्महाराज कृतमप्रतिमं तव ।
विधीयेत सहास्माभिरादावेवास्य कर्मणः ।।

यः पश्चात् पूर्वकार्याणि कर्माण्यभिचिकीर्षति ।
पूर्वं चापरकार्याणि स न वेद नयानयौ ।।

अहमुत्सादयिष्यामि शत्रूंस्तव निशाचर ।
यदि शक्रविवस्वन्तौ यदि पावकमारुतौ ।
तावहं योधयिष्यामि कुबेरवरुणावपि ।।

निशाचरेन्द्रस्य निशम्य वाक्यं स कुम्भकर्णस्य च गर्जितानि ।
विभीषणो राक्षसराजमुख्यमुवाच वाक्यं हितमर्थयुक्तम् ।। 14.1

यावन्न गृह्णन्ति शिरांसि बाणा रामेरिता राक्षसपुङ्गवानाम् ।
वज्रोपमा वायुसमानवेगाः प्रदीयतां दाशरथाय मैथिली ।।

न रावणो नातिबलस्त्रिशीर्षो न कुम्भकर्णस्य सुतो निकुम्भः ।
न चेन्द्रजिद् दाशरथिं प्रवोढुं त्वं वा रणे शक्रसमं समर्थः ।।

बृहस्पतेस्तुल्यमतेर्वचस्तन्निशम्य यत्नेन विभीषणस्य ।
ततो महात्मा वचनं बभाषे तत्रेन्द्रजिन्नैर्ऋतयूथमुख्यः ।।

किं नाम तौ मानुषराजपुत्रावस्माकमेकेन हि राक्षसेन ।
सुप्राकृतेनापि निहन्तुमेतौ शक्यौ कुतो भीषयसे स्म भीरो ।।

अथेन्द्रकल्पस्य दुरासदस्य महौजसस्तद् वचनं निशम्य ।
ततो महार्थं वचनं बभाषे विभीषणः शस्त्रभृतां वरिष्ठः ।।

पुत्रप्रवादेन तु रावणस्य त्वमिन्द्रजिन्मित्रमुखोऽसि शत्रुः ।
यस्येदृशं राघवतो विनाशं निशम्य मोहादनुमन्यसे त्वम् ।।

धनानि रत्नानि सुभूषणानि वासांसि दिव्यानि मणींश्च चित्रान् ।
सीतां च रामाय निवेद्य देवीं वसेम राजन्निह वीतशोकाः ।।

सुनिविष्टं हितं वाक्यमुक्तवन्तं विभीषणम् ।
अब्रवीत् परुषं वाक्यं रावणः कालचोदितः ।।

वसेत् सह सपत्नेन क्रुद्धेनाशीविषेण च ।
न तु मित्रप्रवादेन संवसेच्छत्रुसेविना ।।

योऽन्यस्त्वेवंविधं ब्रूयाद् वाक्यमेतन्निशाचर ।
अस्मिन्मुहूर्ते न भवेत् त्वां तु धिक् कुलपांसन ।। 16.16

इत्युक्तः परुषं वाक्यं न्यायवादी विभीषणः ।
उत्पपात गदापाणिश्चतुर्भिः सह राक्षसैः ।।

अब्रवीच्च तदा वाक्यं जातक्रोधो विभीषणः ।
अन्तरिक्षगतः श्रीमान् भ्राता वै राक्षसाधिपम् ।।

स त्वं भ्रान्तोऽसि मे राजन् ब्रूहि मां यद् यदिच्छसि ।
ज्येष्टो मान्यः पितृसमो न च धर्मपथे स्थितः ।
इदं हि परुषं वाक्यं न क्षमाम्यग्रजस्य ते ।।

सुनीतं हितकामेन वाक्यमुक्तं दशानन ।
न गृह्णन्त्यकृतात्मानः कालस्य वशमागताः ।।

शुलभाः पुरुषाः राजन् सततं प्रियवादिनः ।
अप्रियस्य च पथ्यस्य वक्ता श्रोता च दुर्लभः ।।

दीप्तपावकसंकाशैः शितैः काञ्चनभूषणैः ।
न त्वामिच्छाम्यहं द्रष्टुं रामेण निहतं शरैः ।।

आत्मानं सर्वथा रक्ष पुरीं चेमां सराक्षसाम् ।
स्वस्ति तेऽस्तु गमिष्यामि सुखी भव मया विना ।।

निवार्यमाणस्य मया हितैषिणा न रोचते ते वचनं निशाचर ।
परान्तकाले हि गतायुषो नरा हितं न गृह्णन्ति सुहृद्भिरीरितम् ।।

इत्युक्त्वा परुषं वाक्यं रावणं रावणानुजः ।
आजगाम मुहूर्तेन यत्र रामः सलक्ष्मणः ।।

ते चाप्यनुचरास्तस्य चत्वारो भीमविक्रमाः ।
तेऽपि वर्मायुधोपेता भूषणोत्तमभूषिताः ।। 17.3

स उवाच महाप्राज्ञः स्वरेण महता महान् ।
सुग्रीवं तांश्च सम्प्रेक्ष्य स्वस्थ एव विभीषणः ।।

रावणो नाम दुर्वृत्तो राक्षसो राक्षसेश्वरः ।
तस्याहमनुजो भ्राता विभीषण इति श्रुतः ।।

तमहं हेतुभिर्वाक्यैर्विविधैश्च न्यदर्शयम् ।
साधु निर्यात्यतां सीता रामायेति पुनःपुनः ।। XVII.14

सोऽहं परुषितस्तेन दासवच्चावमानितः ।
त्यक्त्वा पुत्राश्च दारांश्च राघवं शरणं गतः ।।

निवेदयत मां क्षिप्रं राघवाय महात्मने ।
सर्वलोकशरण्याय विभीषणमुपस्थितम् ।।

एतत्तु वचनं श्रुत्वा सुग्रीवो लघुविक्रमः ।
लक्ष्मणस्याग्रतो रामं संरब्धमिदमब्रवीत् ।।

अन्तर्धानगता ह्येते राक्षसाः कामरूपिणः ।
शूराश्च निकृतिज्ञाश्च तेषां जातु न विश्वसेत् ।।

प्रकृत्या राक्षसो ह्येष भ्राता मित्रस्य वै प्रभो ।
आगतश्च रिपुः साक्षात् कथमस्मिंश्च विश्वसेत् ।।

रावणस्यानुजो भ्राता विभीषण इति श्रुतः ।
चतुर्भिः सह रक्षोभिर्भवन्तं शरणं गतः ।।

सुग्रीवस्य तु तद् वाक्यं श्रुत्वा रामो महाबलः ।
समीपस्यानुवाचेदं हनुमत्प्रमुखान् कपीन् ।। 17.31

सुहृतामर्थकृच्छ्रेषु युक्तं बुद्धिमता सदा ।
समर्थेनोपसंदेष्टुं शाश्वतीं भूतिमिच्छता ।।

इत्येवं परिपृष्टास्ते स्वं स्वं मतमतन्द्रिताः ।
सोपचारं तदा राममूचुः प्रियचिकीर्षवः ।।

इत्युक्ते राघवायाथ मतिमानङ्गदोऽग्रतः ।
विभीषणपरीक्षार्थमुवाच वचनं हरिः ।।

शत्रौः सकाशात् संप्राप्तः सर्वथा तर्क्य एव हि ।
विश्वासनीयः सहसा न कर्तव्यो विभीषणः ।।

जाम्वांस्त्वथ सम्प्रेक्ष्य शास्त्रबुद्ध्या विचक्षणः ।
वाक्यं विज्ञापयामास गुणवद् दोषवर्जितम् ।।

बद्धवैराच्च पापाच्च राक्षसेन्द्राद् विभीषणः ।
अदेशकाले सम्प्राप्तः सर्वथा शङ्क्यतामयम् ।।

अथ संस्कारसम्पन्नो हनूमान् सचिवोत्तमः ।
उवाच वचनं श्लक्ष्णमर्थवन्मधुरं लघु ।।

दौरात्म्यं रावणे दृष्ट्वा विक्रमं च तथा त्वयि ।
युक्तमागमनं ह्यत्र सदृशं तस्य बुद्धितः ।।

अशङ्कितमतिःस्वस्थो न शठः परिसर्पति ।
न चास्य दुष्टवागस्ति तस्मान्मे नास्ति संशयः ।।

अथ रामः प्रसन्नात्मा श्रुत्वा वायुसुतस्य ह ।
प्रत्यभाषत दुर्धर्षः श्रुतवानात्मनि स्थितम् ।। 18.1

न वयं तत्कुलीनाश्च राज्यकाङ्क्षी च राक्षसः ।
पण्डिता हि भविष्यन्ति तस्माद् ग्राह्यो विभीषणः ।।

न सर्वे भ्रातरस्तात भवन्ति भरतोपमाः ।
मद्विधा वा पितुः पुत्राः सुहृदो वा भवद्विधाः ।।

आर्तो वा यदि वा दृप्तः परेषां शरणं गतः ।
अरिः प्राणान् परित्यज्य रक्षितव्यः कृतात्मना ।।

सकृदेव प्रपन्नाय तवास्मीति च याचते ।
अभयं सर्वभूतेभ्यो ददाम्येतत् व्रतं मम ।।

आनयैनं हरिश्रेष्ठ दत्तमस्याभयं मया ।
विभीषणो वा सुग्रीव यदि वा रावणः स्वयम् ।।

रामस्य तु वचः श्रुत्वा सुग्रीवः प्लवगेश्वरः ।
प्रत्यभाषत काकुत्स्थं सौहार्देनाभिपूरितः ।।

तस्मात् क्षिप्रं सहास्माभिस्तुल्यो भवतु राघव ।
विभीषणो महाप्राज्ञः सखित्वं चाभ्युपैतु नः ।।

ततस्तु सुग्रीववचो निशम्य तद्धरीश्वरेणाभिहितं नरेश्वरः ।
विभीषणेनाशु जगाम संगमं पतत्रिराजेन यथा पुरंदरः ।।

राघवेणाभये दत्ते सन्नतो रावणानुजः ।
विभीषणो महाप्राज्ञो भूमिं समवलोकयत् ।।

पादयोर्निपपाताथ चतुर्भिः सह राक्षसैः ।
अब्रवीच्च तदा वाक्यं रामं प्रति विभीषणः ।। 19.3

भवन्तं सर्वभूतानां शरण्यं शरणं गतः ।
परित्यक्त्वा मया लङ्का मित्राणि च धनानि च ।।

भवद्गतं हि मे राज्यं जीवितं च सुखानि च ।
तस्य तद् वचनं श्रुत्वा रामो वचनमब्रवीत् ।।

वचसा सान्त्वयित्वैनं लोचनाभ्यां पिबन्निव ।
आख्याहि मम तत्त्वेन राक्षसानां बलाबलम् ।।

एवमुक्तं तदा रक्षो रामेणाक्लिष्टकर्मणा ।
रावणस्य बलं सर्वमाख्यातुमुपचक्रमे ।।

अवध्यः सर्वभूतानां गन्धर्वोरगपक्षिणाम् ।
राजपुत्र दशग्रीवो वरदानात् स्वयम्भुवः ।।

रावणानन्तरो भ्राता मम ज्येष्ठश्च वीर्यवान् ।
कुम्भकर्णो महातेजाः सक्रप्रतिबलो बुधि ।।

बद्धगोदाङ्गुलित्राणस्त्ववध्यकवचो युधि ।
धनुरादाय यस्तिष्टन्नदृश्यो भवतीन्द्रजित् ।।

संग्रामे सुमहद्व्यूहे तर्पयित्वा हुताशनम् ।
अन्तर्धानगतः श्रीमानिन्द्रजिद्धन्ति राघव ।।

विभीषणस्य तु वचस्तच्छ्रुत्वा रघुसत्तमः ।
अन्वीक्ष्य मनसा सर्वमिदं वचनमब्रवीत् ।।

अहं हत्वा दशग्रीवं सप्रहस्तं सहात्मजम् ।
राजानं त्वां करिष्यामि सत्यमेतच्छ्रुणोतु मे ।। 19.19

अहत्वा रावणं सङ्ख्ये सपुत्रजनबान्धवम् ।
अयोध्यां न प्रवेक्ष्यामि त्रिभिस्तैर्भ्रातृभिःशपे ॥

श्रुत्वा तु वचनं तस्य रामस्याक्लिष्टकर्मणः ।
शिरसाऽऽवन्द्य धर्मात्मा वक्तुमेवं प्रचक्रमे ॥

राक्षसानां वधे साह्यं लङ्कायाश्च प्रधर्षणे ।
करिष्यामि यथाप्राणं प्रवेक्ष्यामि च वाहिनीम् ॥

इति ब्रुवाणं रामस्तु परिष्वज्य विभीषणम् ।
अब्रवील्लक्ष्मणं प्रीतः समुद्राज्जलमानय ॥

तेन चेमं महाप्राज्ञमभिषिञ्च विभीषणम् ।
राजानं रक्षसां क्षिप्रं प्रसन्ने मयि मानद ॥

एवमुक्तस्तु सौमित्रिरभ्यषिञ्चद् विभीषणम् ।
मध्ये वानरमुख्यानां राजानं राजशासनात् ॥

अब्रवीच्च हनूमांश्च सुग्रीवश्च विभीषणम् ।
कथं सागरमक्षोभ्यं तराम वरुणालयम् ।
सैन्यैःपरिवृताः सर्वे वानराणां महौजसाम् ॥

एवमुक्तस्तु धर्मात्मा प्रत्युवाच विभीषणः ।
समुद्रं राघवो राजा शरणं गन्तुमर्हसि ॥

एवमुक्तः कुशास्तीर्णे तीरे नदनदीपतेः ।
संविवेश तदा रामो वेद्यामिव हुताशनः ॥

ततःसागरवेलायां दर्भानास्तीर्य राघवः ।
अञ्जलिं प्राङ्मुखः कृत्वा प्रतिशिश्ये महोदधेः ॥ 21.1

स त्रिरात्रोषितस्तत्र नयज्ञो धर्मवत्सलः ।
उपासत तदा रामः सागरं सरितां पतिम् ।।

न च दर्शयते रूपं मन्दो रामस्य सागरः ।
प्रयतेनापि रामेण यथार्हमभिपूजितः ।।

समुद्रस्य ततःक्रुद्धो रामो रक्तान्तलोचनः ।
समीपस्थमुवाचेदं लक्ष्मणं शुभलक्षणम् ।।

असमर्थं विजानाति धिक् क्षमामीदृशे जने ।
न दर्शयति साम्ना मे सागरो रूपमात्मनः ।।

अद्याक्षोभ्यमपि क्रुद्धः क्षोभयिष्यामि सागरम् ।
वेलासु कुलमर्यादं सहस्रोर्मिसमाकुलम् ।।

निर्मर्यादं करिष्यामि सायकैर्वरुणालयम् ।
महार्णवं क्षोभयिष्ये महादानवसंकुलम् ।।

एवमुक्त्वा धनुष्पाणिः क्रोधविस्फारितेक्षणः ।
बभूव रामो दुर्धर्षो युगान्ताग्निरिव ज्वलन् ।।

सम्पीड्य च धनुर्घोरं कम्पयित्वा शरैर्जगत् ।
मुमोच विशिखानुग्रान् वज्रानिव शतक्रतुः ।।

तोयवेगः समुद्रस्य समीनमकरो महान् ।
स बभूव महाघोरः समारुतरवस्तथा ।।

सागरः समुपक्रम्य पूर्वमामन्त्र्य वीर्यवान् ।
अब्रवीत् प्राञ्जलिर्वाक्यं राघवं शरपाणिनम् ।। 22.25

अयं सौम्य नलो नाम तनयो विश्वकर्मण: ।
एष सेतुं महोत्साहः करोतु मयि वानरः ।
तमहं धारयिष्यामि यथा ह्येष पिता तथा ।।

एवमुक्त्वोदधिर्नष्टः समुत्थाय नलस्ततः ।
अब्रवीद् वानरश्रेष्ठो वाक्यं रामं महाबलम् ।।

अहं सेतुं करिष्यामि विस्तीर्णे मकरालये ।
पितुः सामर्थ्यमासाद्य तत्त्वमाह महोदधिः ।।

ततो विसृष्टा रामेण सर्वतो हरिपुङ्गवाः ।
उत्पेततुर्महारण्यं हृष्टाः शतसहस्रशः ।।

ते नगान् नागसंकाशाः शाखामृगगणर्षभाः ।
बभञ्जुः पादपांस्तत्र प्रचकर्षुश्च सागरम् ।।

स वानरवरः श्रीमान् विश्वकर्मात्मजो बली ।
बबन्ध सागरे सेतुं यथा चास्य पिता तथा ।।

ततो देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः ।
आगम्य गमने तस्थुर्द्रष्टुकामास्तदद्भुतम् ।।

दशयोजनविस्तीर्णे शतयोजनमायतम् ।
ददृशुर्देवगन्धर्वा नलसेतुं सुदुष्करम् ।।

अशोभत महान् सेतुः सीमन्त इव सागरे ।
ततःपारे समुद्रस्य गदापाणिर्विभीषणः ।।

परेषामभिघातार्थमतिष्ठत् सचिवैः सह ।
सुग्रीवस्तु ततः प्राह रामं सत्यपराक्रमम् ।। 22.81

हनूमन्तं त्वमारोह अङ्गदं त्वथ लक्ष्मणः ।
अयं हि विपुलो वीर सागरो मकरालयः ।।

वैहायसौ युवामेतौ वानरौ धारयिष्यतः ।
अग्रतस्तस्य सैन्यस्य श्रीमान् रामः सलक्ष्मणः ।।

जगाम धन्वी धर्मात्मा सुगीवेण समन्वितः ।
अन्ये मध्येन गच्छन्ति पार्श्वतोऽन्ये प्लवङ्गमाः ।।

घोषेण महता घोषं सागरस्य समुच्छ्रितम् ।
भीममन्तर्दधे भीमा तरन्ती हरिवाहिनी ।।

वानराणां हि सा तीर्णा वाहिनी नलसेतुना ।
तीरे निर्विविशे राज्ञो बहुमूलफलोदके ।।

तदद्भुतं राघवकर्म दुष्करं समीक्ष्य देवाः सह सिद्धचारणैः ।
उपेत्य रामं सहसा महर्षिभिः तमभ्यषिञ्चन् सुशुभैर्जलैः पृथक् ।।

निमित्तानि निमित्तज्ञो दृष्ट्वा लक्ष्मणपूर्वजः ।
प्रतस्थे पुरतो रामो लङ्कामभिमुखो विभुः ।।

सविभीषणसुग्रीवाः सर्वे ते वानरर्षभाः ।
प्रतस्थिरे विनर्दन्तो धृतानां द्विषतां वधे ।।

ततः शुश्रूवुराकृष्टं लङ्कायां काननौकसः ।
भेरीमृदङ्गसंघुष्टं तुमुलं लोमहर्षणम् ।।

राक्षसास्तत् प्लवङ्गानां शुश्रुवुश्चाऽपि गर्जितम् ।
नर्दतामिव दृप्तानां मेघानामम्बरे स्वनम् ।। 24.5

दृष्ट्वा दाशरथिर्लङ्कां चित्रध्वजपताकिनीम् ।
जगाम मनसा सीतां दूयमानेन चेतसा ।।

दीर्घमुष्णं च निःश्वस्य समुद्वीक्ष्य च लक्ष्मणम् ।
उवाच वचनं वीरस्तत्कालहितमात्मनः ।।

विमानैर्बहुभिर्लङ्कां सङ्कीर्णा रचिता पुरा ।
विष्णोः पदमिवाकाशं छादितं पाण्डुभिर्घनैः ।।

पुष्पितैः शोभिता लङ्का वनैश्चित्ररथोपमैः ।
नानापतङ्गसङ्घुष्टफलपुष्पोपगैः शुभैः ।।

इति दाशरथी रामो लक्ष्मणं समभाषत ।
बलं च तत्र विभजच्छास्त्रदृष्टेन कर्मणा ।।

शशास कपिसेनां तां बलादादाय वीर्यवान् ।
अङ्गदः सह नीलेन तिष्ठेदुरसि दुर्जयः ।।

तिष्ठेद् वानरवाहिन्या वानरौघसमावृतः ।
आश्रितो दक्षिणं पार्श्वमृषभो नाम वानरः ।।

गन्धहस्तीव दुर्धर्षस्तरस्वी गन्धमादनः ।
तिष्ठेद् वानरवाहिन्याः सव्यं पार्श्वमधिष्ठितः ।।

मूर्ध्निस्थास्याम्यहं यत्तो लक्ष्मणेन समन्वितः ।
जाम्बवांश्च सुषेणश्च वेगदर्शी च वानरः ।।

ऋक्षमुख्या महात्मानः कुक्षिं रक्षन्तु ते त्रयः ।
जघनं कपिसेनायाः कपिराजोऽभिरक्षतु ।
पश्चार्धमिव लोकस्य प्रचेतास्तेजसा वृतः ।। 24.18

प्रगृह्य गिरिशृङ्गाणि महतश्च महीरुहान् ।
आसेदुर्वानरा लङ्कां मिमर्दयिषवो रणे ।।

ततो रामो महातेजाः सुग्रीवमिदमब्रवीत् ।
सुविभक्तानि सैन्यानि शुक एष विमुच्यताम् ।।

रामस्य तु वचः श्रुत्वा वानरेन्द्रो महाबलः ।
मोचयामास तं दूतं शुकं रामस्य शासनात् ।।

रावणः प्रहसन्नेव शुकं वाक्यमुवाच ह ।
किमिमौ ते सितौ पक्षौ लूनपक्षश्च दृश्यसे ।।

ततः स भयसंविग्नस्तेन राज्ञाभिचोदितः ।
वचनं प्रत्युवाचेदं राक्षसाधिपमुत्तमम् ।।

सागरस्योत्तरे तीरेऽब्रुवं ते वचनं तथा ।
यथा संदेशमक्लिष्टं सान्त्वयञ्श्लक्ष्णया गिरा ।।

न ते संभाषितुं शक्याः सम्प्रश्नोऽत्र न विद्यते ।
प्रकृत्या कोपनास्तीक्ष्णा वानरा राक्षसाधिप ।।

स च हन्ता विराधस्य कबन्धस्य खरस्य च ।
सुग्रीवसहितो रामः सीतायाः पदमागतः ।।

स कृत्वा सागरे सेतुं तीर्त्वा च लवणोदधिम् ।
एष रक्षांसि निर्धूय धन्वी तिष्ठति राघवः ।।

ऋक्षवानरसङ्घानामनीकानि सहस्रशः ।
गिरिमेघनिकाशानां छादयन्ति वसुंधराम् ।। 24.32

पुरा प्राकारमायान्ति क्षिप्रमेकतरं कुरु ।
सीतां चास्मै प्रयच्छाशु युद्धं वापि प्रदीयताम् ।।

शुकस्य वचनं श्रुत्वा रावणो वाक्यमब्रवीत् ।
रोषसंरक्तनयनो निर्दहन्निव चक्षुषा ।।

यदि मां प्रति युद्धेरन् देवगन्धर्वदानवाः ।
नैव सीतां प्रदास्यामि सर्वलोकभयादपि ।।

सागरस्येव मे वेगो मारुतस्येव मे बलम् ।
न च दाशरथिर्वेद तेन मां योद्धुमिच्छति ।।

न जानाति पुरा वीर्यं मम युद्धे स राघवः ।
मम चापमयीं वीणां शरकोणैः प्रवादिताम् ।।

न वासवेनापि सहस्रचक्षुषा युद्धेऽस्मि शक्यो वरुणेन वा स्वयम् ।
यमेन वा धर्षयितुं शराग्निना महाहवे वैश्रवणेन वा पुनः ।।

सबले सागरं तीर्णे रामे दशरथात्मजे ।
अमात्यौ रावणः श्रीमानब्रवीच्छुकसारणौ ।।

सागरे सेतुबन्धं तं न श्रद्दध्यां कथञ्चन ।
अवश्यं चापि संख्येयं तन्मया वानरं बलम् ।।

भवन्तौ वानरं सैन्यं प्रविश्यानुपलक्षितौ ।
परिमाणं च वीर्यं च ये च मुख्याः प्लवङ्गमाः ।।

रामस्य व्यवसायं च वीर्यं प्रहरणानि च ।
लक्ष्मणस्य च वीरस्य तत्त्वतो ज्ञातुमर्हथः ।। 25.7

इति प्रतिसमादिष्टौ राक्षसौ शुकसारणौ ।
हरिरूपधरौ वीरौ प्रविष्टौ वानरं बलम् ।।

ततस्तद् वानरं सैन्यमचिन्त्यं लोमहर्षणम् ।
संख्यातुं नाध्यगच्छेतां तदा तौ शुकसारणौ ।।

तत्स्थितं पर्वताग्रेषु निर्झरेषु गुहासु च ।
समुद्रस्य च तीरेषु वनेषूपवनेषु च ।
तरमाणं च तीर्णं च तर्तुकामं च सर्वशः ।।

तौ ददर्श महातेजाः प्रतिच्छन्नौ विभीषणः ।
आचचक्षे स रामाय गृहीत्वा शुकसारणौ ।।

तस्यैतौ राक्षसेन्द्रस्य मन्त्रिणौ शुकसारणौ ।
लङ्कायाः समनुप्राप्तौ चारौ परपुरञ्जय ।।

तौ दृष्ट्वा व्यथितौ रामं निराशौ जीविते तथा ।
कृताञ्जलिपुटौ भीतौ वचनं चेदमूचतुः ।।

आवामिहागतौ सौम्य रावणप्रहितावुभौ ।
परिज्ञातुं बलं सर्वं तदिदं रघुनन्दन ।।

तयोस्तद् वचनं श्रुत्वा रामो दशरथात्मजः ।
अब्रवीत् प्रहसन् वाक्यं सर्वभूतहिते रतः ।।

प्रविश्य महतीं लङ्कां भवद्भ्यां धनदानुजः ।
वक्तव्यो रक्षसां राजा यथोक्तं वचनं मम ।।

यद् बलं त्वं समाश्रित्य सीतां मे हृतवानसि ।
तद् दर्शय यथाकामं ससैन्यश्च सबान्धवः ।। 25.23

क्रोधं भीममहं मोक्ष्ये ससैन्ये त्वयि रावण ।
श्वः काल्ये वज्रवान् वज्रं दानवेष्विव वासवः ।।

इति प्रतिसमादिष्टौ राक्षसौ शुकसारणौ ।
आगम्य नगरीं लङ्कां अब्रूतां राक्षसाधिपम् ।।

दृष्ट्वा धर्मात्मना मुक्तौ रामेणामिततेजसा ।
एकस्थानगता यत्र चत्वारः पुरुषर्षभाः ।।

लोकपालसमाः शूराः कृतास्त्रा दृढविक्रमाः ।
रामो दाशरथिः श्रीमान् लक्ष्मणश्च विभीषणः ।।

सुग्रीवश्च महातेजा महेन्द्रसमविक्रमः ।
एते शक्ताः पुरीं लङ्कां सप्राकारां सतोरणाम् ।।

वधिष्यति पुरीं लङ्कामेकस्तिष्ठन्तु ते त्रयः ।
रामलक्ष्मणगुप्ता सा सुग्रीवेण च वाहिनी ।
बभूव दुर्धर्षतरा सर्वैरपि सुरासुरैः ।।

प्रहृष्टयोध्या ध्वजिनी महात्मनां वनौकसां संप्रति योद्धुमिच्छताम् ।
अलं विरोधेन शमो विधीयतां प्रदीयतां दाशरथाय मैथिलीम् ।।

को हि नाम सपत्नो मां समरे जेतुमर्हति ।
इत्युक्त्वा परुषं वाक्यं रावणो राक्षसाधिपः ।।

आरुरोह ततः श्रीमान् प्रासादं हिमपाण्डुरम् ।
बहुतालसमुत्सेधं रावणोऽथ दिदृक्षया ।।

ददर्श पृथिवीदेशं सुसम्पूर्णं प्लवङ्गमैः ।
तदपारमसह्यं च वानराणां महाबलम् ।। 26.7

आलोक्य रावणो राजा परिपप्रच्छ सारणम् ।
एषां के वानरा मुख्याः के शूराः के महाबलाः ।।

सर्वे महाराज महाप्रभावाः सर्वे महाशैलनिकाशकायाः ।
सर्वे समर्थाः पृथिवीं क्षणेन कर्तुं प्रविध्वस्तविकीर्णशैलाम् ।।

सारणस्य वचः श्रुत्वा रावणं राक्षसाधिपम् ।
बलमादिश्य तत्सर्वं शुको वाक्यमथाब्रवीत् ।।

एषां कोटिसहस्राणि नवपञ्च च सप्त च ।
तथा शङ्कुसहस्राणि तथा वृन्दशतानि च ।।

एते सुग्रीवसचिवाः किष्किन्धानिलयाः सदा ।
हरयो देवगन्धर्वैरुत्पन्नाः कामरूपिणः ।।

यो भिन्द्याद् गगनं बाणैर्मेदिनीं वापि दारयेत् ।
यस्य मृत्योरिव क्रोधः शक्रस्येव पराक्रमः ।।

यस्य भार्या जनस्थानात् सीता चापि हृता त्वया ।
स एष रामस्त्वां राजन् योद्धुं समभिवर्तते ।।

एषो हि लक्ष्मणो नाम भ्रातुः प्रियहिते रतः ।
नये युद्धे च कुशलः सर्वशस्त्रभृतां वरः ।।

अमर्षी दुर्जया जेता विक्रान्तश्च जयी बली ।
रामस्य दक्षिणो बाहुर्नित्यं प्राणो बहिश्चरः ।।

विभीषणेन वीरेण सचिवैः परिवारितः ।
सुग्रीवो वानरेन्द्रस्त्वां युद्धार्थमनुवर्तते ।
महाबलवृतो नित्यं महाबलपराक्रमः ।। 28.41

इमां महाराज समीक्ष्य वाहिनीमुपस्थिता प्रज्वलितग्रहोपमाम् ।
ततः प्रयत्नः परमो विधीयतां यथाजयः स्यान्नपरैः पराभवः ।।

किञ्चिदाविग्नहृदयो जातक्रोधश्च रावणः ।
भर्त्सयामास तौ वीरौ कथान्ते शुकसारणौ ।।

ततस्तमक्षोभ्यबलं लङ्कायां नृपतेश्चराः ।
सुवेले राघवं शैले निविष्टं प्रत्यवेदयन् ।।

चाराणां रावणः श्रुत्वा प्राप्तं रामं महाबलम् ।
जातोद्वेगोऽभवत् किञ्चित् सचिवानिदमब्रवीत् ।।

मन्त्रिणः शीघ्रमायान्तु सर्वे वै सुसमाहिताः ।
अयं नो मन्त्रकालो हि सम्प्राप्त इति राक्षसाः ।।

मन्त्रयित्वा तु दुर्धर्षः क्षमं यत् तदनन्तरम् ।
विसर्जयित्वा सचिवान् प्रविवेश स्वमालयम् ।।

ततो राक्षसमादाय विद्युज्जिह्वं महाबलम् ।
मायाविनं महामायं प्राविशद् यत्र मैथिली ।।

विद्युज्जिह्वं च मायाज्ञमब्रवीद् राक्षसाधिपः ।
मोहयिष्यावहे सीतां मायया जनकात्मजाम् ।।

शिरो मायामयं गृह्य राघवस्य निशाचर ।
मां त्वं समुपतिष्ठस्व महच्च सशरं धनुः ।।

एवमुक्तस्तथेत्याह विद्युज्जिह्वो निशाचरः ।
दर्शयामास तां मायां सुप्रयुक्तां स रावणे ।। 31.9

एवमुक्तं तु तद् रक्षः शिरस्तत् प्रियदर्शनम् ।
उपनिक्षिप्य सीतायाः क्षिप्रमन्तरधीयत ।।

रावणश्चापि चिक्षेप भास्वरं कार्मुकं महत् ।
त्रिषु लोकेषु विख्यातं रामस्यैतदिति ब्रुवन् ।।

इदं तद् तव रामस्य कार्मुकं ज्यासमावृतम् ।
इह प्रहस्तेनानीतं तं हत्वा निशि मानुषम् ।।

स विद्युज्जिह्वेन सहैव तच्छिरो धनुश्च भूमौ विनिकीर्यमाणः ।
विदेहराजस्य सुतां यशस्विनीं ततोऽब्रवीत् तां भव मे वशानुगा ।।

सा सीता तच्छिरो दृष्ट्वा तच्च कार्मुकमुत्तमम् ।
जगाम जगतीं बाला छिन्ना तु कदली यथा ।।

हा हतास्मि महाबाहो वीरव्रतमनुव्रत ।
इमां ते पश्चिमावस्थां गतास्मि विधवा कृता ।।

साधु घातय मां क्षिप्रं रामस्योपरि रावण ।
समानय पतिं पत्न्या कुरु कल्याणमुत्तमम् ।।

इतीव दुःखसन्तप्ता विललापायतेक्षणा ।
भर्तुः शिरो धनुश्चैव ददर्श जनकात्मजा ।।

विजयस्वार्यपुत्रेति सोऽभिवाद्य प्रसाद्य च ।
न्यवेदयदनुप्राप्तं प्रहस्तं वाहिनीपतिम् ।।

एतच्छ्रुत्वा दशग्रीवो राक्षसप्रतिवेदितम् ।
अशोकवनिकां त्यक्त्वा मन्त्रिणां दर्शनं ययौ ।। 32.38

सीतां तु मोहितां दृष्ट्वा सरमा नाम राक्षसी ।
तां समाश्वासयामास सखी स्नेहेन सुव्रताम् ।।

न हतो राघवः श्रीमान् सीते शत्रुनिबर्हणः ।
एवं प्रयुक्ता रौद्रेण माया मायाविना त्वयि ।।

उत्तीर्य सागरं रामः सह वानरसेनया ।
सन्निविष्टः समुद्रस्य तीरमासाद्य दक्षिणम् ।।

स तां श्रुत्वा विशालाक्षि प्रवृत्तिं राक्षसाधिपः ।
एष मन्त्रयते सर्वैः सचिवैः सह रावणः ।।

इति ब्रुवाणा सरमा राक्षसी सीतया सह ।
सर्वोद्योगेन सैन्यानां शब्दं शुश्राव भैरवम् ।।

तेन शङ्खविमिश्रेण भेरीशब्देन नादिना ।
उपयाति महाबाहू रामः परपुरञ्जयः ।।

तं निनादं निशम्याथ रावणो राक्षसेश्वरः ।
मुहूर्थं ध्यानमास्थाय सचिवानभ्युदैक्षत ।।

अथ तान् सचिवांस्तत्र सर्वानाभाष्य रावणः ।
सभां सन्नादयन् सर्वामित्युवाच महाबलः ।।

यदुक्तवन्तो रामस्य भवन्तस्तन्मया श्रुतम् ।
भवतश्चाप्यहं वेद्मि युद्धे सत्यपराक्रमान् ।
तूष्णीकानीक्षतोऽन्योन्यं विदित्वा गमविक्रमम् ।।

ततस्तु सुमहाप्राज्ञो माल्यवान् नाम राक्षसः ।
रावणस्य वचः श्रुत्वा इति मातामहोऽब्रवीत् ।। 35.6

हीयमानेन कर्तव्यो राज्ञा सन्धिः समेन च ।
न शत्रुमवमन्येत ज्यायान् कुर्वीत विग्रहम् ।।

धर्मो वै ग्रसतेऽधर्मं यदा कृतमभूद् युगम् ।
अधर्मो ग्रसते धर्मं यदा तिष्यः प्रवर्तते ।।

उत्पातान् विविधान् दृष्ट्वा घोरान् बहुविधान् बहून् ।
विनाशमनुपश्यामि सर्वेषां रक्षसामहम् ।।

विष्णुं मन्यामहे रामं मानुषं रूपमास्थितम् ।
न हि मानुष्यमात्रोऽसौ राघवो दृढविक्रमः ।।

येन बद्धः समुद्रे च सेतुः स परमाद्भुतः ।
कुरुष्व नरराजेन सन्धिं रामेण रावण ।
ज्ञात्वावधार्य कर्माणि क्रियतामायतिक्षमम् ।।

तत्तु माल्यवतो वाक्यं हितमुक्तं दशाननः ।
न मर्षयति दुष्टात्मा कालस्य वशमागतः ।।

स बद्ध्वा भ्रुकुटिं वक्त्रे क्रोधस्य वशमागतः ।
अमर्षात् परिवृत्ताक्षो माल्यवन्तमथाऽब्रवीत् ।।

मानुषं कृपणं राममेकं शाखामृगाश्रयम् ।
समर्थं मन्यसे केन त्यक्तं पित्रा वनाश्रयम् ।।

रक्षसामीश्वरं मां च देवानां च भयङ्करम् ।
हीनं मां मन्यसे केन अहीनं सर्वविक्रमैः ।।

स तु तीर्त्वार्णवं रामः सह वानरसेनया ।
प्रतिजानामि ते सत्यं न जीवन् प्रतियास्यति ।। 36.13

रावणस्तु सहामात्यो मन्त्रयित्वा विमृश्य च ।
लङ्कायास्तु तदा गुप्तिं कारयामास राक्षसः ।।

उत्तरस्यां पुरद्वारि व्यादिश्य शुकसारणौ ।
स्वयं चात्र गमिष्यामि मन्त्रिणस्तानुवाच ह ।।

राक्षसं तु विरूपाक्षं महावीर्यपराक्रमम् ।
मध्यमेऽस्थापयद् गुल्मे बहुभिः सह राक्षसैः ।।

एवं विधानं लङ्कायां कृत्वा राक्षसपुङ्गवः ।
कृतकृत्यमिवात्मानं मन्यते कालचोदितः ।।

अध्यारोहन्त शतशः सुवेलं यत्र राघवः ।
ते त्वदीर्घेण कालेन गिरिमारुह्य सर्वतः ।।

लङ्कां राक्षससम्पूर्णां ददृशुर्हरियूथपाः ।
प्राकारवरसंस्थैश्च तथा नीलैश्च राक्षसैः ।।

ततः स रामो हरिवाहिनीपतिः विभीषणेन प्रतिनन्द्य सत्कृतः ।
सलक्ष्मणो यूथपयूथसंयुतः सुवेलपृष्ठे न्यवसद् यथासुखम् ।।

तां रात्रिमुषितास्तत्र सुवेले हरियूथपाः ।
लङ्कायां ददृशुर्वीरा वनान्युपवनानि च ।।

सा पुरी गोपुरैरुच्चैः पाण्डुराम्बुदसन्निभैः ।
काञ्चनेन च शालेन राजतेन च शोभते ।।

यस्यां स्तम्भसहस्रेण प्रासादः समलङ्कृतः ।
कैलासशिखराकारो दृश्यते खमिवोल्लिखन् ।। 39.22

चैत्यः स राक्षसेन्द्रस्य बभूव पुरभूषणम् ।
शतेन रक्षसां नित्यं यः समग्रेण रक्ष्यते ।।

तां समृद्धां समृद्धार्थां लक्ष्मीवान् लक्ष्मणाग्रजः ।
रावणस्य पुरीं रामो ददर्श सह वानरैः ।।

पश्यतां वानरेन्द्राणां राघवस्यापि पश्यतः ।
दर्शनाद् राक्षसेन्द्रस्य सुग्रीवः सहसोत्थितः ।।

क्रोधवेगेन संयुक्तः सत्त्वेन च बलेन च ।
अचलाग्रादथोत्थाय पुप्लुवे गोपुरस्थले ।।

स्थित्वा मुहूर्तं सम्प्रेक्ष्य निर्भयेनान्तरात्मना ।
तृणीकृत्य च तद् रक्षः सोऽब्रवीत् परुषं वचः ।।

लोकनाथस्य रामस्य सखा दासोऽस्मि राक्षस ।
न मया मोक्ष्यसेऽद्य त्वं पार्थिवेन्द्रस्य तेजसा ।।

इत्युक्त्वा सहसोत्पत्य पुप्लुवे तस्य चोपरि ।
आकृष्य मुकुटं चित्रं पातयामास तद्भुवि ।।

मुष्टिप्रहारैश्च तलप्रहारैः ररत्निघातैश्च कराग्रघातैः ।
तौ चक्रतुर्युद्धमसह्यरूपं महाबलौ राक्षसवानरेन्द्रौ ।।

उद्यम्य चान्योन्यमधिक्षिपन्तौ सञ्चक्रमाते बहु युद्धमार्गे ।
व्यायामशिक्षाबलसम्प्रयुक्तौ क्लमं न तौ जग्मतुराशु वीरौ ।। 40.20

अथ हरिवरनाथः प्राप्तसंग्रामकीर्तिर्निशिचरपतिमाजौ योजयित्वा श्रमेण ।
गगनमतिविशालं लङ्घयित्वार्कसूनुर्हरिगणबलमध्ये रामपार्श्वं जगाम ।।

अथ तस्मिन् निमित्तानि दृष्ट्वा लक्ष्मणपूर्वजः ।
सुग्रीवं सम्परिष्वज्य रामो वचनमब्रवीत् ।।

असम्मन्त्र्य मया सार्धं तदिदं साहसं कृतम् ।
एवं साहसयुक्तानि न कुर्वन्ति जनेश्वराः ।।

इदानीं मा कृथा वीर एवं विधमरिन्दम ।
त्वयि किंचित्समापन्ने किं कार्यं सीतया मम ।।

तव भार्यापहर्तारं दृष्ट्वा राघव रावणम् ।
मर्षयामि कथं वीर जानन् विक्रममात्मनः ।।

इत्येवं वादिनं वीरमभिवन्द्य च राघवः ।
तस्मादवातरच्छीघ्रं पर्वताग्रान्महाबलः ।।

अवतीर्य तु धर्मात्मा तस्माच्छैलात् स राघवः ।
परैः परमदुर्धर्षं ददर्श बलमात्मनः ।।

तं विभीषणसुग्रीवौ हनूमाञ्जाम्बवान् नलः ।
ऋक्षराजस्तथा नीलो लक्ष्मणश्चान्वयुस्तदा ।।

लङ्कायास्तूत्तरद्वारं शैलशृङ्गमिवोन्नतम् ।
रामः सहानुजो धन्वी जुगोप च रुरोध च ।।

रावणाधिष्ठितं भीमं वरुणेनेव सागरम् ।
सायुधै राक्षसै र्भीमैरभिगुप्तं समन्ततः ।।

ददर्शायुधजालानि तथैव कवचानि च ।
पूर्वं तु द्वारमासाद्य नीलो हरिचमूपतिः ।। 41 38

अतिष्ठत् सह मैन्देन द्विविदेन च वीर्यवान् ।
अङ्गदो दक्षिणद्वारं जग्राह सुमहाबलः ।।

ऋषभेण गवाक्षेण गजेन गवयेन च ।
हनूमान् पश्मिद्वारं ररक्ष बलवान् कपिः ।।

निपीड्योपनिविष्टाश्च सुग्रीवो यत्र वानरः ।
शासनेन तु रामस्य लक्ष्मणः सविभीषणः ।।

द्वारे द्वारे हरीणां तु कोटिं कोटिं न्यवेशयत् ।
पश्चिमेन तु रामस्य सुषेणः सह जाम्बवान् ।।

अदूरान्मध्यमे गुल्मे तस्थौ बहुबलानुगः ।
ते तु वानरशार्दूलाः शार्दूला इव दंष्ट्रिणः ।
गृहीत्वा द्रुमशैलाग्रान् हृष्टा युद्धाय तस्थिरे ।।

राघवः सन्निवेश्यैवं ससैन्यं रक्षसां वधे ।
विभीषणस्यानुमते राजधर्ममनुस्मरन् ।।

अङ्गदं वालितनयं समाहूयेदमब्रवीत् ।
गत्वा सौम्य दशग्रीवं ब्रूहि मद्वचनात् कपे ।।

बलेन येन वै सीतां मायया राक्षसाधम ।
मामतिक्रामयित्वा त्वं हृतवांस्तन्निदर्शय ।।

अराक्षसमिमं लोकं कर्तास्मि निशितैः शरैः ।
न चेच्छरणमभ्येषि तामादाय तु मैथिलीम् ।।

इत्युक्तः स तु तारेयो रामेणाक्लिष्टकर्मणा ।
जगामाकाशमाविश्य मूर्तिमानिव हव्यवाट् ।। 41.73

सोऽतिपत्य मुहूर्तेन श्रीमान् रावणमन्दिरम् ।
ददर्शासीनमव्यग्रं रावणं सचिवैः सह ।।

दूतोऽहं कोसलेन्द्रस्य रामस्याक्लिष्टकर्मणः ।
वालिपुत्रोऽङ्गदो नाम यदि ते श्रोत्रमागतः ।।

हन्तास्मि त्वां सहामात्यं सपुत्रज्ञातिबान्धवम् ।
निरुद्विग्नास्त्रयो लोका भविष्यन्ति हते त्वयि ।।

विभीषणस्य चैश्वर्यं भविष्यति हते त्वयि ।
न चेत्सत्कृत्य वैदेहीं प्रणिपत्य प्रदास्यसि ।।

इत्येवं परुषं वाक्यं ब्रुवाणे हरिपुङ्गवे ।
अमर्षवशमापन्नो निशाचरगणेश्वरः ।।

ततःस रोषमापन्नः शशास सचिवांस्तदा ।
गृह्यतामिति दुर्मेधा वध्यतामिति चासकृत् ।।

रावणस्य वचः श्रुत्वा दीप्ताग्निमिव तेजसा ।
जगृहुस्तं ततो घोराश्चत्वारो रजनीचराः ।।

स तान् बाहुद्वयासक्तानादाय पतगानिव ।
प्रासादं शैलसंकाशमुत्पपाताङ्गदस्तदा ।।

तस्योत्पतनवेगेन निर्धूतास्तत्र राक्षसाः ।
भूमौ निपतिताः सर्वे राक्षसेन्द्रस्य पश्यतः ।।

व्यथयन् राक्षसान् सर्वान् हर्षयंश्चापि वानरान् ।
स वानराणां मध्ये तु रामपार्श्वमुपागतः ।। 41.91

रावणस्तु परं चक्रे क्रोधं प्रासादधर्षणात् ।
विनाशं चात्मनः पश्यन् निःश्वासपरमोऽभवत् ।।

ददृशुः राक्षसा दीनाः प्राकारं वानरीकृतम् ।
हाहाकारमकुर्वन्त राक्षसा भयमागताः ।।

रुद्धां तु नगरीं श्रुत्वा जातक्रोधो निशाचरः ।
विधानं द्विगुणं कृत्वा प्रासादं चाप्यरोहत ।।

स चिन्तयित्वा सुचिरं धैर्यमालम्ब्य रावणः ।
राघवं हरियूथांश्च ददर्शायतलोचनः ।।

दृष्ट्वा दाशरथिर्लङ्कां चित्रध्वजपताकिनीम् ।
जगाम सहसा सीतां दूयमानेन चेतसा ।।

निपीड्यमानां धर्मात्मा वैदेहीमनुचिन्तयन् ।
क्षिप्रमाज्ञापयद् रामो वानरान् द्विषतां वधे ।।

ततः सहस्रयूथाश्च कोटियूथाश्च यूथपाः ।
कोटियूथशताश्चान्ये लङ्कामारुरुहस्तदा ।।

जयत्यतिबलो रामो लक्ष्मणश्च महाबलः ।
राजा जयति सुग्रीवो राघवेणाभिपालितः ।।

इत्येवं घोषयन्तश्च गर्जन्तश्च प्लवङ्गमाः ।
अभ्यधावन्त लङ्कायाः प्राकारं कामरूपिणः ।।

दक्षिणद्वारमासाद्य वीरः शतबलिःकपिः ।
आवृत्य बलवांस्तस्थौ विंशत्या कोटिभिर्वृतः ।। 42.25

सुषेणः पश्चिमद्वारं गत्वा तारापिता बली ।
आवृत्य बलवांस्तस्थौ कोटिकोटिभिरावृतः ॥

सन्नद्धस्तु महावीर्यो गदापाणिर्विभीषणः ।
वृतो यत्तैस्तु सचिवैस्तस्थौ यत्र महाबलः ॥

विनेदुश्च महाघोषाः शङ्खाः शतसहस्रशः ।
राक्षसानां सुघोराणां मुखमारुतपूरिताः ॥

गजानां बृंहितैःसार्धं हयानां हेषितैरपि ।
रथानां नेमिनिर्घोषै रक्षसां वदनस्वनैः ॥

एतस्मिन्नन्तरे घोरः संग्रामः समपद्यत ।
रक्षसां वानराणां च यथा देवासुरे पुरा ॥

युध्यतामेव तेषां तु तदा वानररक्षसाम् ।
रविरस्तं गतो रात्रिः प्रवृत्ता प्राणहारिणी ॥

राक्षसोऽसीति हरयो वानरोऽसीति राक्षसाः ।
अन्योन्यं समरे जघ्नुस्तस्मिंस्तमसि दारुणे ॥

सा बभूव निशा घोरा हरिराक्षसहारिणी ।
कालरात्रीव भूतानां सर्वेषां दुरतिक्रमाः ॥

ये त्वन्ये राक्षसा वीरा रामस्याभिमुखे स्थिताः ।
तेऽपि नष्टाः समासाद्य पतङ्गा इव पावकम् ॥

अङ्गदस्तु रणे शत्रून् निहन्तुं समुपस्थितः ।
रावणिं निजघानाशु सारथिं च हयानपि ॥ 44.28

इन्द्रजित्तु रथं त्यक्त्वा हताऽश्वो हतसारथिः ।
अङ्गदेन महायस्तस्तत्रैवान्तरधीयत ।।

तत् कर्म वालिपुत्रस्य सर्वे देवाः सहर्षिभिः ।
तुष्टुवुः पूजनार्हस्य तौ चोभौ रामलक्ष्मणौ ।।

सोऽन्तर्धानगतः पापो रावणी रणकर्शितः ।
ब्रह्मदत्तवरो वीरो रावणिः क्रोधमूर्च्छितः ।।

अदृश्यो निशितान् बाणान् मुमोचाशनिवर्चसः ।
रामं च लक्ष्मणं चैव घोरैर्नागमयैःशरैः ।।

बिभेद समरे क्रुद्धः सर्वगात्रेषु राक्षसः ।
मायया संवृतस्तत्र मोहयन् राघवौ युधि ।।

तौ तेन पुरुषव्याघ्रौ क्रुद्धेनाशीविषैःशरैः ।
सहसाभिहतौ वीरौ तदा प्रेक्षन्त वानराः ।।

पपात प्रथमं रामो विद्धो मर्मसु मार्गणैः ।
क्रोधादिन्द्रजिता येन पुरा शक्रो विनिर्जितः ।।

बाणपातान्तरे रामं पतितं पुरुषर्षभम् ।
स तत्र लक्ष्मणो दृष्ट्वा निराशो जीवितेऽभवत् ।।

रामं कमलपत्राक्षं शरण्यं रणतोषितम् ।
शुशोच भ्रातरं दृष्ट्वा पतितं धरणीतले ।।

बद्धौ तु तौ वीरशये शयानौ ते वानराः सम्परिवार्य तस्थुः ।
समागता वायुसुतप्रमुख्या विषादमार्ताः परमं च जग्मुः ।। 45.28

हर्षेण तु समाविष्ट इन्द्रजित् समितिञ्जयः ।
प्रविवेश पुरीं लङ्कां हर्षयन् सर्व नैर्ऋतान् ।।

तत्र रावणमासाद्य अभिवाद्य कृताञ्जलिः ।
आचचक्षे प्रियं पित्रे निहतौ रामलक्ष्मणौ ।।

स हर्षवेगानुगतान्तरात्मा श्रुत्वा गिरं तस्य महारथस्य ।
जहौ ज्वरं दाशरथेः समुत्थं प्रहृष्टवाचाभिननन्द पुत्रम् ।।

तस्मिन्प्रविष्टे लङ्कायां कृतार्थे रावणात्मजे ।
राघवं परिवार्याथ ररक्षुर्वानरर्षभाः ।।

वीक्षमाणा दिशः सर्वास्तिर्यगूर्ध्वं च वानराः ।
तृणेष्वपि च चेष्टत्सु राक्षसा इति मेनिरे ।।

रावणश्चापि संहृष्टो विसृज्येन्द्रजितं सुतम् ।
आजुहाव ततः सीतारक्षिणी राक्षसीस्तदा ।।

राक्षस्यस्त्रिजटा चापि शासनात् तमुपस्थिताः ।
ता उवाच ततो हृष्टो राक्षसी राक्षसाधिपः ।।

हताविन्द्रजिताख्यात वैदेह्या रामलक्ष्मणौ ।
पुष्पकं तत्समारोप्य दर्शयध्वं रणे हतौ ।।

अशोकवनिकास्थां तां मैथिलीं समुपानयन् ।
तामादाय तु राक्षस्यो भर्तृशोकपराजिताम् ।।

सीतामारोपयामासुर्विमानं पुष्पकं तदा ।
ततःसीता ददर्शोभौ शयानौ शरतल्पगौ ।। 47.19

लक्ष्मणं चैव रामं च विसंज्ञौ शरपीडितौ ।
दुःखार्ता करुणं सीता सुभृशं विललाप ह ।।

सबाष्पशोकाभिहता समीक्ष्य तौ भ्रातरौ देवसुतप्रभावौ ।
वितर्कयन्ती निधनं तयोः सा दुःखान्विता वाक्यमिदं जगाद ।।

ऊचुर्लाक्षणिका ये मां पुत्रिण्यविंधवेति च ।
तेऽद्य सर्वे हते रामे ज्ञानिनोऽनृतवादिनः ।।

परिदेवयमानां तां राक्षसी त्रिजटाब्रवीत् ।
मा विषादं कृथा देवि भर्तायं तव जीवति ।।

इदं विमानं वैदेहि पुष्पकं नाम नामतः ।
दिव्यं त्वां धारयन्नेदं यद्येतौ गतजीवितौ ।।

इयं पुनस्ससम्भ्रान्ता निरुद्विग्ना तपस्विनि ।
सेना रक्षति काकुत्स्थौ मया प्रीत्या निवेदितौ ।।

अनृतं नोक्तपूर्वं मे न च वक्ष्यामि मैथिलि ।
चारित्रसुखशीलत्वात् प्रतिष्ठासि मनो मम ।।

प्रायेण गतसत्त्वानां पुरुषाणां गतायुषाम् ।
दृश्यमानेषु वक्त्रेषु परं भवति वैकृतम् ।।

श्रुत्वा तु वचनं तस्याः सीता सुरसुतोपमा ।
कृताञ्जलिरुवाचेमामेवमस्त्विति मैथिली ।।

विमानं पुष्पकं तत्तु संनिवर्त्य मनोजवम् ।
दीना त्रिजटया सीता लङ्कामेव प्रवेशिता ।। 48.35

प्रविश्य सीता बहुवृक्षखण्डां तां राक्षसेन्द्रस्य विहारभूमिम् ।
सम्प्रेक्ष्य संचिन्त्य च राजपुत्रौ परं विषादं समुपाजगाम ।।

एतस्मिन्नन्तरे रामः प्रत्यबुध्यत वीर्यवान् ।
स्थिरत्वात् सत्त्वयोगाच्च शरैः संदानितोऽपि सन् ।।

ततो दृष्ट्वा सरुधिरं निषण्णं गाढमर्पितम् ।
भ्रातरं दीनवदनं पर्यदेवयदातुरः ।।

शक्या सीतासमा नारी मर्त्यलोके विचिन्वता ।
न लक्ष्मणसमो भ्राता सचिवः साम्परायिकः ।।

किं नु वक्ष्यामि कौसल्यां मातरं किं नु कैकयीम् ।
कथमम्बां सुमित्रां च पुत्रदर्शनलालसाम् ।।

त्वं नित्यं सुविषण्णं मामाश्वयसि लक्ष्मण ।
गतासुर्नाद्य शक्तोऽसि मामार्तमभिभाषितुम् ।।

कृतं सुग्रीव तत्सर्वं भवता धर्मभीरुणा ।
मित्रकार्यं कृतमिदं भवद्भिर्वानरर्षभाः ।।

अनुज्ञाता मया सर्वे यथेष्टं गन्तुमर्हथ ।
शुश्रुवुस्तस्य ये सर्वे वानराः परिदेवितम् ।।

ततो मुहूर्ताद् गरुडं वैनतेयं महाबलम् ।
वानरा ददृशुः सर्वे ज्वलन्तमिव पावकम् ।।

तमागतमभिप्रेक्ष्य नागास्ते विप्रदुद्रुवुः ।
यैस्तु तौ पुरुषौ बद्धौ शरभूतैर्महाबलैः ।। 50.37

ततःसुपर्णःकाकुत्स्थौ स्पृष्ट्वा प्रत्यभिनन्द्य च ।
विममर्श च पाणिभ्यां मुखे चन्द्रसमप्रभे ।।

तेजो वीर्यं बलं चौज उत्साहश्च महागुणाः ।
प्रदर्शनं च बुद्धिश्च स्मृतिश्च द्विगुणा तयोः ।।

तावुत्थाप्य महातेजा गरुडो वासवोपमौ ।
उभौ च सस्वजे हृष्टो रामश्चैनमुवाच ह ।।

अहं सखा ते काकुत्स्थ प्रियःप्राणो बहिश्चरः ।
गरुत्मानिह सम्प्राप्तो युवयोः साह्यकारणात् ।।

नेमं मोक्षयितुं शक्ताः शरबन्धं सुदारुणम् ।
मायाबलादिन्द्रजिता निर्मितं क्रूरकर्मणा ।।

एते नागाः काद्रवेयास्तीक्ष्णदंष्ट्रा विषोल्बणाः ।
रक्षोमायाप्रभावेण शरभूतास्त्वदाश्रयाः ।।

इमं श्रुत्वा तु वृत्तान्तं त्वरमाणोऽहमागतः ।
सहसैवावयोः स्नेहात् सखित्वमनुपालयन् ।।

प्रकृत्या राक्षसाः सर्वे संग्रामे कूटयोधिनः ।
शूराणां शुद्धभावानां भवतामार्जवं बलम् ।।

तन्न विश्वसनीयं वो राक्षसानां रणाजिरे ।
एतेनैवोपमानेन नित्यं जिह्मा हि राक्षसाः ।।

बालवृद्धावशेषां तु लङ्कां कृत्वा शरोर्मिभिः ।
रावणं तु रिपुं हत्वा सीतां त्वमुपलप्स्यसे ।। 50.58

प्रदक्षिणं ततःकृत्वा परिष्वज्य च वीर्यवान् ।
जगामाकाशमाविश्य सुपर्णः पवनो यथा ।।

ततो भेरीः समाजघ्नुर्मृदङ्गांश्चाप्यवादयन् ।
दध्मुः शङ्खान् संप्रहृष्टाः क्ष्वेलयन्त्यपि यथापुरम् ।।

तेषां तु तुमुलं शब्दं वानराणां महौजसाम् ।
नर्दतां राक्षसैः सार्धं तदा शुश्राव रावणः ।।

ज्ञायतां तूर्णमेतेषां सर्वेषां च वनौकसाम् ।
शोककाले समुत्पन्ने हर्षकारणमुत्थितम् ।।

तथोक्तास्ते सुसम्भ्रान्ताः प्रकारमधिरुह्य च ।
ददृशुः पालितां सेनां सुग्रीवेण महात्मना ।।

तौ च मुक्तौ सुघोरेण शरबन्धेन राघवौ ।
समुत्थितौ महाभागौ विषेदुः सर्वराक्षसाः ।।

तदप्रियं दीनमुखा रावणस्य च राक्षसाः ।
कृत्स्नं निवेदयामासुर्यथावद् वाक्यकोविदाः ।।

यौ ताविन्द्रजिता युद्धे भ्रातरौ रामलक्ष्मणौ ।
निबद्धौ शरबन्धेन निष्प्रकम्पभुजौ कृतौ ।।

तदस्त्रबन्धमासाद्य यदि मुक्तौ रिपू मम ।
संशयस्थमिदं सर्वमनुपश्याम्यहं बलम् ।।

एवमुक्त्वा तु संक्रुद्धो निःश्वसन्नुरगो यथा ।
अब्रवीद् रक्षसां मध्ये धूम्राक्षं नाम राक्षसम् ।। 51.18

बलेन महता युक्तो रक्षसां भीमविक्रम ।
त्वं वधायाशु निर्याहि रामस्य सह वानरैः ।।

एवमुक्तस्तु धूम्राक्षो राक्षसेन्द्रेण धीमता ।
परिक्रम्य ततःशीघ्रं निर्जगाम नृपालयात् ।।

हयैःपरमशीघ्रैश्च गजैश्चैव मदोत्कटैः ।
निर्ययुर्नैर्ऋतव्याघ्रा व्याघ्रा इव दुरासदाः ।।

ततःसुभीमो बहुभिर्निशाचरैः वृतोऽभिनिष्क्रम्य रणोत्सुको बली ।
ददर्श तां राघवबाहुपालितां महौघकल्पां बहु वानरीं चमूम् ।।

तद् बभूवाद्भुतं घोरं युद्धं वानररक्षसाम् ।
शिलाभिर्विविधाभिश्च बहुशाखैश्च पादपैः ।।

वानरैः पातयन्तस्ते वेगिता वेगवत्तरैः ।
मुष्टिभिश्चरणैर्दन्तैः पादपैश्चावपोथिताः ।।

सैन्यं तु विद्रुतं दृष्ट्वा धूम्राक्षो राक्षसर्षभः ।
रोषेण कदनं चक्रे वानराणां युयुत्सताम् ।।

केचिद् विनिहता भूमौ रुधिरार्द्रा वनौकसः ।
केचिद् विद्राविता नष्टाः संक्रुद्धै राक्षसैर्युधि ।।

स भङ्क्त्वा तु रथं तस्य हनूमान् मारुतात्मजः ।
रक्षसां कदनं चक्रे सस्कन्धविटपैर्द्रुमैः ।।

तस्य क्रुद्धस्य रोषेण गदां तां बहुकण्टकाम् ।
पातयामास धूम्राक्षो मस्तकेऽथ हनूमतः ।। 52.34

धूम्राक्षस्य शिरो मध्ये गिरिशृङ्गमपातयत् ।
स विस्फारितसर्वाङ्गो गिरिशृङ्गेण ताडितः ।।

पपात सहसा भूमौ विकीर्ण इव पर्वतः ।
धूम्राक्षं निहतं दृष्ट्वा हतशेषा निशाचराः ।।
त्रस्ताः प्रविविशुर्लङ्कां वध्यमाना प्लवङ्गमैः ।।

धूम्राक्षं निहतं श्रुत्वा रावणो राक्षसेश्वरः ।
क्रोधेन महताऽऽविष्टो निःश्वसन्नुरगो यथा ।।

दीर्घमुष्णं विनिःश्वस्य क्रोधेन कलुषीकृतः ।
अब्रवीद् राक्षसं क्रूरं वज्रदंष्ट्रं महाबलम् ।।

गच्छ त्वं वीर निर्याहि राक्षसैः परिवारितः ।
जहि दाशरथिं रामं सुग्रीवं वानरैः सह ।।

तथेत्युक्त्वा द्रुततरं मायावी राक्षसेश्वरः ।
निर्जगाम बलैः सार्धं बहुभिः परिवारितः ।।

निःसृता दक्षिणद्वारादङ्गदो यत्र यूथपः ।
तेषां निष्क्रममाणानामशुभं समजायत ।।

ततःप्रवृत्तं तुमुलं हरीणां राक्षसैः सह ।
घोराणां भीमरूपाणामन्योन्यवधकाङ्क्षिणाम् ।।

तलैश्च चरणैश्चापि मुष्टिभिश्च द्रुमैरपि ।
जानुभिश्चूर्णिताः केचिद् वानरैर्युद्धदुर्मदैः ।।

भूमिर्भाति रणे तत्र शारदीव यथा निशा ।
अङ्गदस्य च वेगेन तद् राक्षसबलं महत् ।
प्राकम्पत तदा तत्र पवनेनाम्बुदो यथा ।। 54.32

रुधिरोद्गारिणौ तौ तु प्रहारैर्जनितश्रमौ ।
बभूवतुः सुविक्रान्तावङ्गारकबुधाविव ।।

निर्मलेन सुधौतेन खड्गेनास्य महच्छिरः ।
जघान वज्रदंष्ट्रस्य वालिसूनुर्महाबलः ।।

वज्रदंष्ट्रं हतं दृष्ट्वा राक्षसा भयमोहिताः ।
त्रस्ता ह्यभ्यद्रवँल्लङ्कां वध्यमानां प्लवङ्गमैः ।
विषण्णवदना दीना ह्रिया किंचिदवाङ्मुखाः ।।

वज्रदंष्ट्रं हतं श्रुत्वा वालिपुत्रेण रावणः ।
बलाध्यक्षमुवाचेदं कृताञ्जलिमुपस्थितम् ।।

शीघ्रं निर्यान्तु दुर्धर्षा राक्षसा भीमविक्रमाः ।
अकम्पनं पुरस्कृत्य सर्वशास्त्रास्त्रकोविदम् ।।

रथमास्थाय विपुलं तप्तकाञ्चनभूषणम् ।
मेघाभो मेघवर्णश्च मेघस्वनमहास्वनः ।।

राक्षसैः संवृतो घोरैस्तदा निर्यात्यकम्पनः ।
न हि कम्पयितुं शक्यः सुरैरपि महामृधे ।।

ततः प्रचलिताश्वेन रथेन रथिनो वरः ।
हरीनभ्यपतद् दूराच्छरजालैरकम्पनः ।।

न स्थातुं वानराः शेकुः किं पुनर्योद्धुमाहवे ।
अकम्पनशरैर्भग्नाः सर्व एवाभिदुद्रुवुः ।।

तान् मृत्युवशमापन्नानकम्पनशरानुगान् ।
समीक्ष्य हनुमाञ्ज्ञातीनुपतस्थे महाबलः ।। 56.8

अकम्पनस्तु शैलाभं हनूमन्तमवस्थितम् ।
महेन्द्र इव धाराभिः शरैरभिववर्ष ह ॥

ततस्तमभिदुद्राव राक्षसेन्द्रमकम्पनम् ।
पुरा हि नमुचिं संख्ये वज्रेणेव पुरन्दरः ॥

अकम्पनस्तु तद् दृष्ट्वा गिरिशृङ्गं समुद्यतम् ।
दूरादेव सहबाणैरर्धचन्द्रैर्व्यदारयत् ॥

ततोऽन्यं वृक्षमुत्पाट्य कृत्वा वेगमनुत्तमम् ।
शिरस्यभिजघानाशु राक्षसेन्द्रमकम्पनम् ॥

स वृक्षेण हतस्तेन सक्रोधेन महात्मना ।
राक्षसो वानरेन्द्रेण पपात च ममार च ॥

त्यक्तप्रहरणाःसर्वे राक्षसास्ते पराजिताः ।
लङ्कामभिययुस्त्रासाद् वानरैस्तैरभिद्रुताः ॥

अपूजयन् देवगणास्तदा कपिं स्वयं च रामोऽतिबलश्च लक्ष्मणः ।
तथैव सुग्रीवमुखाः प्लवंगमा विभीषणश्चैव महाबलस्तदा ॥

अकम्पनवधं श्रुत्वा क्रुद्धो वै राक्षसेश्वरः ।
किंचिद् दीनमुखश्चापि सचिवांस्तानुदैक्षत ॥

स तु ध्यात्वा मुहूर्तं तु मन्त्रिभिः संविचार्य च ।
उवाचात्महितं काले प्रहस्तं युद्धकोविदम् ॥

अहं वा कुम्भकर्णो वा त्वं वा सेनापतिर्मम ।
इन्द्रजिद्वा निकुम्भो वा वहेयुर्भारमीदृशम् ॥ 57.6

स त्वं बलमतः शीघ्रमादाय परिगृह्य च ।
विजयायाभिनिर्याहि यत्र सर्वे वनौकसः ।।

ततः प्रहस्तः कपिराजवाहिनीमभिप्रतस्थे विजयाय दुर्मतिः ।
विवृद्धवेगां च विवेश तां चमूं यथा मुमूर्षुः शलभो विभावसुम् ।।

महता हि शरौघेण राक्षसो रणदुर्मदः ।
अर्दयामास संक्रुद्धो वानरान् परमाहवे ।।

नीलाय व्यसृजद् बाणान् प्रहस्तो वाहिनीपतिः ।
ते प्राप्य विशिखा नीलं विनिर्भिद्य समाहिताः ।।

एवमेव प्रहस्तस्य शरवर्षान् दुरासदान् ।
निमीलिताक्षः सहसा नीलःसेहे दुरासदान् ।।

विक्रान्तविजयौ वीरौ समरेष्वनिवर्तिनौ ।
काङ्क्षमाणौ यशः प्राप्तुं वृत्रवासवयोरिव ।।

तस्य युद्धाभिकामस्य मृधे मुसलयोधिनः ।
प्रहस्तस्य शिलां नीलो मूर्ध्नि तूर्णमपातयत् ।।

नीलेन कपिमुख्येन विमुक्ता महती शिला ।
बिभेद बहुधा घोरा प्रहस्तस्य शिरस्तदा ।।

स गतासुर्गतश्रीको गतसत्त्वो गतेन्द्रियः ।
पपात सहसा भूमौ छिन्नमूल इव द्रुमः ।।

गत्वा तु रक्षोधिपतेः शशंसुः सेनापतिं पावकसूनुशस्तम् ।
तच्चापि तेषां वचनं निशम्य रक्षाधिपः क्रोधवशं जगाम ।। 59.2

नावज्ञा रिपवे कार्या यैरिन्द्रबलसादनः ।
सूदितः सैन्यपालो मे सानुयात्रः सकुञ्जरः ।।

सोऽहं रिपुविनाशाय विजयायाविचारयन् ।
स्वयमेव गमिष्यामि रणशीर्षं तदद्भुतम् ।।

स एवमुक्त्वा ज्वलनप्रकाशं रथं तुरङ्गोत्तमराजियुक्तम् ।
प्रकाशमानं वपुषा ज्वलन्तं समारुरोहामरराजशत्रुः ।।

तद् राक्षसानीकमतिप्रचण्डमालोक्य रामो भुजङ्गेन्द्रबाहुः ।
विभीषणं शस्त्रभृतां वरिष्टमुवाच सेनानुगतःपृथुश्रीः ।।

यत्रैतदिन्द्रप्रतिमं विभातिच्छत्रं सितं सूक्ष्मशलाकमग्र्यम् ।
अत्रैष रक्षोधिपतिर्महात्मा भूतैर्वृतो रुद्र इवावभाति ।।

प्रत्युवाच ततो रामो विभीषणमरिन्दमः ।
अहो दीप्तमहातेजा रावणो राक्षसेश्वरः ।।

दिष्ट्यामद्य पापात्मा मम दृष्टिपथं गतः ।
अद्य क्रोधं विमोक्ष्यामि सीताहरणसंभवम् ।।

एवमुक्त्वा ततो रामो धनुरादाय वीर्यवान् ।
लक्ष्मणानुचरस्तस्थौ समुद्धृत्य शरोत्तमम् ।।

ते वानरेन्द्रास्त्रिदशाविबाणैर्भिन्ना निपेतुर्भुवि भीमकायाः ।
ततस्तु तद् वानरसैन्यमुग्रं प्रच्छादयामास स बाणजालैः ।।

ते वध्यमानाः पतिताश्च वीरा नानाद्यमाना भयशल्यविद्धाः ।
शाखामृगा रावणसायकार्ता जग्मुः शरण्यं शरण्यं स्म रामम् ।। 59.45

स रावणं वारणहस्तबाहुं ददर्श भीमोद्यतदीपचापम् ।
प्रच्छादयन्तं शरवृष्टिजालैस्तान् वानरान् भिन्नविकीर्णदेहान् ।।

तमालोक्य महातेजा हनूमान् मारुतात्मजः ।
निवार्य शरजालानि विदुद्राव स रावणम् ।।

आजघान च संक्रुद्धस्तलेनैवामरद्विषम् ।
ततः स तेनाभिहतो वानरेण महात्मना ।।

दशग्रीवः समाधूतो यथा भूमितलेऽचलः ।
साधु वानर वीर्येण श्लाघनीयोऽसि मे रिपुः ।
रावणेनैवमुक्तस्तु मारुतिर्वाक्यमब्रवीत् ।।

धिगस्तु मम वीर्यस्य यत् त्वं जीवसि रावण ।
सकृत् तु प्रहरेदानीं दुर्बुद्धे किं विकत्थसे ।।

संरक्तनयनो यत्नान्मुष्टिमावृत्य दक्षिणम् ।
पातयामास वेगेन वानरोरसि वीर्यवान् ।।

हनूमान् वक्षसि व्यूढे संचचाल पुनः पुनः ।
विह्वलं तु तदा दृष्ट्वा हनूमन्तं महाबलम् ।।

रथेनातिरथः शीघ्रं नीलं प्रति समभ्यगात् ।
राक्षसानामधिपतिर्दशग्रीवः प्रतापवान् ।।

सोऽस्त्रमुक्तेन बाणेन नीलो वक्षसि ताडितः ।
निर्दह्यमानः सहसा स पपात महीतले ।।

विसंज्ञं वानरं दृष्ट्वा दशग्रीवो रणोत्सुकः ।
रथेनाम्बुदनादेन सौमित्रिमभिदुद्रुवे ।। 59.92

तमाह सौमित्रिरदीनसत्त्वो विस्फारयन्तं धनुरप्रमेयम् ।
अवेहि मामद्य निशाचरेन्द्र न वानरांस्त्वं प्रतियोद्धुमर्हसि ।।

जानामि वीर्यं तव राक्षसेन्द्र बलं प्रतापं च पराक्रमं च ।
अवस्थितोऽहं शरचापपाणिरागच्छ किं मोघविकत्थनेन ।।

स बाणवर्षं तु ववर्ष तीव्रं रामानुजः कार्मुकसम्प्रयुक्तम् ।
क्षुरार्धचन्द्रोत्तमकर्णिभल्लैः शरांश्च चिच्छेद न चुक्षुभे च ।।

स तान् प्रचिच्छेद हि राक्षसेन्द्रः शिताञ्शरांल्लक्ष्मणमाजघान ।
शरेण कालाग्निसमप्रभेण स्वयंभुदत्तेन ललाटदेशे ।।

निकृत्तचापं त्रिभिराजधान बाणैस्तदा दाशरथिः शिताग्रैः ।
स सायकार्तो विचचाल राजा कृच्छ्राच्च संज्ञां पुनराससाद ।।

स शक्तिमाञ्शक्तिसमाहतः सन् जज्वाल भूमौ स रघुप्रवीरः ।
तं विह्वलन्तं सहसाभ्युपेत्य जग्राह राजा तरसा भुजाभ्याम् ।।

हिमवान् मन्दरो मेरुस्त्रैलोक्यं वा सहामरैः ।
शक्यं भुजाभ्यामुद्धर्तुं न शक्यो भरतानुजः ।।

ततः क्रुद्धो वायुसुतो रावणं समभिद्रवत् ।
आजघनोरसि क्रुद्धो वज्रकल्पेन मुष्टिना ।।

तेन मुष्टिप्रहारेण रावणो राक्षसेश्वरः ।
जानुभ्यामगमद् भूमौ चचाल च पपात च ।।

आनयद् राघवाभ्यां बाहुभ्यां परिगृह्य तम् ।
वायुसूनोः सुहृत्वेन भक्त्या परमया च सः ।
शत्रूणामप्यकम्प्योऽपि लघुत्वमगमत् कपेः ।। 59.119

तं समुत्सृज्य सा शक्तिः सौमित्रिं युधि निर्जितम् ।
रावणस्य रथे तस्मिन् स्थानं पुनरुपागमत् ।।

निपातितमहावीरं वानराणां महाचमूम् ।
राघवस्तु रणे दृष्ट्वा रावणं समभिद्रवत् ।।

अथैनमनुसंक्रम्य हनूमान् वाक्यमब्रवीत् ।
मम पृष्ठं समारुह्य राक्षसं शास्तुमर्हसि ।।

अथारुरोह सहसा हनूमन्तं महाकपिम् ।
रथस्थं रावणं संख्ये ददर्श मनुजाधिपः ।।

ज्याशब्दमकरोत् तीव्रं वज्रनिष्पेषनिष्ठुरम् ।
गिरा गम्भीरया रामो राक्षसेन्द्रमुवाच ह ।।

यदीन्द्रवैवस्वतभास्करान् वा स्वयंभुवैश्वानरशंकरान् वा ।
गमिष्यसि त्वं दशधा दिशो वा तथापि मे नाद्य गतो विमोक्ष्यसे ।।

एतेन चात्यद्भुतदर्शनानि शरैर्जनस्थानकृतालयानि ।
चतुर्दशान्यात्तवरायुधानि रक्षः सहस्राणि निषूदितानि ।।

रोषेण महताऽऽविष्टः पूर्ववैरमनुस्मरन् ।
आजघान शरैर्दीप्तैः कालानलशिखोपमैः ।।

ततो रामो महातेजा रावणेन कृतव्रणम् ।
दृष्ट्वा प्लवगशार्दूलं क्रोधस्य वशमेयिवान् ।।

तस्याभिसंक्रम्य रथं सचक्रं साश्वध्वजच्छत्रमहापताकम् ।
ससारथिं साशनिशूलखड्गं रामः प्रचिच्छेद शितैः शराग्रैः ।। 59.137

यो वज्रपाताशनिसंनिपातान्न चुक्षुभे नापि चचाल राजा ।
स रामबाणाभिहतो भृशार्तश्चचाल चापं च मुमोच वीरः ।।

तं निर्विषाशीविषसंनिकाशं शान्तार्चिषं सूर्यमिवप्रकाशम् ।
गतश्रियं कृत्तकिरीटकूटमुवाच रामो युधि राक्षसेन्द्रम् ।।

कृतं त्वया कर्म महत् सुभीमं हतप्रवीरश्च कृतस्त्वयाऽहम् ।
तस्मात् परिश्रान्त इति व्यवस्य न त्वां शरैर्मृत्युवशं नयामि ।।

प्रयाहि जानामि रणार्दितस्त्वम् प्रविश्य रात्रिंचर राज लङ्काम् ।
आश्वस्य निर्याहि रथी च धन्वी तदा बलं प्रेक्ष्यसि मे रथस्थः ।।

स एवमुक्तो हतदर्पहर्षो निकृत्तचापः स हताश्वसूतः ।
शरार्दितो भग्नमहाकिरीटो विवेश लङ्कां सहसा स्म राजा ।।

स प्रविश्य पुरीं लङ्कां रामबाणभयार्दितः ।
भग्नदर्पस्तदा राजा बभूव व्यथितेन्द्रियः ।।

स काञ्चनमयं दिव्यमाश्रित्य परमासनम् ।
विप्रेक्षमाणो रक्षांसि रावणो वाक्यमब्रवीत् ।।

ब्रह्मदण्डप्रतीकानां विद्युच्चलितवर्चसाम् ।
स्मरन् राघवबाणानां विव्यथे राक्षसेश्वरः ।।

इदं तद् ब्रह्मणो घोरं वाक्यं मामभ्युपस्थितम् ।
मानुषेभ्यो विजानीहि भयं त्वमिति तत्तथा ।।

तमिमं मानुषं मन्ये रामं दशरथात्मजम् ।
इक्ष्वाकुकुलजातेन अनरण्येन यत् पुरा ।। 60.8

उत्पतस्यति हि मद्वंशपुरुषो राक्षसाधम ।
यस्त्वां सपुत्रं सामात्यं सबलं साश्वसारथिम् ।।

निहनिष्यति संग्रामे त्वां कुलाधम दुर्मते ।
शप्तोऽहं वेदवत्या च यथा सा धर्षिता पुरा ।।

सेयं सीता महाभागा जाता जनकनन्दिनी ।
उमा नन्दीश्वरश्चापि रम्भा वरुणकन्यका ।।

यथोक्तास्तन्मया प्राप्तं न मिथ्या ऋषिभाषितम् ।
एतदेव समागम्य यत्नं कर्तुमिहार्हथ ।।

निद्रावशसमाविष्टः कुम्भकर्णो विबोध्यताम् ।
सुखं स्वपिति निश्चिन्तः कामोपहतचेतनः ।।

ते रावणसमादिष्टा मांसशोणितभोजनाः ।
गन्धं माल्यं महद्भक्ष्यमादाय सहसा ययुः ।।

तां प्रविश्य महाद्वारां सर्वतो योजनायताम् ।
कुम्भकर्णगुहां रम्यां पुष्पगन्धप्रवाहिनीम् ।।

दशराक्षससाहस्रं युगपत्पर्यवारयत् ।
नीलाञ्जनचयाकारं ते तु तं प्रत्यबोधयन् ।।

मुद्गरैर्मुसलैश्चापि सर्वप्राणसमुद्यतैः ।
तेन नादेन महता लङ्का सर्वा प्रपूरिता ।
सपर्वतवना सर्वा सोऽपि नैव प्रबुध्यते ।।

वारणानां सहस्रं च शरीरेऽस्य प्रधावितम् ।
कुम्भकर्णस्तदा बुद्ध्वा स्पर्शं परमबुध्यत ।। 60.55

ततस्त्वदर्शयन् सर्वान् भक्ष्यांश्च विविधान् बहून् ।
वराहान् महिषांश्चैव बभक्ष समहाबलः ।।

स सर्वान् सान्त्वयामास नैर्ऋतान् नैर्ऋतर्षभः ।
बोधनाद् विस्मितश्चापि राक्षसानिदमब्रवीत् ।।

किमर्थमहमादृत्य भवद्भिः प्रतिबोधितः ।
कच्चित् सुकुशलं राज्ञो भयं वो नेह किञ्चन ।।

न ह्यल्पकारणे सुप्तं बोधयिष्यति मादृशम् ।
तदाख्यातार्थतत्त्वेन मत्प्रबोधनकारणम् ।।

एवं ब्रुवाणं संरब्धं कुम्भकर्णमरिन्दमम् ।
यूपाक्षः सचिवो राज्ञः कृताञ्जलिरभाषत ।।

द्रष्टुं त्वां काङ्क्षते राजा सर्वराक्षसपुङ्गवः ।
गमने क्रियतां बुद्धिर्भ्रातरं सम्प्रहर्षय ।।

कुम्भकर्णो बभौ रुष्टः कालान्तकयमोपमः ।
भ्रातुः स भवनं गच्छन् रक्षोबलसमन्वितः ।
कुम्भकर्णः पदन्यासैरकम्पयत मेदिनीम् ।।

अथ दृष्ट्वा दशग्रीवः कुम्भकर्णमुपस्थितम् ।
तूर्णमुत्थाय संहृष्टः संनिकर्षमुपानयत् ।।

अथासीनस्य पर्यङ्के कुम्भकर्णो महाबलः ।
भ्रातुर्ववन्दे चरणौ किं कृत्यमिति चाब्रवीत् ।।

सुषुप्तस्त्वं न जानीषे मम रामकृतं भयम् ।
एष दाशरथिः श्रीमान् सुग्रीवसहितो बली ।। 62.14

सेतुना सुखमागत्य वानरैकार्णवं कृतम् ।
ये राक्षसा मुख्यतमा हतास्ते वानरैर्युधि ॥

सर्वक्षपितकोशं च स त्वमभ्युपपद्य माम् ।
त्रायस्वेमां पुरीं लङ्कां बालवृद्धावशेषिताम् ॥

तस्य राक्षसराजस्य निशम्य परिदेवितम् ।
कुम्भकर्णो बभाषेदं वचनं प्रजहास च ॥

यः पश्चात्पूर्वकार्याणि कुर्यादैश्वर्यमास्थितः ।
पूर्वं चोत्तरकार्याणि न स वेद नयानयौ ॥

काले धर्मार्थकामान् यः सम्मन्त्र्य सचिवैः सह ।
निषेवेतात्मवाँल्लोके न स व्यसनमाप्नुयात् ॥

विनाशयन्तो भर्तारं सहिताः शत्रुभिर्बुधैः ।
विपरीतानि कृत्यानि कारयन्तीह मन्त्रिणः ॥

यदुक्तमिह ते पूर्वं प्रियया मेऽनुजेन च ।
तदेव नो हितं वाक्यं यथेच्छसि तथा कुरु ॥

अस्मिन् काले तु यद् युक्तं तदिदानीं विचिन्त्यताम् ।
गतं तु नानुशोचन्ति गतं तु गतमेव हि ॥

नैतन्मनसि कर्तव्यं मयि जीवति पार्थिव ।
तमहं नाशयिष्यामि यत् कृते परितप्यते ॥

अवश्यं तु हितं वाच्यं सर्वावस्थं मया तव ।
बन्धुभावादभिहितं भ्रातृस्नेहाच्च पार्थिव ॥ 63.33

मां निहत्य किल त्वां हि निहनिष्यति राघवः ।
नाहमात्मनि संतापं गच्छेयं राक्षसाधिप ।।

एवमुक्तवतो वाक्यं कुम्भकर्णस्य धीमतः ।
प्रत्युवाच ततो वाक्यं प्रहसन् राक्षसाधिपः ।।

कश्चिन्मे त्वत्समो नास्ति सौहृदेन बलेन च ।
गच्छ शत्रुवधाय त्वं कुम्भकर्ण जयाय च ।।

भ्रातरं सम्परिष्वज्य कृत्वा चापि प्रदक्षिणम् ।
प्रणम्य शिरसा तस्मै प्रतस्थे स महाबलः ।।

कुम्भकर्णः सुसंक्रुद्धो गदामुद्यम्य वीर्यवान् ।
धर्षयन् स महाकायः समन्ताद् व्यक्षिपद् रिपून् ।।

शतानि सप्त चोष्टौ च सहस्राणि च वानराः ।
प्रकीर्णाः शेरते भूमौ कुम्भकर्णेन ताडिताः ।।

हनूमाञ्शैलश्रृङ्गाणि शिलाश्च विविधान् द्रुमान् ।
ववर्ष कुम्भकर्णस्य शिरस्यम्बरमास्थितः ।।

तानि पर्वतश्रृङ्गाणि शूलेन स बिभेद ह ।
बभञ्ज वृक्षवर्षं च कुम्भकर्णो महाबलः ।।

अनेकशो वध्यमानाः कुम्भकर्णेन वानराः ।
राघवं शरणं जग्मुर्व्यथिता भिन्नचेतसः ।।

तस्मिन् काले सुमित्रायाः पुत्रः परबलार्दनः ।
चकार लक्ष्मणः क्रुद्धो युद्धं परपुरञ्जयः ।। 67.100

स कुम्भकर्णस्य शराञ्शरीरे सप्त वीर्यवान् ।
निचखानाददे चान्यान् विससर्ज च लक्ष्मणः ।।

ततः स राक्षसो भीमः सुमित्रानन्दवर्धनम् ।
सावज्ञमेव प्रोवाच वाक्यं मेघौघनिःस्वनः ।।

अद्य त्वयाहं सौमित्रे बालेनापि पराक्रमैः ।
तोषितो गन्तुमिच्छामि त्वामनुज्ञाप्य राघवम् ।।

यत् तु वीर्यबलोत्साहैस्तोषितोऽहं रणे त्वया ।
राममेवैकमिच्छामि हन्तुं यस्मिन् हते हतम् ।।

रामे मयात्र निहते येऽन्ये स्थास्यन्ति संयुगे ।
तानहं योधयिष्यामि स्वबलेन प्रमाथिना ।।

अतिक्रम्य च सौमित्रिं कुम्भकर्णो महाबलः ।
राममेवाभिदुद्राव कम्पयन्निव मेदिनीम् ।।

अथ दाशरथी रामो रौद्रमस्त्रं प्रयोजयन् ।
कुम्भकर्णस्य हृदये ससर्ज निशिताञ्शरान् ।।

रामास्त्रविद्धो घोरं वै नर्दन् राक्षसपुङ्गवः ।
अभ्यधावत संक्रुद्धो हरीन् विद्रावयन् रणे ।।

तस्योरसि निभग्नास्ते शरा बर्हिणवाससः ।
हस्ताच्चास्य परिभ्रष्टा गदा चोर्व्यां पपात ह ।।

आयुधानि च सर्वाणि विप्रकीर्यन्त भूतले ।
स निरायुधमात्मानं यदा मेने महाबलः ।। 67.120

मुष्टिभ्यां च कराभ्यां च चकार कदनं महत् ।
स बाणैरतिविद्धाङ्गः क्षतजेन समुक्षितः ।
रुधिरं परिसुस्राव गिरिः प्रस्रवणं यथा ॥

अथ शृङ्गं समाविध्य भीमं भीमपराक्रमः ।
चिक्षेप राममुद्दिश्य बलवानन्तकोपमः ॥

ततस्तु रामो धर्मात्मा तस्य शृङ्गं महत् तदा ।
शरैः काञ्चनचित्राङ्गैश्चिच्छेद भरताग्रजः ॥

ततस्तु वातोद्धतमेघकल्पं भुजङ्गराजोत्तमभोगबाहुः ।
तमापतन्तं धरणीधराभमुवाच रामो युधि कुम्भकर्णम् ॥

आगच्छ रक्षोऽधिप मा विषादमवस्थितोऽहं प्रगृहीतचापः ।
अवेहि मां राक्षसवंशनाशनं यस्त्वं मुहूर्ताद् भविता विचेताः ॥

कुम्भकर्णो महातेजा राघवं वाक्यमब्रवीत् ।
पश्य मे मुद्गरं भीमं सर्वं कालायसं महत् ।
अनेन निर्जिता देवा दानवाश्च पुरा मया ॥

दर्शयेक्ष्वाकुशार्दूल वीर्यं गात्रेषु मेऽनघ ।
ततस्त्वां भक्षयिष्यामि दृष्टपौरुषविक्रमम् ॥

तं तस्य बाहुं सहतालवृक्षं समुद्यतं पन्नगभोगकल्पम् ।
ऐन्द्रास्त्रयुक्तेन जघान रामो बाणेन जाम्बूनदचित्रितेन ॥

तद् रामबाणाभिहतं पपात रक्षः शिरः पर्वतसंनिकाशम् ।
बभञ्ज चर्यागृहगोपुराणि प्राकारमुच्चं तमपातयच्च ॥ 67.170

तस्मिन् हते ब्राह्मणदेवशत्रौ महाबले संयति कुम्भकर्णे ।
चचाल भूर्भूमिधराश्च सर्वे हर्षाश्च देवास्तुमुलं प्रणेदुः ।।

स कुम्भकर्णं सुरसैन्यमर्दनं महत्सु युद्धेषु कदाचनाजितम् ।
ननन्द हत्वा भरताग्रजो रणे महासुरं वृत्रमिवामराधिपः ।।

कुम्भकर्णं हतं दृष्ट्वा राघवेण महात्मना ।
राक्षसा राक्षसेन्द्राय रावणाय न्यवेदयन् ।।

श्रुत्वा विनिहतं संख्ये कुम्भकर्णं महाबलम् ।
रावणः शोकसंतप्तो मुमोह च पपात च ।।

हा वीर रिपुदर्पघ्न कुम्भकर्ण महाबल ।
त्वं मां विहाय वै दैवाद् यातोऽसि यमसादनम् ।।

विभीषणवचस्तावत् कुम्भकर्णप्रहस्तयोः ।
विनाशोऽयं समुत्पन्नो मां व्रीडयति दारुणः ।।

तस्यायं कर्मणः प्राप्तो विपाको मम शोकदः ।
यन्मया धार्मिकः श्रीमान् स निरस्तो विभीषणः ।।

ततोऽहमहमित्येवं गर्जन्तो नैर्ऋतर्षभाः ।
रावणस्य सुता वीराः शक्रतुल्यपराक्रमाः ।।

अन्तरिक्षगताः सर्वे सर्वे मायाविशारदाः ।
सर्वे त्रिदशदर्पघ्नाः सर्वे समरदुर्मदाः ।।

सर्वौषधीभिर्गन्धैश्च समालभ्य महाबलाः ।
निर्जग्मुर्नैर्ऋतश्रेष्टाः षडेते युद्धकाङ्क्षिणः ।। 69.18

स्वबलं व्यथितं दृष्ट्वा तुमुलं लोमहर्षणम् ।
भ्रातॄंश्च निहतान् दृष्ट्वा शक्रतुल्यपराक्रमान् ।।

चुकोप च महातेजा ब्रह्मदत्तवरो युधि ।
अतिकायोऽद्रिसंकाशो देवदानवदर्पहा ।।

स भास्करसहस्रस्य संघातमिव भास्वरम् ।
रथमारुह्य शक्रारिरभिदुद्राव वानरान् ।।

ते तस्य रूपमालोक्य यथा विष्णोस्त्रिविक्रमे ।
भयाद् वानरयोधास्ते विद्रवन्ति ततस्ततः ।।

तेऽतिकायं समासाद्य वानरा मूढचेतसः ।
शरण्यं शरणं जग्मुर्लक्ष्मणाग्रजमाहवे ।।

स तं दृष्ट्वा महाकायं राघवस्तु सुविस्मितः ।
वानरान् सान्त्वयित्वाच विभीषणमुवाच ह ।।

कोऽसौ पर्वतसंकाशो धनुष्मान् हरिलोचनः ।
युक्ते हयसहस्रेण विशाले स्यन्दने स्थितः ।।

स पृष्टो राजपुत्रेण रामेणामिततेजसा ।
आचचक्षे महातेजा राघवाय विभीषणः ।।

दशग्रीवो महातेजा राजा वैश्रवणानुजः ।
भीमकर्मा महात्मा हि रावणो राक्षसेश्वरः ।।

तस्यासीद् वीर्यवान् पुत्रो रावणप्रतिमो बले ।
वृद्धसेवी श्रुतिधरः सर्वास्त्रविदुषां वरः ।। 71.28

यस्य बाहुं समाश्रित्य लङ्का भवति निर्भया ।
तनयं धान्यमालिन्या अतिकायमिमं विदुः ।।

ततोऽतिकायो बलवान् प्रविश्य हरिवाहिनीम् ।
विस्फारयामास धनुर्ननाद च पुनः पुनः ।।

तेऽर्दिता बाणवर्षेण भिन्नगात्राः पराजिताः ।
न शेकुरतिकायस्य प्रतिकर्तुं महाहवे ।।

क्रुद्धः सौमित्रिरुत्पत्य तूणादाक्षिप्य सायकम् ।
पुरस्तादतिकायस्य विचकर्ष महद्धनुः ।।

ततोऽतिकायः कुपितश्चापमारोप्य सायकम् ।
लक्ष्मणाय प्रचिक्षेप संक्षिपन्निव चाम्बरम् ।।

स ताञ्छित्वा शितैर्बाणैर्लक्ष्मणः परवीरहा ।
आददे निशितं बाणं ज्वलन्तमिव तेजसा ।।

पूर्णायतविसृष्टेन शरेण नतपर्वणा ।
ललाटे राक्षसश्रेष्टमाजघान स वीर्यवान् ।।

राक्षसः प्रचकम्पेऽथ लक्ष्मणेषुप्रपीडितः ।
रुद्रबाणहतं घोरं यथा त्रिपुरगोपुरम् ।।

तेऽतिकायं समासाद्य कवचे वज्रभूषिते ।
भग्नाग्रशल्याः सहसा पेतुर्बाणा महीतले ।।

तान्मोघानभिसंप्रेक्ष्य लक्ष्मणः परवीरहा ।
अभ्यवर्षत बाणानां सहस्रेण महायशाः ।। 71.96

न शशाक रुजं कर्तुं युधि तस्य नरोत्तमः ।
अथैनमभ्युपागम्य वायुर्वाक्यमुवाच ह ।।

ब्रह्मदत्तवरो ह्येष अवध्यकवचावृतः ।
ब्राह्मणास्त्रेण भिन्ध्येनमेष वध्यो हि नान्यथा ।
अवध्य एष ह्यन्येषामस्त्राणां कवची बली ।।

ततस्तु वायोर्वचनं निशम्य सौमित्रिरिन्द्रप्रतिमानवीर्यः ।
समादधे बाणमथोग्रवेगं तद् ब्राह्ममस्त्रं सहसा नियुज्य ।।

तं लक्ष्मणोत्सृष्टविवृद्धवेगं समापतन्तं श्वसनोग्रवेगम् ।
सुपर्णवज्रोत्तमचित्रपुङ्खं तदातिकायः समरे ददर्श ।।

तच्छिरः सशिरस्त्राणं लक्ष्मणेषुप्रमर्दितम् ।
पपात सहसा भूमौ श्रृङ्गं हिमवतो यथा ।।

अतिबलमतिकायमभ्रकल्पं युधि विनिपात्य स लक्ष्मणः प्रहृष्टः ।
त्वरितमथ तदा स रामपार्श्वं कपिनिवहैश्च सुपूजितो जगाम ।।

अतिकायं हतं श्रुत्वा लक्ष्मणेन महात्मना ।
उद्वेगमगमद् राजा वचनं चेदमब्रवीत् ।।

ये योधा निर्गताः शूरा राक्षसा मम शासनात् ।
ते सर्वे निहता युद्धे वानरैः सुमहाबलैः ।।

यस्य विक्रममासाद्य राक्षसा निधनं गताः ।
तं मन्ये राघवं वीरं नारायणमनामयम् ।।

ततौ हतांस्तान् सहसा निशम्य राजा महाबाष्पपरिप्लुताक्षः ।
पुत्रक्षयं भ्रातृवधं च घोरं विचिन्त्य राजा विपुलं प्रदध्यौ ।। 73.2

ततस्तु राजानमुदीक्ष्य दीनं शोकार्णवे सम्परिपुप्लुवानम् ।
रथर्षभो राक्षसराजसूनुस्तमिन्द्रजिद् वाक्यमिदं बभाषे ।।

न तात मोहं परिगन्तुमर्हसे यत्रेन्द्रजिज्जीवति नैर्ऋतेश ।
नेन्द्रारिबाणाभिहतो हि कश्चित् प्राणान् समर्थः समरेऽभिपातुम् ।।

इमां प्रतिज्ञां शृणु शक्रशत्रोः सुनिश्चितां पौरुषदैवयुक्ताम् ।
अद्यैव रामं सहलक्ष्मणेन संतर्पयिष्यामि शरैरमोघैः ।।

स एवमुक्त्वा त्रिदशेन्द्रशत्रुरापृच्छ्य राजानमदीनसत्त्वः ।
समारुरोहानिलतुल्यवेगं रथं खरश्रेष्ठसमाधियुक्तम् ।।

समास्थाय महातेजा रथं हरिरथोपमम् ।
जगाम सहसा तत्र यत्र युद्धमरिन्दमः ।।

स पावकं पावकदीप्ततेजा हुत्वा महेन्द्रप्रतिमप्रभावः ।
स चापबाणासिरथाश्वसूतः खेऽन्तर्दधेऽऽत्मानमचिन्त्यवीरः ।।

शरेणैकेन च हरीन् नव पञ्च च सप्त च ।
बिभेद समरे क्रुद्धो राक्षसान् सम्प्रहर्षयन् ।।

स वै गदाभिः हरियूथमुख्यान् निर्भिद्य बाणैस्तपनीयवर्णैः ।
ववर्ष रामं शरवृष्टिजालैः स लक्ष्मणं भास्कररश्मिकल्पैः ।।

स बाणवर्षैरभिवृष्यमाणो धारानिपातानिव तानचिन्त्य ।
समीक्षमाणः परमाद्भुतश्री रामस्तदा लक्ष्मणमित्युवाच ।।

स्वयंभुवा दत्तवरो महात्मा समाहितोऽन्तर्हितभीमकायः ।
कथं नु शक्यो युधि नष्टदेहो निहन्तुमद्येन्द्रजिदुद्यतास्त्रः ।। 73.69

ततस्तु ताविन्द्रजितोऽस्त्रजालैर्बभूवतुस्तत्र तदा विशस्तौ ।
स चापि तौ तत्र विषादयित्वा ननाद हर्षाद् युधि राक्षसेन्द्रः ।।

ततस्तदा वानरसैन्यमेव रामं च संख्ये सहलक्ष्मणेन ।
निषादयित्वा सहसा विवेश पुरीं दशग्रीव भुजाभिगुप्ताम् ।
संस्तूयमानः स तु यातुधानैः पित्रे च सर्वं हृषितोऽभ्युवाच ।।

ततो विषण्णं समवेक्ष्य सर्वे विभीषणो बुद्धिमतां वरिष्ठः ।
उवाच शाखामृगराजवीरान् आश्वासयन्नप्रतिमैर्वचोभिः ।।

मा भैष्ट नास्त्यत्र विषादकालो यदार्यपुत्रौ ह्यवशौ विषण्णौ ।
स्वयंभुवो वाक्यमथोद्वहन्तौ यत्सादिताविन्द्रजितास्त्रजालैः ।।

ब्राह्ममस्त्रं ततो धीमान् मानयित्वा तु मारुतिः ।
विभीषणवचः श्रुत्वा हनूमानिदमब्रवीत् ।।

अस्मिन्नस्त्रहते सैन्ये वानराणां तरस्विनाम् ।
यो यो धारयते प्राणांस्तं तमाश्वासयावहे ।।

तावुभौ युगपद् वीरौ हनूमद्राक्षसोत्तमौ ।
उल्कहस्तौ तदा रात्रौ रणशीर्षे विचेरतुः ।।

स्वभावजरया युक्तं वृद्धं शरशतैश्चितम् ।
प्रजापतिसुतं वीरं शाम्यन्तमिव पावकम् ।।

दृष्ट्वा समभिसंक्रम्य पौलस्त्यो वाक्यमब्रवीत् ।
कच्चिदार्य शरैस्तीक्ष्णैर्न प्राणा ध्वंसितास्तव ।।

विभीषणवचः श्रुत्वा जाम्बवानृक्षपुङ्गवः ।
कृच्छ्रादभ्युद्गिरन् वाक्यमिदं वचनमब्रवीत् ।। 74.16

नैर्ऋतेन्द्र महावीर्य स्वरेण त्वाभिलक्षये ।
विद्धगात्रः शितैर्बाणैर्न त्वां पश्यामि चक्षुषा ।।

अञ्जना सुप्रजा येन मातरिश्वा च सुव्रत ।
हनूमान् वानरश्रेष्टः प्राणान् धारयते क्वचित् ।।

श्रुत्वा जाम्बवतो वाक्यमुवाचेदं विभीषणः ।
आर्यपुत्रावतिक्रम्य कस्मात् पृच्छसि मारुतिम् ।।

विभीषणवचः श्रुत्वा जाम्बवान् वाक्यमब्रवीत् ।
श्रुणु नैर्ऋतशार्दूल यस्मात् पृच्छामि मारुतिम् ।।

अस्मिञ्जीवति वीरे तु हतमप्यहतं बलम् ।
हनूमत्युज्झितप्राणे जीवन्तोऽपि मृता वयम् ।।

ततो वृद्धमुपागम्य विनयेनाभ्यवादयत् ।
गृह्य जाम्बवतः पादौ हनूमान् मारुतात्मजः ।।

ततोऽब्रवीन्महातेजा हनूमन्तं स जाम्बवान् ।
आगच्छ हरिशार्दूल वानरान्स्त्रातुमर्हसि ।।

गत्वा परममध्वानमुपर्युपरि सागरम् ।
हिमवन्तं नगश्रेष्ठं हनूमन् गन्तुमर्हसि ।।

तस्य वानरशार्दूल चतस्त्रो मूर्ध्नि सम्भवाः ।
द्रक्ष्यस्यौषधयो दीप्ता दीपयन्तीर्दिशो दश ।।

ताः सर्वा हनुमन् गृह्य क्षिप्रमागन्तुमर्हसि ।
आश्वास्य हरीन् प्राणैर्योज्य गन्धवहात्मज ।। 74.34

आरुरोह तदा तस्माद्धरिर्मलयपर्वतम् ।
नमस्कृत्वा समुद्राय मारुतिर्भीमविक्रमः ।
राघवार्थे परं कर्म समीहत परन्तपः ॥

आदित्यपथामाश्रित्य जगाम स गतश्रमः ।
हनूमांस्त्वरितो वीरः पितुस्तुल्यपराक्रमः ॥

स योजनसहस्राणि समतीत्य महाकपिः ।
दिव्यौषधिधरं शैलं व्यचरन्मारुतात्मजः ॥

स तस्य शृङ्गं सनगं सनागं सकाञ्चनं धातुसहस्रजुष्टम् ।
विकीर्णकूटं ज्वलिताग्रसानुं प्रगृह्य वेगात् सहसोन्ममाथ ॥

स तं समुत्पाट्य खमुत्पपात वित्रास्य लोकान् ससुरासुरेन्द्रान् ।
संस्तूयमानःखचरैरनेकैर्जगाम वेगाद् गरुडोग्रवेगः ॥

ततो महात्मा निपपात तस्मिन् शैलोत्तमे वानरसैन्यमध्ये ।
हर्युत्तमेभ्यः शिरसाभिवाद्य विभीषणं तत्र च सस्वजे सः ॥

सर्वे विशल्या विरुजाः क्षणेन हरिप्रवीराश्च हताश्च ये स्युः ।
गन्धेन तासां प्रवरौषधीनां सुप्ता निशान्तेष्विव संप्रबुद्धाः ॥

ततो हरिर्गन्धवहात्मजस्तु तमोषधीशैलमुदग्रवेगः ।
निनाय वेगाद्धिमवन्तमेव पुनश्च रामेण समाजगाम ॥

ततोऽब्रवीत् महातेजाः सुग्रीवो वानरेश्वरः ।
अर्थ्यं विज्ञापयंश्चापि हनूमन्तमिदं वचः ॥

ये ये महाबलाः सन्ति लघवश्च प्लवङ्गमाः ।
लङ्कामाभिपतन्त्वाशु गृहोल्काः प्लवगर्षभाः ॥ 75.3

गोपुराट्टप्रतोलीषु चर्यासु विविधासु च ।
प्रासादेषु च संहृष्टाः ससृजुस्ते हुताशनम् ।।

तेषां गृहसहस्राणि ददाह हुतभुक् तदा ।
प्रासादाः पर्वताकाराः पतन्ति धरणीतले ।।

अशोभत तदा रामो धर्नुविस्फारयन् महत् ।
भगवानिव संक्रुद्धो भवो वेदमयं धनुः ।।

वानरोद्घुष्टघोषश्च राक्षसानां च निःस्वनः ।
ज्याशब्दश्चापि रामस्य त्रयं व्याप्य दिशो दश ।।

तस्य कार्मुकनिर्मुक्तैः शरैस्तत्पुरगोपुरम् ।
कैलासश्रृङ्गप्रतिमं विकीर्णमभवद् भुवि ।।

तेषु वानरमुख्येषु दीप्तोल्कोज्ज्वलपाणिषु ।
स्थितेषु द्वारमाश्रित्य रावणं क्रोधमाविशत् ।।

निपातितमहावीरां दृष्ट्वा रक्षश्चमूं तदा ।
कुम्भः प्रचक्रे तेजस्वी रणे कर्म सुदुष्करम् ।।

अभिदुद्राव सुग्रीवः कुम्भकर्णात्मजं रणे ।
शैलसानुचरं नागं वेगवानिव केसरी ।।

एकस्त्वमनुजातोऽसि पितरं बलवत्तरम् ।
त्वामेवैकं महाबाहुं शूलहस्तमरिन्दमम् ।।

महाविमर्दं समरे मया सह तवाद्भुतम् ।
अद्य भूतानि पश्यन्तु शक्रशम्बरयोरिव ।। 76.77

तेन सुग्रीववाक्येन सावमानेन मानितः ।
अग्नेराज्यहुतस्येव तेजस्तस्याभ्यवर्धत ।।

अन्योन्यगात्रग्रथितौ धर्षन्तावितरेतरम् ।
सधूमां मुखतो ज्वालां विसृजन्तौ परिश्रमात् ।।

ततः कुम्भं समुत्क्षिप्य सुग्रीवो लवणाम्भसि ।
पातयामास वेगेन दर्शयन्नुदधेस्तलम् ।।

अर्चिः सहस्रविकचरविमण्डलवर्चसम् ।
स मुष्टिं पातयापास कुम्भस्योरसि वीर्यवान् ।।

तस्मिन्हते भीमपराक्रमेणप्लवङ्गमानामृषभेण युद्धे ।
मही सशैला सवना चचाल भयं च रक्षांस्यधिकं विवेश ।।

कुपितश्च तदा तत्र किं कार्यमिति चिन्तयन् ।
आदिदेशाथ संक्रुद्धो रणायेन्द्रजितं सुतम् ।।

त्वमप्रतिकर्माणमिन्द्रं जयसि संयुगे ।
किं पुनर्मानुषौ दृष्ट्वा न वधिष्यसि संयुगे ।।

तथोक्तो राक्षसेन्द्रेण प्रतिगृह्य पितुर्वचः ।
यज्ञभूमौ स विधिवत् पावकं जुहुवेन्द्रजित् ।।

हुत्वाग्निं तर्पयित्वाथ देवदानवराक्षसान् ।
आरुरोह रथश्रेष्टमन्तर्धानगतम् शुभम् ।।

अद्य हत्वा रणे यौ तौ मिथ्या प्रव्रजितौ वने ।
जयं पित्रे प्रदास्यामि रावणाय रणेऽधिकम् ।। 80.17

घनान्धकारे तिमिरे शिलावर्षमिवाद्भुतम् ।
स ववर्ष महाबाहुर्नाराचशरवृष्टिभिः ।।

तेनातिविद्धौ तौ वीरौ रुक्मपुङ्खैः सुसंहतैः ।
बभूवतुर्दाशरथी पुष्पिताविव किंशुकौ ।।

लक्ष्मणस्तु ततः क्रुद्धो भ्रातरं वाक्यमब्रवीत् ।
ब्राह्ममस्त्रं प्रयोक्ष्यामि वधार्थं सर्वरक्षसाम् ।।

तमुवाच ततो रामो लक्ष्मणं शुभलक्षणम् ।
नैकस्य हेतो रक्षांसि पृथिव्यां हन्तुमर्हसि ।।

अयुध्यमानं प्रच्छन्नं प्राञ्जलिं शरणागतम् ।
पलायमानं मत्तं वा न हन्तुं त्वमिहार्हसि ।।

इन्द्रजित्तु ततो दृष्ट्वा भ्रातरौ रामलक्ष्मणौ ।
रणायाभ्युद्यतौ वीरौ मायां प्रादुष्करोत् तदा ।।

इन्द्रजित्तु रथे स्थाप्य सीतां मायमयीं तदा ।
बलेन महातावृत्य तस्या वधमरोचयत् ।।

तां स्त्रियं पश्यतां तेषां ताडयामास राक्षसः ।
क्रोशन्तीं राम रामेति मायया योचितां रथे ।।

गृहीतमूर्धजां दृष्ट्वा हनूमान् दैन्यमागतः ।
दुःखजं वारि नेत्राभ्यामुत्सृजन् मारुतात्मजः ।।

तां दृष्ट्वा चारुसर्वाङ्गीं रामस्य महिषीं प्रियाम् ।
अब्रवीत् परुषं वाक्यं क्रोधाद् रक्षोधिपात्मजम् ।। 81.17

सीतां हत्वा तु न चिरं जीवष्यसि कथंचन ।
वधार्हकर्मणा तेन मम हस्तगतो ह्यसि ।।

इति ब्रुवाणो हनुमान् सायुधैर्हरिभिर्वृतः ।
अभ्यधावत् सुसंक्रुद्धो राक्षसेन्द्रसुतं प्रति ।।

स तां बाणसहस्रेण विक्षोभ्य हरिवाहिनीम् ।
हनूमन्तं हरिश्रेष्टमिन्द्रजित् प्रत्युवाच ह ।।

सुग्रीवस्त्वं च रामश्च यन्निमित्तमिहागताः ।
तां वधिष्यामि वैदेहीमद्यैव तव पश्यतः ।।

तमेवमुक्त्वा रुदतीं सीतां मायामयीं च ताम् ।
शितधारेण खड्गेण निजघानेन्द्रजित् स्वयम् ।।

तामिन्द्रजित् स्त्रियं हत्वा हनूमन्तमुवाच ह ।
मया रामस्य पश्येमां प्रियां शस्त्रनिषूदिताम् ।
एषा विशस्ता वैदेही निष्फलो वः परिश्रमः ।।

तथा तु सीतां विनिहत्य दुर्मतिः प्रहृष्टचेताः स बभूव रावणिः ।
तं हृष्टरूपं समुदीक्ष्य वानरा विषण्णरूपाः समभिप्रदुद्रुवुः ।।

शनैः शनैरसंत्रस्तः सबलः संन्यवर्तत ।
ततः प्रेक्ष्य हनूमन्तं व्रजन्तं यत्र राघवः ।।

स होतुकामो दुष्टात्मा गतश्चैत्यं निकुम्भिलाम् ।
निकुम्भिलामधिष्टाय पावकं जुहवेन्द्रजित् ।।

अथायान्तं हनूमन्तं ददर्शर्क्षपतिस्तदा ।
वानरैः कृतसंग्रामैः श्वसद्भिरभिसंवृतम् ।। 83.5

स तेन सह सैन्येन संनिकर्ष महायशाः ।
शीघ्रमागम्य रामाय दुःखितो वाक्यमब्रवीत् ।।

समरे युध्यमानानामस्माकं प्रेक्षतां च सः ।
जघान रुदतीं सीतामिन्द्रजिद् रावणात्मजः ।।

तस्य तद्वचनं श्रुत्वा राघवः शोकमूर्च्छितः ।
निपपात तदा भूमौ छिन्नमूल इव द्रुमः ।।

तं लक्ष्मणोऽथ बाहुभ्यां परिष्वज्य सुदुःखितः ।
उवाच राममस्वस्थं वाक्यं हेत्वर्थसंयुतम् ।।

यद्यधर्मो भवेद् भूतो रावणो नरकं व्रजेत् ।
भवांश्च धर्मसंयुक्तो नैव व्यसनमाप्नुयात् ।।

न धर्मेण वियुज्येरन्नाधर्मरुचयो जनाः ।
धर्मेणाचरतां तेषां तथा धर्मफलं भवेत् ।।

हर्षः कामश्च दर्पश्च धर्मः क्रोधः शमो दमः ।
अर्थादेतानि सर्वाणि प्रवर्तन्ते नराधिप ।।

येषां नश्यत्ययं लोकश्चरतां धर्मचारिणाम् ।
तेऽर्थास्त्वयि न दृश्यन्ते दुर्दिनेषु यथा ग्रहाः ।।

तदद्य विपुलं वीर दुःखमिन्द्रजिताकृतम् ।
कर्मणा व्यपनेष्यामि तस्मादुत्तिष्ठ राघव ।।

राममाश्वसमाने तु लक्ष्मणे भ्रातृवत्सले ।
निक्षिप्य गुल्मान् स्वस्थाने तत्रागच्छद्विभीषणः ।। 84.1

व्रीडितं शोकसंतप्तं दृष्ट्वा रामं विभीषणः ।
अन्तर्दुःखेन दीनात्मा किमेतदिति सोऽब्रवीत् ।।

हता इन्द्रजिता सीता इति श्रुत्वैव राघवः ।
हनूमद्वचनात् सौम्य ततो मोहमुपाश्रितः ।।

कथयन्तं नु सौमित्रिं संनिवार्य विभीषणः ।
पुष्कलार्थमिदं वाक्यं विसंज्ञं राममब्रवीत् ।।

मनुजेन्द्रार्तरूपेण यदुक्तस्त्वं हनूमता ।
तदयुक्तमहं मन्ये सागरस्येव शोषणम् ।।

वानरान् मोहयित्वा तु प्रतियातः स राक्षसः ।
मायामयीं महाबाहो तां विद्धि जनकात्मजाम् ।।

दुराधर्षो भवत्येष संग्रामे रावणात्मजः ।
तेन मोहयता नूनमेषा माया प्रयोजिता ।।

विघ्नमन्विच्छता तत्र वानराणां पराक्रमे ।
ससैन्यास्तत्र गच्छामो यावत्तन्न समाप्यते ।।

तत्संदिश महाबाहो लक्ष्मणं शुभलक्षणम् ।
राक्षसस्य विनाशाय वज्रं वज्रधरो यथा ।।

राघवस्तु रिपोर्ज्ञात्वा मायावीर्यं दुरात्मनः ।
लक्ष्मणं कीर्तिसम्पन्नमिदं वचनमब्रवीत् ।।

जाम्बवेनर्क्षपतिना सह सैन्येन संवृतः ।
जहि तं राक्षससुतं मायाबलसमन्वितम् ।। 85.22

राघवस्य वचः श्रुत्वा लक्ष्मणः सविभीषणः ।
जग्राह कार्मुकश्रेष्ठमन्यद् भीमपराक्रमः ।।

संनद्धः कवची खड्गी सशरी वामचापभृत् ।
रामपादावुपस्पृश्य हृष्टः सौमित्रिरब्रवीत् ।।

अद्यैव तस्य रौद्रस्य शरीरं मामकाः शराः ।
विधमिष्यन्ति भित्त्वा तं महाचापगुणच्युताः ।।

सोऽभिवाद्य गुरोः पादौ कृत्वा चापि प्रदक्षिणम् ।
निकुम्भिलामभिययौ चैत्यं रावणिपालितम् ।।

स गत्वा दूरमध्वानं सौमित्रिर्मित्रनन्दनः ।
राक्षसेन्द्रबलं दूरादपश्यद् व्यूहमाश्रितम् ।।

स सम्प्राप्य धनुष्पाणिर्मायायोगमरिंदमः ।
तस्थौ ब्रह्मविधानेन विजेतुं रघुनन्दनः ।।

अथ तस्यामवस्थायां लक्ष्मणं रावणानुजः ।
परेषामहितं वाक्यं अर्थसाधकमब्रवीत् ।।

तस्यानीकस्य महतो भेदने यत लक्ष्मण ।
राक्षसेन्द्रसुतोऽप्यत्र भिन्ने दृश्यो भीवष्यति ।।

स त्वमिन्द्राशनिप्रख्यैः शरैरवकिरन् परान् ।
अभिद्रवाशु यावद् वै नैतत् कर्म समाप्यते ।।

विभीषणवचः श्रुत्वा लक्ष्मणः शुभलक्षणः ।
ववर्ष शरवर्षेण राक्षसेन्द्रसुतं प्रति ।। 86.6

राक्षसाश्च शितैर्बाणैरसिभिः शक्तितोमरैः ।
अभ्यवर्तन्त समरे कपिसैन्यजिघांसवः ।।

स सम्प्रहारस्तुमुलः संजज्ञे कपिरक्षसाम् ।
शब्देन महता लङ्कां नादयन् वै समन्ततः ।।

वृक्षान्धकारान्निर्गत्य जातक्रोधः स रावणिः ।
आरुरोह रथं सज्जं पूर्वयुक्तं सुसंयतम् ।।

अविदूरं ततो गत्वा प्रविश्य तु महद् वनम् ।
अदर्शयत तत्कर्म लक्ष्मणाय विभीषणः ।।

नीलजीमूतसंकाशं न्यग्रोधं भीमदर्शनम् ।
तेजस्वी रावणभ्राता लक्ष्मणाय न्यवेदयत् ।।

इहोपहारं भूतानां बलवान् रावणात्मजः ।
उपहृत्य ततः पश्चात् संग्राममभिवर्तते ।।

अदृश्यः सर्वभूतानां ततो भवति राक्षसः ।
विहन्ति समरे शत्रून् बध्नाति च शरोत्तमैः ।।

तमपप्रविष्टं न्यग्रोधं बलिनं रावणात्मजम् ।
विध्वंसय शरैर्दीप्तैः सरथं साश्वसारथिम् ।।

स रथेनाग्निवर्णेन बलवान् रावणात्मजः ।
इन्द्रजित् कवची खड्गी सध्वजः प्रत्यदृश्यत ।।

तमुवाच महातेजाः पौलस्त्यमपराजितम् ।
समाह्वये त्वां समरे सम्यग् युद्धं प्रयच्छ मे ।। 87.9

एवमुक्तो महातेजा मनस्वी रावणात्मजः ।
अब्रवीत् परुषं वाक्यं तत्र दृष्ट्वा विभीषणम् ।।

न ज्ञातित्वं न सौहार्दं न जातिस्तव दुर्मते ।
प्रमाणं न च सौदर्यं न धर्मो धर्मदूषण ।।

शोच्यस्त्वमसि दुर्बुद्धे निन्दनीयश्च साधुभिः ।
यस्त्वं स्वजनमुत्सृज्य परभृत्यत्वमागतः ।।

इत्युक्तो भ्रातृपुत्रेण प्रत्युवाच विभीषणः ।
अजानन्निव मच्छीलं किं राक्षस विकत्थसे ।।

परस्वानां च हरणं परदाराभिमर्शनम् ।
सहृदामतिशङ्का च त्रयो दोषाः क्षयावहाः ।।

महर्षीणां वधो घोरः सर्वदेवैश्च विग्रहः ।
अभिमानश्च रोषश्च वैरत्वं प्रतिकूलता ।।

एते दोषा मम भ्रातुर्जीवितैश्वर्यनाशनाः ।
गुणान् प्रच्छादयामासुः पर्वतानिव तोयदाः ।।

दोषैरेतैः परित्यक्तो मया भ्राता पिता तव ।
नेयमस्ति पुरी लङ्का न च त्वं न च ते पिता ।।

युध्यस्य नरदेवेन लक्ष्मणेन रणे सह ।
हतस्त्वं देवताकार्यं करिष्यसि यमक्षयम् ।।

विभिषणवचः श्रुत्वा रावणिः क्रोधमूर्च्छितः ।
अब्रवीत् परुषं वाक्यं क्रोधेनाभ्युत्पपात च ।। 88.1

सृजतः शरवर्षाणि क्षिप्रहस्तस्य संयुगे ।
जीमूतस्येव नदतः कः स्थास्यति ममाग्रतः ।।

तच्छ्रुत्वा राक्षसेन्द्रस्य गर्जितं राघवस्तदा ।
अभीतवदनः क्रुद्धो रावणिं वाक्यमब्रवीत् ।।

यथा बाणपथं प्राप्य स्थितोऽस्मि तव राक्षस ।
दर्शयस्वाद्य तत्तेजो वाचा त्वं किं विकत्थसे ।।

शरैरतिमहावेगैर्वेगवान् रावणात्मजः ।
सौमित्रिमिन्द्रजीद् युद्धे विव्याध शुभलक्षणम् ।।

मुमोच च शरान् घोरान् संगृह्य नरपुङ्गवः ।
अभीतवदनः क्रुद्धो रावणिं लक्ष्मणो युधि ।।

व्यशीर्यत महद्दिव्यं कवचं लक्ष्मणस्य तु ।
कृतप्रतिकृतान्योन्यं बभूवतुररिंदमौ ।।

तौ शरौघैस्तथाकीर्णौ निकृत्तकवचध्वजौ ।
सृजन्तौ रुधिरं चोष्णं जलं प्रस्रवणाविव ।।

सुवर्णपुङ्खैर्नाराचैर्बलवन्तौ कृतव्रणौ ।
प्रसुस्रुवाते रुधिरं कीर्तिमन्तौ जये धृतौ ।।

लक्ष्मणो रावणिं युद्धे रावणिश्चापि लक्ष्मणम् ।
अन्योन्यं तावभिघ्नन्तौ न श्रमं प्रतिपद्यताम् ।। 88.73

अथ समरपरिश्रमं निहन्तुं समरमुखेष्वजितस्य लक्ष्मणस्य ।
प्रियहितमुपपादयन् महात्मा समरमुपेत्य विभीषणोऽवतस्थे ।।

युध्यमानौ ततो दृष्ट्वा प्रसक्तौ नरराक्षसौ ।
प्रभिन्नाविव मातङ्गौ परस्परजयैषिणौ ।।

तयोः समभवद् युद्धमद्भुतं रोमहर्षणम् ।
गगनस्थानि भूतानि लक्ष्मणं पर्यवारयन् ।।

ऋषयः पितरो देवा गन्धर्वगरुडोरगाः ।
शतक्रतुं पुरस्कृत्य ररक्षुर्लक्ष्मणं रणे ।।

अथैन्द्रमस्त्रं सौमित्रिः संयुगेष्वपराजितम् ।
शरश्रेष्ठं धनुश्रेष्ठे विकर्षन्निदमब्रवीत् ।।

लक्ष्मीवाँल्लक्ष्मणो वाक्यमर्थसाधकमात्मनः ।
धर्मात्मा सत्यसंधश्च रामो दाशरथिर्यदि ।
पौरुषे चाप्रतिद्वन्द्वस्तदैनं जहि रावणिम् ।।

इत्युक्त्वा बाणमाकर्णं विकृष्य तमजिह्मगम् ।
लक्ष्मणः समरे वीरः ससर्जेन्द्रजितं प्रति ।
ऐन्द्रास्त्रेण समायुज्य लक्ष्मणः परवीरहा ।।

तच्छिरः सशिरस्त्राणं श्रीमज्ज्वलितकुण्डलम् ।
प्रमथ्येन्द्रजितः कायात् पातयामास भूतले ।।

हतः स निपपाताथ धरण्यां रावणात्मजः ।
कवची सशिरस्त्राणो विप्रविद्धशरासनः ।।

अथान्तरिक्षे देवानामृषीणां च महात्मनाम् ।
जज्ञेऽथ जयसंनादो गन्धर्वाप्सरसामपि ।। 90.75

रुधिरक्लिन्नगात्रस्तु लक्ष्मणः शुभलक्षणः ।
बभूव हृष्टस्तं हत्वा शत्रुजेतारमाहवे ।।

ततो राममभिक्रम्य सौमित्रिरभिवाद्य च ।
तस्थौ भ्रातृसमीपस्थः शक्रस्येन्द्रानुजो यथा ।।

स तं भ्रातरमाश्वास्य परिष्वज्य च राघवः ।
रामः सुषेणं मुदितः समाभाष्येदमब्रवीत् ।।

विशल्योऽयं महाप्राज्ञ सौमित्रिर्मित्रवत्सलः ।
यथा भवति सुस्वस्थस्तथा त्वं समुपाचर ।।

एवमुक्तः स रामेण महात्मा हरियूथपः ।
लक्ष्मणाय ददो नस्तः सुषेणः परमौषधम् ।।

स तस्य गन्धमाघ्राय विशल्यः समपद्यत ।
तदा निर्वेदनश्चैव संरूढव्रण एव च ।।

अपूजयत् कर्म स लक्ष्मणस्य सुदुष्करं दाशरथिर्महात्मा ।
बभूव हृष्टो युधि वानरेन्द्रो निशम्य तं शक्रजितं निपातितम् ।।

ततः पौलस्त्यसचिवाः श्रुत्वा चेन्द्रजितो वधम् ।
आचचक्षुरभिज्ञाय दशग्रीवाय सत्वराः ।।

शूरः शूरेण संगम्य संयुगेष्वपराजितः ।
लक्ष्मणेन हतः शूरः पुत्रस्ते विबुधेन्द्रजित् ।।

उपलभ्य चिरात् संज्ञां राजा राक्षसपुङ्गवः ।
पुत्रशोकाकुलो दीनो विललापाकुलेन्द्रियः ।। 92.5

अद्य लोकास्त्रयः कृत्स्ना पृथिवी च सकानना ।
ऐकेनेन्द्रजिता हीना शून्येव प्रतिभाति मे ॥

स प्रविश्य सभां राजा दीनः परमदुःखितः ।
निषसादासने मुख्ये सिंहः क्रुद्ध इव श्वसन् ॥

अब्रवीच्च स तान् सर्वान् बलमुख्यान् महाबलः ।
रावणः प्राञ्जलिर्वाक्यं पुत्रव्यसनकर्शितः ॥

सर्वे भवन्तः सर्वेण हस्त्यश्वेन समावृताः ।
निर्यान्तु रथसङ्घैश्च पादातैश्चोपशोभिताः ॥

एकं रामं परिक्षिप्य समरे हन्तुमर्हथ ।
वर्षन्तः शरवर्षाणि प्रावृट्काल इवाम्बुदाः ॥

इत्येतद् वाक्यमादाय राक्षसेन्द्रस्य राक्षसाः ।
निर्ययुस्ते रथैः शीघ्रैर्नानानीकैश्च संयुताः ॥

अन्योन्यं समरे जघ्नुस्तदा वानरराक्षसाः ।
एवं प्रवृत्ते संग्रामे ह्यद्भुतं सुमहद्रजः ॥

राक्षसैर्वध्यमानानां वानराणां महाचमूः ।
शरण्यं शरणं याता रामं दशरथात्मजम् ॥

प्रविष्टं तु तदा रामं मेघाः सूर्यमिवाम्बरे ।
नाधिजग्मुर्महाघोरा निर्दहन्तं शराग्निना ॥

न ते ददृशिरे रामं दहन्तमपि वाहिनीम् ।
मोहिताः परमास्त्रेण गान्धर्वेण महात्मना ॥ 93.26

ते तु रामसहस्राणि रणे पश्यन्ति राक्षसाः ।
पुनः पश्यन्ति काकुत्स्थमेकमेव महाहवे ।।

चतुर्दश सहस्राणि सारोहाणां च वाजिनाम् ।
पूर्णे शतसहस्रे द्वे राक्षसानां पदातिनाम् ।।

दिवसस्याष्ट भागेन शरैरग्निशिखोपमैः ।
हतान्येकेन रामेण रक्षसां कामरूपिणाम् ।।

ते हताश्वा हतरथाः शान्ता विमथितध्वजाः ।
अभिपेतुः पुरीं लङ्कां हतशेषा निशाचराः ।।

निहत्य तां राक्षसराजवाहिनीं रामस्तदा शक्रसमो महात्मा ।
अस्त्रेषु शस्त्रेषु जितक्लमश्च संस्तूयते देवगणैः प्रहृष्टैः ।।

आर्तानां राक्षसीनां तु लङ्कायां वै कुले कुले ।
रावणः करुणं शब्दं शुश्राव परिदेवितम् ।।

स तु दीर्घं विनिःश्वस्य मुहूर्तं ध्यानमास्थितः ।
बभूव परमक्रुद्धो रावणो भीमदर्शनः ।।

कल्प्यतां मे रथः शीघ्रं क्षिप्रमानीयतां धनुः ।
अनुप्रयान्तु मां युद्धे येऽवशिष्टा निशाचराः ।।

ततः प्रयातः सहसा राक्षसैर्बहुभिर्वृतः ।
रावणः सत्त्वगाम्भीर्याद् दारयन्निव मेदिनीम् ।।

अन्तरिक्षात् पपातोल्का निर्घातसमनिःस्वना ।
विनेदुरशिवा गृध्रा वायसैरभिमिश्रिताः ।। 95.47

स दिशो दश घोषेण रथस्यातिरथो महान् ।
नादयन् प्रययौ तूर्णं राघवं चाभ्यधावत ।।

तामसं सुमहाघोरं चकारास्त्रं सुदारुणम् ।
निर्ददाह कपीन् सर्वास्ते प्रपेतुः समन्ततः ।।

ततो राक्षसशार्दूलो विद्राव्य हरिवाहिनीम् ।
स ददर्श ततो रामं तिष्ठन्तमपराजितम् ।।

लक्ष्मणेन सह भ्रात्रा विष्णुना वासवं यथा ।
आलिखन्तमिवाकाशमवष्टभ्य महद् धनुः ।।

वानराश्च रणे भग्नानापतन्तं च रावणम् ।
समीक्ष्य राघवो हृष्टो मध्ये जग्राह कार्मुकम् ।।

रावणस्य च बाणौघे रामविस्फारितेन च ।
शब्देन राक्षसास्तेन पेतुश्च शतशस्तदा ।।

एकमेकेन बाणेन त्रिभिस्त्रीन् दशभिर्दश ।
लक्ष्मणस्य प्रचिच्छेद दर्शयन् पाणिलाघवम् ।।

अभ्यतिक्रम्य सौमित्रिं रावणः समितिञ्जयः ।
आससाद रणे रामं स्थितं शैलमिवापरम् ।।

ताञ्शरौघांस्ततो भल्लैस्तीक्ष्णैश्चिच्छेद राघवः ।
दीप्यमानान् महाघोराञ्छरानाशीविषोपमान् ।।

चेरतुश्च चिरं चित्रं मण्डलं सव्यदक्षिणम् ।
बाणवेगात् समुत्क्षिप्तावन्योन्यमपराजितौ ।। 99.26

उभौ हि परमेष्वासावुभौ युद्धविशारदौ ।
उभावस्त्रविदां मुख्यावुभौ युद्धे विचेरतुः ।।

एतास्मिन्नन्तरे क्रुद्धो राघवस्यानुजो बली ।
लक्ष्मणः सायकान् सप्त जग्राह परवीरहा ।।

लक्ष्मणाय समुद्दिश्य ज्वलन्तीमिव तेंजसा ।
रावणः परमक्रुद्धश्चिक्षेप च ननाद च ।।

रावणेन रणे शक्तिः क्रुद्धेनाशीविषोपमा ।
मुक्ता शूरस्यऽभीतस्य लक्ष्मणस्य ममज्ज सा ।।

न्यपतत् सा महावेगा लक्ष्मणस्य महोरसि ।
जिह्वेवोरगराजस्य दीप्यमाना महाद्युतिः ।।

ततो रावणवेगेन सुदूरमवगाढया ।
शक्त्या विभिन्नहृदयः पपात भुवि लक्ष्मणः ।।

तदवस्थं समीपस्थो लक्ष्मणं प्रेक्ष्य राघवः ।
भ्रातृस्नेहान्महातेजा विषण्णहृदयोऽभवत् ।।

न विषादस्य कालोऽयमिति संचिन्त्य राघवः ।
चक्रे सुतुमुलं युद्धं रावणस्य वधे धृतः ।
सर्वयत्नेन महता लक्ष्मणं परिवीक्ष्य च ।।

तां कराभ्यां परामृश्य रामः शक्तिं भयावहाम् ।
बभञ्ज समरे क्रुद्धो बलवान् विचकर्ष च ।।

तस्य निष्कर्षतः शक्तिं रावणेन बलीयसा ।
शराः सर्वेषु गात्रेषु पातिता मर्मभेदिनः ।। 100.44



अरावणमरामं वा जगद्द्रक्ष्यथ वानराः ।

अचिन्तयित्वा तान् बाणान् समाश्लिष्य च लक्ष्मणम् ।
अब्रवीच्च हनूमन्तं सुग्रीवं च महाकपिम् ।।

अस्मिन् मुहूर्ते न चिरात् सत्यं प्रतिश्रुणोमि वः ।
अरावणमरामं वा जगद् द्रक्ष्यथ वानराः ।।

अद्य कर्म करिष्यामि यल्लोकाः सचराचराः ।
सदेवाः कथयिष्यन्ति यावद् भूमिर्धरिष्यति ।
समागम्य सदा लोके यथा युद्धं प्रवर्तितम् ।।

एवमुक्त्वा शितैर्बाणैस्तप्तकाञ्चनभूषणैः ।
आजधान रणे रामो दशग्रीवं समाहितः ।।

शक्त्या निपातितं दृष्ट्वा रावणेन बलीयसा ।
लक्ष्मणं समरे शूरं शोणितौघपरिप्लुतम् ।।

राघवो भ्रातरं दृष्ट्वा प्रियं प्राणं बहिश्चरम् ।
दुःखेन महताविष्टो ध्यानशोकपरायणः ।।

देशे देशे कलत्राणि देशे देशे च बान्धवाः ।
तं तु देशं न पश्यामि यत्र भ्राता सहोदराः ।।

किं नु राज्येन दुर्धर्ष लक्ष्मणेन विना मम ।
कथं वक्ष्याम्यहं त्वम्बां सुमित्रां पुत्रवत्सलाम् ।।

विषण्णस्य महाबाहो समाश्वासयिता मम ।
राममेवं ब्रुवाणं तु शोकव्याकुलितेन्द्रियम् ।।

आश्वासयन्नुवाचेदं सुषेणः परमं वचः ।
न मृतोऽयं महाबाहो लक्ष्मणो लक्ष्मिवर्धनः ।। 101.24

विषादं मा कृथा वीर सप्राणोऽयमरिन्दम ।
आख्याति तु प्रसुप्तस्य स्रस्तगात्रस्य भूतले ।।

सोच्छ्वासं हृदयं वीर कम्पमानं मुहुर्मुहुः ।
एवमुक्त्वा महाप्राज्ञः सुषेणो राघवं वचः ।।

समीपस्थमुवाचेदं हनूमन्तं महाकपिम् ।
सौम्य शीघ्रमितो गत्वा पर्वतं हि महोदयम् ।।

पूर्वं तु कथितो योऽसौ वीर जाम्बवता तव ।
दक्षिणे शिखरे जातां महौषधिमिहानय ।।

संजीवनार्थं वीरस्य लक्ष्मणस्य त्वमानय ।
इत्येवमुक्तो हनुमान् गत्वा चौषधिपर्वतम् ।
चिन्तामभ्यागमच्छ्रीमानजानंस्ता महौषधीः ।।

फुल्लनानातरुगणं समुत्पाद्य महाबलः ।
गृहीत्वा हरिशार्दूलो हस्ताभ्यां समतोलयत् ।।

समागम्य महावेगः संन्यस्य शिखरं गिरेः ।
विश्रम्य किंचिद्धनुमान् सुषेणमिदमब्रवीत् ।।

औषधीर्नावगच्छामि ता अहं हरिपुङ्गव ।
तदिदं शिखरं कृत्स्नं गिरेस्तस्याहृतं मया ।।

ततः संक्षोदयित्वा तामोषधीं वानरोत्तमः ।
लक्ष्मणस्य ददौ नस्तः सुषेणः सुमहाद्युतिः ।।

तमुत्थितं तु हरयो भूतलात्प्रेक्ष्य लक्ष्मणम् ।
साधु साध्विति सुप्रीता लक्ष्मणं प्रत्यपूजयन् ।। 101.46

एह्यहीत्यब्रवीद् रामो लक्ष्मणं परवीरहा ।
सस्वजे गाढमालिङ्ग्य बाष्पपर्याकुलेक्षणः ।।

न हि मे जीवितेनार्थः सीतया च जयेन वा ।
को हि मे जीवितेनार्थस्त्वयि पञ्चत्वमागते ।।

इत्येवं ब्रवतस्तस्य राघवस्य महात्मनः ।
खिन्नः शिथिलया वाचा लक्ष्मणो वाक्यमब्रवीत् ।।

नैराश्यमुपगन्तुं च नालं ते मत्कृतेऽनघ ।
वधेन रावणस्याद्य प्रतिज्ञामनुपालय ।।

अभ्यधावत काकुत्स्थं स्वर्भानुरिव भास्करम् ।
दशग्रीवो रथस्थस्तु रामं वज्रोपमैः शरैः ।
आजघान महाशैलं धाराभिरिव तोयदः ।।

भूमौ स्थितस्य रामस्य रथस्थस्य स रक्षसः ।
न समं युद्धमित्याहुर्देवगन्धर्वकिंनराः ।।

ततो देववरः श्रीमाञ्श्रुत्वा तेषां वचोऽमृतम् ।
आहूय मातलिं शक्रो वचनं चेदमब्रवीत् ।।

रथेन मम भूमिष्ठं शीघ्रं याहि रघूत्तमम् ।
आहूय भूतलं यातः कुरु देवहितं महत् ।।

देवराजेन संदिष्टो रथमारुह्य मातलिः ।
अभ्यवर्तत काकुत्स्थमवतीर्य त्रिविष्टपात् ।।

अब्रवीच्च तदा रामं सप्रतोदो रथे स्थितः ।
प्राञ्जलिर्मातलिर्वाक्यं सहस्राक्षस्य सारथिः ।। 102.13

सहस्राक्षेण काकुत्स्थ रथोऽयं विजयाय ते ।
दत्तस्तव महासत्त्व श्रीमन्शत्रुनिबर्हण ।।

इदमैन्द्रं महच्चापं कवचं चाग्निसंनिभम् ।
शराश्चादित्यसंकाशाः शक्तिश्च विमला शिवा ।।

आरुह्येमं रथं वीर राक्षसं जहि रावणम् ।
मया सारथिना देव महेन्द्र इव दानवान् ।।

इत्युक्तः सम्परिक्रम्य रथं तमभिवाद्य च ।
आरुरोह तदा रामो लोकाँल्लक्ष्म्या विराजयन् ।।

तद्बभौ चाद्भुतं युद्धं द्वैरथं रोमहर्षणम् ।
रामस्य च महाबाहो रावणस्य च रक्षसः ।।

ते राघवधनुर्मुक्ता रुक्मपुङ्खाः शिखिप्रभाः ।
सुपर्णाः काञ्चना भूत्वा विचेरुः सर्पशत्रवः ।।

ततः शरसहस्रेण राममक्लिष्टकारिणम् ।
अर्दयित्वा शरौघेण मातलिं प्रत्यविध्यत ।।

ददृशुस्ते तदा युद्धं लोकसंवर्तसंस्थितम् ।
नानाप्रहरणैर्भीमैः शूरयोः सम्प्रयुध्यतो : ।।

निर्बिभेदोरसि तदा रावणं निशितैः शरैः ।
राघवः परमायत्तो ललाटे पत्रिभिस्त्रिभिः ।।

पूरितः शरजालेन धनुर्मुक्तेन संयुगे ।
महागिरिरिवाकम्प्यः काकुत्स्थो न प्रकम्पते ।। 103.4

ततोऽन्योन्यं सुसंरब्धौ तावुभौ रामरावणौ ।
शरान्धकारे समरे नोपलक्षयतां तदा ।।

रथं च तस्याथ जवेन सारथिर्निवार्य भीमं जलदस्वनं तदा ।
जगाम भीत्वा समरान्महीपतिं निरस्तवीर्यं पतितं समीक्ष्य ।।

स तु मोहात् सुसंक्रुद्धः कृतान्तबलचोदितः ।
क्रोधसंरक्तनयनो रावणः सूतमब्रवीत् ।।

रथं शीघ्रमिमं सूत राघवाभिमुखं नय ।
नाहत्वा समरे शत्रून् निवर्तिष्यति रावणः ।।

ततो द्रुतं रावणवाक्यचोदितः प्रचोदयामास हयान् स सारथिः ।
स राक्षसेन्द्रस्य ततो महारथः क्षणेन रामस्य रणाग्रतोऽभवत् ।।

* ततो युद्धपरिश्रान्तं समरे चिन्तयास्थितम् ।
रावणं चाग्रतो दृष्ट्वा युद्धाय समुपस्थितम् ।।

दैवतैश्च समागम्य द्रष्टुमभ्यागतो रणम् ।
उपागम्याब्रवीद् राममगस्त्यो भगवांस्तदा ।।

राम राम महाबाहो श्रुणु गुह्यं सनातनम् ।
येन सर्वानरीन् वत्स समरे विजयिष्यसे ।।

आदित्यहृदयं पुण्यं सर्वशत्रुविनाशनम् ।
जयावहं जपेन्नित्यं अक्षयं परमं शिवम् ।।

सर्वमङ्गलमाङ्गल्यम् सर्वपापप्रणाशनम् ।
चिन्ताशोकप्रशमनमायुर्वर्धनमुत्तमम् ।। 105.5

---

* Aditya Hrdayam starts from here

रश्मिमन्तं समुद्यन्तं देवासुरनमस्कृतम् ।
पूजयस्व विवस्वन्तं भास्करं भुवनेश्वरम् ।।

सर्वदेवात्मको ह्येष तेजस्वी रश्मिभावनः ।
एष देवासुरगाणाँल्लोकान् पाति गभस्तिभिः ।।

एष ब्रह्मा च विष्णुश्च शिवः स्कन्दः प्रजापतिः ।
महेन्द्रो धनदःकालो यमः सोमो ह्यपां पतिः ।।

पितरो वसवः साध्या अश्विनौ मरुतो मनुः ।
वायुर्वह्निः प्रजाः प्राण ऋतुकर्ता प्रभाकरः ।।

आदित्यः सविता सूर्यः खगः पूषा गभस्तिमान् ।
सुवर्णसदृशो भानुर्हिरण्यरेता दिवाकरः ।।

हरिदश्वः सहस्रार्चिः सप्तसप्तिर्मरीचिमान् ।
तिमिरोन्मथनः शम्भुस्त्वष्टा मार्ताण्डकोऽशुमान् ।।

हिरण्यगर्भः शिशिरस्तपनोऽहस्करो रविः ।
अग्निगर्भोऽदिते पुत्रः शङ्खः शिशिरनाशनः ।।

व्योमनाथस्तमोभेदी ऋग्यजुः सामपारगः ।
धनवृष्टिरपां मित्रो विन्ध्यवीथी प्लवङ्गमः ।।

आतपी मण्डली मृत्युः पिङ्गलः सर्वतापनः ।
कविर्विश्वो महातेजा रक्तः सर्वभवोद्भवः ।।

नक्षत्रग्रहताराणामधिपो विश्वभावनः ।
तेजसामपि तेजस्वी द्वादशात्मन् नमोऽस्तु ते ।। 105.15

नमः पूर्वाय गिरये पश्चिमायाद्रये नमः ।
ज्योतिर्गणानां पतये दिनाधिपतये नमः ।।

जयाय जयभद्राय हर्यश्वाय नमो नमः ।
नमो नमः सहस्रांशो आदित्याय नमो नमः ।।

नम उग्राय वीराय सारङ्गाय नमो नमः ।
नमः पद्मप्रबोधाय प्रचण्डाय नमोऽस्तु ते ।।

ब्रह्मेशानाच्युतेशाय सूर्यायादित्यवर्चसे ।
भास्वते सर्वभक्षाय रौद्राय वपुषे नमः ।।

तमोघ्नाय हिमघ्नाय शत्रुघ्नायमितात्मने ।
कृतघ्नघ्नाय देवाय ज्योतिषां पतये नमः ।।

तप्तचामीकराभाय हरये विश्वकर्मणे ।
नमस्तमोऽभिनिघ्नाय रुचये लोकसाक्षिणे ।।

नाशयत्येषवै भूतं तमेव सृजति प्रभुः ।
पायत्येष तपत्येष वर्षत्येष गभस्तिभिः ।।

एष सुप्तेषु जागर्ति भूतेषु परिनिष्ठितः ।
एष चैवाग्निहोत्रं च फलं चैवाग्निहोत्रिणाम् ।।

देवाश्च क्रतवश्चैव क्रतूनां फलमेव च ।
यानि कृत्यानि लोकेषु सर्वेषु परमप्रभुः ।।

एनमापत्सु कृच्छ्रेषु कान्तारेषु भयेषु च ।
कीर्तयन् पुरुषः कश्चिन्नावसीदति राघव ।। 105.25

पूजयस्वैनमेकाग्रो देवदेवं जगत्पतिम् ।
एतत् त्रिगुणितं जप्त्वा युद्धेषु विजयिष्यसि ।।

अस्मिन्क्षणे महाबाहो रावणं त्वं जहिष्यसि ।
एवमुक्त्वा तदाऽगस्त्यो जगाम स यथागतम् ।

एतच्छ्रुत्वा महातेजा नष्टशोकोऽभवत् तदा ।
धारयामास सुप्रीतो राघवः प्रयतात्मवान् ।।

आदित्यं प्रेक्ष्य जप्त्वेदं परं हर्षमवाप्तवान् ।
त्रिराचम्य शुचिर्भूत्वा धनुरादाय वीर्यवान् ।।

रावणं प्रेक्ष्य हृष्टात्मा जयार्थं समुपागमत् ।
सर्वयत्नेन महता वृतस्तस्य वधेऽभवत् ।।

अथ रविरवदन्निरीक्ष्य रामं मुदितमनाः परमं प्रहृष्यमाणः ।
निशिचरपतिसंक्षयं विदित्वा सुरगणमध्यगतो वचस्त्वरेति ।।*

ततः प्रवृत्तं सुक्रूरं रामरावणयोस्तदा ।
सुमहद् द्वैरथं युद्धं सर्वलोकभयावहम् ।।

जेतव्यमिति काकुत्स्थो मर्तव्यमिति रावणः ।
धृतौ स्ववीर्यसर्वस्वं युद्धेऽदर्शयतां तदा ।।

गन्धर्वाप्सरसां सङ्घा दृष्ट्वा युद्धमनूपमम् ।
गगनं गगनाकारं सागरः सागरोपमः ।

रामरावणयोर्युद्धं रामरावणयोरिव ।
एवं ब्रुवन्तो ददृशुस्तद् युद्धं रामरावणम् ।। 107.52

---

* Aditya Hrdayam ends here

ततः क्रोधान्महाबाहू रघूणां कीर्तिवर्धनः ।
संधाय धनुषा रामः शरमाशीविषोपमम् ।।

रावणस्य शिरोऽच्छिन्दच्छ्रीमज्जवलितकुण्डलम् ।
तच्छिरः पतितं भूमौ दृष्टं लोकैस्त्रिभिस्तदा ।।

द्वितीयं रावणशिरश्छिन्नं संयति सायकैः ।
छिन्नमात्रं च तच्छीर्षं पुनरेव प्रदृश्यते ।।

तदप्यशनिसंकाशैश्छिन्नं रामस्य सायकैः ।
एवमेव शतं छिन्नं शिरसां तुल्यवर्चसाम् ।।

त इमे सायकाः सर्वे युद्धे प्रात्ययिका मम ।
किं नु तत् कारणं येन रावणे मन्दतेजसः ।।

इति चिन्तापरश्चासीदप्रमत्तश्च संयुगे ।
ववर्ष शरवर्षाणि राघवो रावणोरसि ।।

अथ संस्मारयामास मातली राघवं तदा ।
अजानन्निव किं वीर त्वमेनमनुवर्तसे ।।

विसृजास्मै वधाय त्वमस्त्रं पैतामहं प्रभो ।
विनाशकालः कथितो यः सुरैः सोऽद्य वर्तते ।।

यं तस्मै प्रथमं प्रादादगस्त्यो भगवानृषिः ।
ब्रह्मदत्तं महद् बाणममोघं युधि वीर्यवान् ।।

जाज्वल्यमानं वपुषा सुपुङ्खं हेमभूषितम् ।
तेजसा सर्वभूतानां कृतं भास्करवर्चसम् ।। 108.7

तमुत्तमेषुं लोकानामिक्ष्वाकुभयनाशनम् ।
द्विषतां कीर्तिहरणं प्रहर्षकरमात्मनः ।।

अभिमन्त्र्य ततो रामस्तं महेषुं महाबलः ।
वेदप्रोक्तेन विधिना संदधे कार्मुके बली ।।

स वज्र इव दुर्धर्षो वज्रिबाहुविसर्जितः ।
कृतान्त इव चावार्यो न्यपतद् रावणोरसि ।।

रुधिराक्तः स वेगेन शरीरान्तकरः शरः ।
रावणस्य हरन् प्राणान् विवेश धरणीतलम् ।।

स शरो रावणं हत्वा रुधिरार्द्रकृतच्छविः ।
कृतकर्मा निभृतवत् स तूणीं पुनराविशत् ।।

अथान्तरिक्षे व्यनदत् सौम्यस्त्रिदशदुन्दुभिः ।
दिव्यगन्धवहस्तत्र मारुतः सुसुखो ववौ ।।

ततः प्रजग्मुः प्रशमं मरुद्गणा दिशः प्रसेदुर्विमलं नभोऽभवत् ।
मही चकम्पे न च मारुतो ववौ स्थिरप्रभश्चाप्यभवद् दिवाकरः ।।

स तु निहतरिपुः स्थिरप्रतिज्ञः स्वजनबलाभिवृतो रणे बभूव ।
रघुकुलनृपनन्दनो महौजास्त्रिदशगणैरभिसंवृतो महेन्द्रः ।।

भ्रातरं निहतं दृष्ट्वा शयानं निर्जितं रणे ।
शोकवेगपरीतात्मा विललाप विभीषणः ।।

वीरविक्रान्त विख्यात प्रवीण नयकोविद ।
महार्हशयनोपेत किं शेषे निहतो भुवि ।। 109.2

गतः सेतुः सुनीतानां गतो धर्मस्य विग्रहः ।
गतः सत्त्वस्थ संक्षेपः सुहस्तानां गतिर्गता ।।

वदन्तं हेतुमद्वाक्यं परिमृष्टार्थनिश्चयम् ।
रामः शोकसमाविष्टमित्युवाच विभीषणम् ।।

नैकान्तविजयो युद्धे भूतपूर्वः कदाचन ।
परैर्वा हन्यते वीरः परान् वा हन्ति संयुगे ।।

इयं हि पूर्वैः संदिष्टा गतिः क्षत्रियसम्मता ।
क्षत्रियो निहतः संख्ये न शोच्य इति निश्चयः ।।

अनेन दत्तानि वनीपकेषु भुक्ताश्च भोगा निभृताश्च भृत्याः ।
धनानि मित्रेषु समर्पितानि वैराण्यमित्रेषु च यापितानि ।।

स तस्य वाक्यैः करुणैर्महात्मा सम्बोधितः साधु विभीषणेन ।
आज्ञापयामास नरेन्द्रसूनुः स्वर्गीयमाधानमदीनसत्त्वः ।।

दशग्रीवं हतं दृष्ट्वा रामेणाचिन्त्यकर्मणा ।
पतिं मन्दोदरी तत्र कृपणा पर्यदेवयत् ।।

कथं त्रैलोक्यमाक्रम्य श्रिया वीर्येण चान्वितम् ।
अविषह्यं जघान त्वां मानुषो वनगोचरः ।।

अनादिमध्यनिधनो महतः परमो महान् ।
तमसः परमो धाता शङ्खचक्रगदाधरः ।।

श्रीवत्सवक्षा नित्यश्रीरजय्यः शाश्वतो ध्रुवः ।
मानुषं रूपमास्थाय विष्णुः सत्यपराक्रमः ।। 111.13

सीतां सर्वानवद्याङ्गीमरण्ये विचने शुभाम् ।
आनयित्वा तु तां दीनां छद्मनाऽऽत्मस्वदूषणम् ।।

शुभकृच्छुभमाप्नोति पापकृत् पापमश्नुते ।
विभीषणः सुखं प्राप्तस्त्वं प्राप्तः पापमीदृशम् ।।

पिता दानवराजो मे भर्ता मे राक्षसेश्वर : ।
पुत्रो मे शक्रनिर्जेता इत्यहं गर्विता भृशम् ।।

धिगस्तु हृदयं यस्या ममेदं न सहस्रधा ।
त्वयि पञ्चत्वमापन्ने फलते शोकपीडितम् ।।

इत्येवं विलपन्ती सा वाष्पपर्याकुलेक्षणा ।
स्नेहोपस्कन्नहृदया तदा मोहमुपागमत् ।।

एतस्मिन्नन्तरे रामः विभीषणमुवाच ह ।
संस्कारः क्रियतां भ्रातुः स्त्रीगणः परिसान्त्व्यताम् ।
तमुवाच ततो धीमान् विभीषण इदं वचः ।।

नाहमर्हामि संस्कर्तुं परदाराभिमर्शनम् ।
भ्रातृरूपो हि मे शत्रुरेष सर्वाहिते रतः ।।

श्रुत्वा तस्यागुणान् सर्वे वक्ष्यन्ति सुकृतं पुनः ।
तच्छ्रुत्वा परमप्रीतो रामो धर्मभृतां वरः ।।

विभीषणमुवाचेदं वाक्यज्ञं वाक्यकोविदः ।
तवापि मे प्रियं कार्यं त्वत्प्रभावान्मया जितम् ।।

महात्मा बलसम्पन्नो रावणो लोकरावणः ।
मरणान्तानि वैराणि निर्वृत्तं नः प्रयोजनम् ।। 111.99

क्रियातामस्य संस्कारो ममाप्येष यथा तव ।
त्वत्सकाशान्महाबाहो संस्कारं विधिपूर्वकम् ।।

राघवस्य वचः श्रुत्वा त्वरमाणो विभीषणः ।
संस्कारयितुमारेभे भ्रातरं रावणं हतम् ।
स प्रविश्य पुरीं लङ्कां राक्षसेन्द्रो विभीषणः ।।

रावणस्याग्निहोत्रं तु निर्यापयाति सत्वरम् ।
रामपार्श्वमुपागम्य समतिष्टद् विनीतवत् ।।

ततो विमुक्त्वा सशरं शरासनं महेन्द्रदत्तं कवचं स तन्महत् ।
विमुच्य रोषं रिपुनिग्रहात् ततो रामः स सौम्यत्वमुपागतोऽरिहा ।।

राघवेणाभ्यनुज्ञातो मातलिः शक्रसारथिः ।
दिव्यं तं रथमास्थाय दिवमेवोत्पपात ह ।।

तस्मिंस्तु दिवमारूढे सरथे रथिनां वरः ।
अथोवाच स काकुत्स्थः समीपपरिवर्तिनम् ।।

सौमित्रिं सत्त्वसम्पन्नं लक्ष्मणं दीप्ततेजसम् ।
विभीषणमिमं सौम्य लङ्कायामभिषेचय ।।

आगतास्तु जलं गृह्य समुद्राद् वानरोत्तमाः ।
ततस्त्वेकं घटं गृह्य संस्थाप्य परमासने ।।

घटेन तेन सौमित्रिरभ्यषिञ्जद् विभीषणम् ।
लङ्कायां रक्षसां मध्ये राजानां रामशासनात् ।।

दृष्ट्वाभिषिक्तं लङ्कायां राक्षसेन्द्रं विभीषणम् ।
राघवः परमां प्रीतिं जगाम सहलक्ष्मणः ।। 112.18

ततः शैलोपमं वीरं प्राञ्जलिं प्रणतं स्थितम् ।
उवाचेदं वचो रामो हनूमन्तं प्लवङ्गमम् ।।

अनुज्ञाप्य महाराजमिमं सौम्य विभीषणम् ।
प्रविश्य नगरीं लङ्कां कौशलं ब्रूहि मैथिलीम् ।।

प्रियमेतदिहाख्याहि वैदेह्यास्त्वं हरीश्वर ।
प्रतिगृह्य तु संदेशमुपावर्तितुमर्हसि ।।

प्रविश्य च पुरीं लङ्कामनुज्ञाप्य विभीषणम् ।
ततस्तेनाभ्यनुज्ञातो हनूमान् वृक्षवाटिकाम् ।।

वृक्षमूले निरानन्दां राक्षसीभिः परिवृताम् ।
निभृतः प्रणवः प्रह्वः सोऽभिगम्याभिवाद्य च ।।

सौम्यं तस्या मुखं दृष्ट्वा हनूमान् प्लवगोत्तमः ।
रामस्य वचनं सर्वमाख्यातुमुपचक्रमे ।।

वैदेहि कुशली रामः सहसुग्रीवलक्ष्मणः ।
कुशलं चाह सिद्धार्थो हतशत्रुरमित्रजित् ।।

विभीषणसहायेन रामेण हरिभिः सह ।
निहतो रावणो देवि लक्ष्मणेन च वीर्यवान् ।।

प्रियमाख्यामि ते देवि भूयश्च त्वां सभाजये ।
तव प्रभावाद् धर्मज्ञे महान् रामेण संयुगे ।।

लब्धोऽयं विजयः सीते स्वस्था भव गतज्वरा ।
रावणश्च हतः शत्रुर्लङ्का चैव वशीकृता ।। 113.10

एवमुक्ता तु सा देवी सीता शशिनिभानना ।
प्रहर्षेणावरुद्धा सा व्याहर्तुं न शशाक ह ।।

प्रियमेतदुपश्रुत्य भर्तुर्विजयसंक्षितम् ।
प्रहर्षवशमापन्ना निर्वाक्यास्मि क्षणान्तरम् ।।

नहि पश्यामि सदृशं चिन्तयन्ती प्लवंगम ।
आख्यानकस्य भवतो दातुं प्रत्यभिनन्दनम् ।।

हिरण्यं वा सुवर्णं वा रत्नानि विविधानि च ।
राज्यं वा त्रिषु लोकेषु एतन्नार्हति भाषितम् ।।

युक्ता रामस्य भवतो धर्मपत्नी गुणान्विता ।
प्रतिसन्दिश मां देवि गमिष्ये यत्र राघवः ।।

एवमुक्ता हनुमता वैदेही जनकात्मजा ।
साब्रवीद् द्रष्टुमिच्छामि भर्तारं भक्तवत्सलम् ।।

आजगाम महातेजा हनुमान् यत्र राघवः ।
यान्तिमित्तोऽयमारम्भः कर्मणां यः फलोदयः ।
तां देवीं शोकसंतप्तां द्रष्टुमर्हसि मैथिलीम् ।।

पूर्वकात् प्रत्ययाच्चाहमुक्तो विश्वस्तया तया ।
द्रष्टुमिच्छामि भर्तारमिति पर्याकुलेक्षणा ।।

एवमुक्तो हनुमता रामो धर्मभृतां वरः ।
उवाच मेघसंकाशं विभीषणमुपस्थितम् ।।

दिव्याङ्गरागां वैदेहीं दिव्याभरणभूषिताम् ।
इह सीतां शिरः स्नातामुपस्थापय मा चिरम् ।। 114.7

ततः सीतां महाभागां दृष्ट्वोवाच विभीषणः ।
मूर्ध्नि वद्धाञ्जलिः श्रीमान् विनीतो राक्षसेश्वरः ।।

दिव्याङ्गरागा वैदेहि दिव्याभरणभूषिता ।
यानमारोह भद्रं ते भर्ता त्वां द्रष्टुमिच्छति ।।

एवमुक्ता तु वैदेही प्रत्युवाच विभीषणम् ।
अस्नात्वा द्रष्टमिच्छामि भर्तारं राक्षसेश्वर ।।

तस्यास्तद् वचनं श्रुत्वा प्रत्युवाच विभीषणः ।
यथाऽऽह रामो भर्ता ते तत् तथा कर्तुमर्हसि ।।

ततो यानगतां सीतां सविमर्शं विचारयन् ।
विभीषणमिदं वाक्यमहृष्टो राघवोऽब्रवीत् ।।

न गृहाणि न वस्त्राणि न प्राकारस्तिरस्क्रिया ।
नेदृशा राजसत्कारा वृत्तमावरणं स्त्रियाः ।।

सैषा विपद्गता चैव कृच्छ्रेण च समन्विता ।
दर्शने नान्ति दोषोऽस्या मत्समीपे विशेषतः ।।

विसृज्य शिबिकां तस्मात् पद्भ्यामेवापसर्पतु ।
समीपे मम वैदेहिं पश्यन्त्वते वनौकसः ।।

ततो लक्ष्मणसुग्रीवौ हनूमांश्च प्लवङ्गमः ।
निशम्य वाक्यं रामस्य बभूवुर्व्यथिताः भृशम् ।।

कलत्रनिरपेक्षैश्च इङ्गितैरस्य दारुणैः ।
अप्रीतमिव सीतायां तर्कयन्तिस्म राघवम् ।। 114.33

लज्जया त्ववलीयन्ती स्वेषु गात्रेषु मैथिली ।
विभीषणेनानुगता भर्तारं साभ्यवर्तत ।।

विस्मयाच्च प्रहर्षाच्च स्नेहाच्च पतिदेवता ।
उदैक्षत मुखं भर्तुः सौम्यं सौम्यतरानना ।।

तां तु पार्श्वे स्थितां प्रह्वां रामः सम्प्रेक्ष्य मैथिलीम् ।
हृदयान्तर्गतं भावं व्याहर्तुमुपचक्रमे ।।

एषासि निर्जिता भद्रे शत्रुं जित्वा रणाजिरे ।
पौरुषाद् यदनुष्ठेयं मयैतदुपपादितम् ।।

या त्वं विरहिता नीता चलचित्तेन रक्षसा ।
दैवसंपादितो दोषो मानुषेण मया जितः ।।

युद्धे विक्रमतश्चैव हितं मन्त्रयतस्तथा ।
सुग्रीवस्य ससैन्यस्य सफलोऽद्य परिश्रमः ।।

इत्येवं वदतः श्रुत्वा सीता रामस्य तद् वचः ।
मृगीवोत्फुल्लनयना बभूवाश्रुपरिप्लुता ।।

जनवादभयाद् राज्ञो बभूव हृदयं द्विधा ।
अवदद् वै वररोहां मध्ये वानररक्षसाम् ।।

यत् कर्तव्यं मनुष्येण धर्षणां प्रतिमार्जता ।
तत् कृतं रावणं हत्वा मयेदं मानकाङ्क्षिणा ।।

रक्षता तु मया वृत्तमपवादं च सर्वतः ।
प्रख्यातस्यात्मवंशस्य न्यङ्गं च परिमार्जता ।। 115.16

कः पुमांस्तु कुले जातः स्त्रियं परगृहोषिताम् ।
तेजस्वी पुनरादद्यात् सुहृल्लोभेन चेतसा ।।

यदर्थं निर्जिता मे त्वं सोऽयमासादितो मया ।
नास्ति मे त्वय्यभिष्वङ्गो यथेष्टं गम्यतामिति ।।

ततः प्रियार्हश्रवणा तदप्रियं प्रियादुपश्रुत्य चिरस्य मानिनी ।
मुमोच बाष्पं रुदती तदा भृशं गजेन्द्रहस्ताभिहतेव वल्लरी ।।

एवमुक्ता तु वैदेही परुषं रोमहर्षणम् ।
राघवेण सरोषेण श्रुत्वा प्रव्यथिताभवत् ।।

प्रविशन्तीव गात्राणि स्वानि सा जनकात्मजा ।
वाक्शरैस्तैः सशल्येव भृशमश्रूण्यवर्तयत् ।।

ततो बाष्पपरिक्लिन्नं प्रमार्जन्ती स्वमाननम् ।
शनैर्गद्गदया वाचा भर्तारमिदमब्रवीत् ।।

किं मामसदृशं वाक्यमीदृशं श्रोत्रदारुणम् ।
रूक्षं श्रावयसे वीर प्राकृतः प्राकृतामिव ।।

प्रेषितस्ते महावीरो हनुमानवलोककः ।
लङ्कास्थाहं त्वया राजन् किं तदा न विसर्जिता ।।

न वृथा ते श्रमोऽयं स्यात् संशये न्यस्य जीवितम् ।
सुहृज्जनपरिक्लेशो न चायं विफलस्तव ।।

अपदेशे मे जनकान्नोत्पत्तिर्वसुधातलात् ।
मम वृत्तं च वृत्तज्ञ बहु ते न पुरस्कृतम् ।। 116.15



अङ्केनादाय वैदेहीमुत्पपात विभावसुः ।

इति ब्रुवन्ती रुदती बाष्पगद्गदभाषिणि ।
उवाच लक्ष्मणं सीता दीनं ध्यानपरायणम् ।।

चितां मे कुरु सौमित्रे व्यसनस्यास्य भेषजम् ।
मिथ्यापवादोपहता नाहं जीवितुमुत्सहे ।।

एवमुक्तस्तु वैदेह्या लक्ष्मणः परवीरहा ।
अमर्षवशमापन्नो राघवं समुदैक्षत ।।

स विज्ञाय मनश्छन्दं रामस्याकारसूचितम् ।
चितां चकार सौमित्रिर्मते रामस्य वीर्यवान् ।।

अधोमुखं स्थितं रामं ततः कृत्वा प्रदक्षिणम् ।
उपावर्तत वैदेही दीप्यमानं हुताशनम् ।।

यथा मे हृदयं नित्यं नापसर्पति राघवात् ।
तथा लोकस्य साक्षी मां सर्वतः पातु पावकः ।।

कर्मणा मनसा वाचा यथा नातिचराम्यहम् ।
राघवं सर्वधर्मज्ञं तथा मां पातु पावकः ।।

एवमुक्त्वा तु वैदेही परिक्रम्य हुताशनम् ।
विवेश ज्वलनं दीप्तं निःशङ्केनान्तरात्मना ।।

अक्लिष्टमाल्याभरणां तथारूपामनिन्दिताम् ।
ददौ रामाय वैदेहीमङ्के कृत्वा विभावसुः ।।

अब्रवीत्तु तदा रामं साक्षी लोकस्य पावकः ।
ऐषा ते राम वैदेही पापमस्यां न विद्यते ।। 118.5

विशुद्धभावां निष्पापां प्रतिगृह्णीष्व मैथिलीम् ।
न किंचिदभिदातव्या अहमाज्ञापयामि ते ।।

ततः प्रीतमना रामः श्रुत्वैवं वदतां वरः ।
दध्यौ मुहूर्थं धर्मात्मा हर्षव्याकुललोचनः ।।

अनन्यहृदयां सीतां मच्चित्तपरिरक्षिणीम् ।
अहमप्यवगच्छामि मैथिलीं जनकात्मजाम् ।।

विशुद्धा त्रिषु लोकेषु मैथिली जनकात्मजा ।
न विहातुं मया शक्या कीर्तिरात्मवता यथा ।।

अवश्यं च मया कार्यं सर्वेषां वो वचो हितम् ।
स्निग्धानां लोकनाथानामेवं च वदतां हितम् ।।

इत्येवमुक्त्वा विजयी महाबलः प्रशस्यमानः स्वकृतेन कर्मणा ।
समेत्य रामः प्रियया महायशाः सुखं सुखार्होऽनुबभूव राघवः ।।

एतच्छ्रुत्वा शुभं वाक्यं राघवेणानुभाषितम् ।
ततः शुभतरं वाक्यं व्याजहार महेश्वरः ।।

दिष्ट्या सर्वस्य लोकस्य प्रवृद्धं दारुणं तमः ।
अपवृत्तं त्वया संख्ये राम रावणजं भयम् ।।

आश्वास्य भरतं दीनं कौसल्यां च यशस्विनीम् ।
कैकेयीं च सुमित्रां च दृष्ट्वा लक्ष्मणमातरम् ।।

प्राप्य राज्यमयोध्यायां नन्दयित्वा सुहृज्जनम् ।
इक्ष्वाकूणां कुले वंशम् स्थापयित्वा महाबल ।। 119.5

दृष्ट्वा तुरङ्गमेधेन प्राप्य चानुत्तमं यशः ।
ब्राह्मणेभ्यो धनं दत्वा त्रिदिवं गन्तुमर्हसि ।।

एष राजा दशरथो विमानस्थः पिता तव ।
काकुत्स्थ मानुषे लोके गुरुस्तव महायशाः ।।

इन्द्रलोकं गतः श्रीमांस्त्वया पुत्रेण तारितः ।
लक्ष्मणेन सह भ्रात्रा त्वमेनमभिवादय ।।

महादेववचः श्रुत्वा राघवः सहलक्ष्मणः ।
विमानशिखरस्थस्य प्रणाममकरोत् पितुः ।।

हर्षेण महताऽऽविष्टो विमानस्थो महीपतिः ।
प्राणैः प्रियतरं दृष्ट्वा पुत्रं दशरथस्तदा ।।

आरोप्याङ्के महाबाहुर्वरासनगतः प्रभुः ।
बाहुभ्यां सम्परिष्वज्य ततो वाक्यं समाददे ।।

अद्य त्वां विहतामित्रं दृष्ट्वा सम्पूर्णमानसम् ।
निस्तीर्णवनवासं च प्रीतिरासीत् परा मम ।।

निवृत्तवनवासोऽसि प्रतिज्ञा पूरिता त्वया ।
रावणं च रणे हत्वा देवताः परितोषिताः ।।

कृतं कर्म यशः श्लाघ्यं प्राप्तं ते शत्रुसूदन ।
भ्रातृभिः सह राज्यस्थो दीर्घमायुरवाप्नुहि ।।

इति ब्रुवाणं राजानं रामः प्राञ्जलिरब्रवीत् ।
कुरु प्रसादं धर्मज्ञ कैकेय्या भरतस्य च ।। 119.25

तथेति स महाराजो राममुक्त्वा कृताञ्जलिम् ।
लक्ष्मणं च परिष्वज्य पुनर्वाक्यमुवाच ह ।।

रामं शुश्रूषता भक्त्या वैदेह्या सह सीतया ।
कृता मम महाप्रीतिः प्राप्तं धर्मफलं च ते ।।

इत्युक्त्वा लक्ष्मणं राजा स्नुषां बद्धाञ्जलिं स्थिताम् ।
पुत्रीत्याभाष्य मधुरं शनैरेनामुवाच ह ।।

कर्तव्यो न तु वैदेहि मन्युस्त्यागमिमं प्रति ।
रामेणेवं विशुद्ध्यर्थं कृतं वै त्वद्धितैषिणा ।।

इति प्रतिसमादिश्य पुत्रौ सीतां च राघवः ।
इनदुलोकं विमानेन ययौ दशरथो नृपः ।।

प्रतिप्रयाते काकुत्स्थे महेन्द्रः पाकशासनः ।
अब्रवीत् परमप्रीतो राघवं प्राञ्जलिं स्थितम् ।।

अमोघं दर्शनं राम तवास्माकं नरर्षभ ।
प्रीतियुक्ताः स्म तेन त्वं ब्रूहि यन्मनसेप्सितम् ।।

एवमुक्तो महेन्द्रेण प्रसन्नेन महात्मना ।
सुप्रसन्नमना हृष्टो वचनं प्राह राघवः ।।

यदि प्रीतिः समुत्पन्ना मयि ते विबुधेश्वर ।
वक्ष्यामि कुरु मे सत्यं वचनं वदतां वर ।।

मम हेतोः पराक्रान्ता ये गता यमसादनम् ।
ते सर्वे जीवितं प्राप्य समुत्तिष्ठन्तु वानराः ।। 120.5

महानयं वरस्तात यस्त्वयोक्तो रघूत्तम ।
द्विर्मया नोक्तपूर्वं च तस्मादेतद् भविष्यति ।।

समुत्तिष्ठन्तु ते सर्वे हरा ये युधि राक्षसैः ।
ऋक्षाश्च सहगोपुच्छैर्निकृत्ताननबाहवः ।।

एवमुक्त्वा सहस्राक्षो रामं सौमित्रिणा सह ।
विमानैः सूर्यसंकाशैर्ययौ हृष्टः सुरैः सह ।।

तां रात्रिमुषितं रामं सुखोदितमरिन्दमम् ।
अब्रवीत् प्राञ्जलिर्वाक्यं जयं पृष्ट्वा विभीषणः ।।

अलंकारविदश्चैता नार्यः पद्मनिभेक्षणाः ।
उपस्थितास्त्वां विधिवत् स्नापयिष्यन्ति राघव ।।

स तु ताम्यति धर्मात्मा मम हेतोः सुखोचितः ।
सुकुमारो महाबाहुर्भरतः सत्यसंश्रयः ।।

तं विना कैकयीपुत्रं भरतं धर्मचारिणम् ।
न मे स्नानं बहुमतं वस्त्राण्याभरणानि च ।।

एवमुक्तस्तु काकुत्स्थं प्रत्युवाच विभीषणः ।
पुष्पकं नाम भद्रं ते विमानं सूर्यसंनिभम् ।
मम भ्रातुः कुबेरस्य रावणेन बलीयसा ।।

हृतं निर्जित्य संग्रामे कामगं दिव्यमुत्तमम् ।
त्वदर्थं पालितं चेदं तिष्ठत्यतुलविक्रम ।।

तदिदं मेघसंकाशं विमानमिव तिष्ठति ।
येन यास्यसि यानेन त्वमयोध्यां गतज्वरः ।। 121.11

उपस्थितमनाधृष्यं तद् विमानं मनोजवम् ।
निवेदयित्वा रामाय तस्थौ तत्र विभीषणः ।।

स तु बद्धाञ्जलिपुटो विनीतो राक्षसेश्वरः ।
अब्रवीत् त्वरयोपेतः किं करोमिति राघवम् ।।

कृतप्रयत्नकर्माणः सर्व एव वनौकसः ।
रत्नैरर्थैश्च विविधैः सम्पूज्यन्तां विभीषण ।।

ततस्तान् पूजितान् दृष्ट्वा रत्नार्थैर्हरियूथपान् ।
आरुरोह तदा रामस्तद् विमानमनुत्तम् ।।

अङ्केनादाय वैदेहीं लज्जमानां मनस्विनीम् ।
लक्ष्मणेन सह भ्रात्रा विक्रान्तेन धनुष्मता ।।

मित्रकार्यं कृतमिदं भवद्भिर्वानरर्षभाः ।
अनुज्ञाता मया सर्वे यथेष्टं प्रतिगच्छत ।।

अयोध्यां प्रति यास्यामि राजधानीं पितुर्मम ।
अभ्यनुज्ञातुमिच्छामि सर्वानामन्त्रयामि वः ।।

एवमुक्तास्तु रामेण हरीन्द्रा हरयस्तथा ।
ऊचुः प्राञ्जलयः सर्वे राक्षसश्च विभीषणः ।।

अयोध्यां गन्तुमिच्छामः सर्वान् नयतु नो भवान् ।
मुद्युक्ता विचरिष्यामो वनान्युपवनानि च ।।

दृष्ट्वा त्वामभिषेकार्द्रं कौसल्यामभिवाद्य च ।
अचिरादागमिष्यामः स्वगृहान् नृपसत्तम ।। 122.20

एवमुक्तस्तु धर्मात्मा वानरैः सविभीषणैः ।
अब्रवीत् वानरान् रामः ससुग्रीवविभीषणान् ।।

क्षिप्रमारोह सुग्रीव विमानं सह वानरैः ।
त्वमप्यारोह सामात्ये राक्षसेन्द्रो विभीषण ।।

तेष्वारूढेषु सर्वेषु कौबेरं परमासनम् ।
राघवेणाभ्यनुज्ञातमुत्पपात विहायसम् ।।

पातयित्वा ततश्चक्षुः सर्वतो रघुनन्दनः ।
अब्रवीन्मैथिलीं सीतां रामः शशिनिभाननाम् ।।

यत्र सागरमुत्तीर्य तां रात्रिमुषिता वयम् ।
एष सेतुर्मया बद्धः सागरे लवणार्णवे ।।

सुग्रीवस्य पुरी रम्या यत्र वाली मया हतः ।
अथ दृष्ट्वा पुरीं सीता किष्किन्धां वालि पालिताम् ।
अब्रवीत् प्रश्रितं वाक्यं रामं प्रणयसाध्वसा ।।

अन्येषां वानरेन्द्राणां स्त्रीभिः परिवृता ह्यहम् ।
गन्तुमिच्छे सहायोध्यां राजधानीं त्वया सह ।।

तारया चाभ्यानुज्ञाताः सर्वा वानरयोषितः ।
नेपथ्यंविधिपूर्वं तु कृत्वा चापि प्रदक्षिणम् ।।

अध्यारोहन् विमानं तत् सीतादर्शनकाङ्क्षया ।
ताभिः सहोत्थितं शीघ्रं विमानं प्रेक्ष्य राघवः ।।

ऋश्यमूकसमीपे तु वैदेहीं पुनरब्रवीत् ।
ऋष्यमूको गिरिवरः काञ्चनैर्धातुर्भिवृतः ।
अत्राहं वानरेन्द्रण सुग्रीवेण समागतः ।। 123.39

त्वया विहीनो यत्राहं विललाप सुदुःखितः ।
अस्यास्तीरे मया दृष्टा शबरी धर्मचारिणी ।।

यत्र त्वं राक्षसेन्द्रेण रावणेन हृता बलात् ।
एषा गोदावरी रम्या प्रसन्नसलिला शुभा ।।

असौ सुतनु शैलेन्द्रश्चित्रकूटः प्रकाशते ।
अत्र मां कैकयीपुत्रः प्रसादयितुमागतः ।।

एषा सा यमुना रम्या दृश्यते चित्रकानना ।
भरद्वाजाश्रमः श्रीमान् दृश्यते चैष मैथिलि ।।

शृङ्गवेरपुरं चैतद् गुहो यत्र सखा मम ।
एषा सा दृश्यते सीते सरयूर्यूपमालिनी ।।

एषा सा दृश्यते सीते राजधानी पितुर्मम ।
अयोध्यां कुरु वैदेहि प्रणामं पुनरागता ।।

पूर्णे चतुर्दशे वर्षे पञ्चम्यां लक्ष्मणाग्रजः ।
भरद्वाजाश्रमं प्राप्य ववन्दे नियतो मुनिम् ।।

सोऽपृच्छदभिवाद्यैनं भरद्वाजं तपोधनम् ।
श्रृणोषि कच्चिद् भगवन् सुभिक्षानामयं पुरे ।
कच्चित् स युक्तो भरतो जीवन्त्यपि च मातरः ।।

एवमुक्तस्तु रामेण भरद्वाजो महामुनिः ।
प्रत्युवाच रघुश्रेष्ठं स्मितपूर्वं प्रहृष्टवत् ।।

आज्ञावशत्वे भरतो जटिलस्त्वां प्रतीक्षते ।
पादुके ते पुरस्कृत्य सर्वं च कुशलं गृहे ।। 122.20

अर्घ्यं प्रतिगृहाणेदमयोध्यां श्वे गमिष्यसि ।
तस्य तच्छिरसा वाक्यं प्रतिगृह्य नृपात्मजः ।।

अयोध्यां तु समालोक्य चिन्तयामास राघवः ।
उवाच धीमांस्तेजस्वी हनूमन्तं प्लवङ्गमम् ।।

अयोध्यां त्वरितो गत्वा शीघ्रं प्लवगसत्तम ।
जानीहि कच्चित् कुशली जनो नृपतिमन्दिरे ।।

भरतस्तु त्वया वाच्यः कुशलं वचनान्मम ।
सिद्धार्थं शंस मां तस्मै सभार्यं सहलक्ष्मणम् ।।

वरदानं महेन्द्रेण ब्रह्मणा वरुणेन च ।
महादेवप्रसादाच्च पित्रा मम समागमम् ।।

जित्वा शत्रुगणान् रामः प्राप्य चानुत्तमं यशः ।
उपयाति समृद्धार्थः सह मित्रैर्महाबलैः ।।

एतच्छ्रुत्वा यमाकारं भजते भरतस्ततः ।
स च वेदितव्यः स्यात् सर्वं यच्चापि मां प्रति ।।

ज्ञेयाः सर्वे च वृत्तान्ता भरतस्येङ्गितानि च ।
तत्त्वेन मुखवर्णेन दृष्ट्या व्याभाषितेन च ।।

इति प्रतिसमादिष्टो हनूमान् मारुतात्मजः ।
मानुषं धारयन् रूपमयोध्यां त्वरितो ययौ ।।

आससाद द्रुमान् फुल्लान् नन्दिग्रामसमीपगान् ।
सुराधिपस्योपवने यथा चैत्ररथे द्रुमान् ।। 125.28

स्त्रीभिः सपुत्रैः पौत्रैश्च रममाणैः स्वलंकृतैः ।
क्रोशमात्रे त्वयोध्यायाश्चीरकृष्णाजिनाम्बरम् ।।

ददर्श भरतं दीनं कृशमाश्रमवासिनम् ।
जटिलं मलदिग्धाङ्गं भ्रातृव्यसनकर्शितम् ।।

फलमूलाशिनं दान्तं तापसं धर्मचारिणम् ।
पादुके ते पुरस्कृत्य प्रशासन्तं वसुंधराम् ।।

चातुर्वर्ण्यस्य लोकस्य त्रातारं सर्वतो भयात् ।
उपस्थितममात्यैश्च शुचिभिश्च पुरोहितैः ।।

बलमुख्यैश्च युक्तैश्च काषायाम्बरधारिभिः ।
न हि ते राजपुत्रं तं चीरकृष्णाजिनाम्बरम् ।।

परिभोक्तुं व्यवस्यन्ति पौरा वै धर्मवत्सलाः ।
तं धर्ममिव धर्मज्ञं देहवन्धामिवापरम् ।।

उवाच प्राञ्जलिर्वाक्यं हनूमान् मारुतात्मजः ।
वसन्तं दण्डकारण्ये यं त्वं चीरजटाधरम् ।।

अनुशोचसि काकुत्स्थं स त्वां कौशलमब्रवीत् ।
प्रियमाख्यामि ते देव शोकं त्यज सुदारुणम् ।।

उपयाति समृद्धार्थः सह मित्रैर्महाबलैः ।
लक्ष्मणश्च महातेजा वैदेही च यशस्विनी ।
सीता समग्रा रामेण महेन्द्रेण शची यथा ।।

एवमुक्तो हनूमता भरतः कैकयीसुतः ।
पपात सहसा हृष्टो हर्षान्मोहमुपागमत् ।। 125.40

ततो मुहूर्तादुत्थाय प्रत्याश्वस्य च राघवः ।
हनूमन्तमुवाचेदं भरतः प्रियवादिनम् ।।

अशोकजैः प्रीतिमयैः कपिमालिङ्ग्य सम्भ्रमात् ।
सिषेच भरतः श्रीमान् विपुलैरश्रुबिन्दुभिः ।।

निशम्य रामागमनं नृपात्मजः कपिप्रवीरस्य तदद्भुतोपमम् ।
प्रहर्षितो रामदिदृक्षया भवत् पुनश्च हर्षादिदमब्रवीद् वचः ।।

बहूनि नाम वर्षाणि गतस्य सुमहद्वनम् ।
श्रृणोम्यहं प्रीतिकरं मम नाथस्य कीर्तनम् ।।

राघवस्य हरीणां च कथमासीत् समागमः ।
कस्मिन् देशे किमाश्रित्य तत्त्वमाख्याहि पृच्छतः ।।

स पृष्टो राजपुत्रेण बृस्यां समुपवेशितः ।
आचचक्षे ततः सर्वं रामस्य चरितं वने ।।

ततः स वाक्यैर्मधुरैर्हनूमतो निशम्य हृष्टो भरतः कृताञ्जलिः ।
उवाच वाणीं मनसः प्रहर्षिणीं चिरस्य पूर्णः खलु मे मनोरथः ।।

श्रुत्वा तु परमानन्दं भरतः सत्यविक्रमः ।
हृष्टमाज्ञापयामास शत्रुघ्नं परवीरहा ।।

अभिनिर्यान्तु रामस्य द्रष्टुं शशिनिभं मुखम् ।
भरतस्य वचः श्रुत्वा शत्रुघ्नः परवीरहा ।।

विष्टीरनेकसाहस्रीश्चोदयामास भागशः ।
समीकुरुत निम्नानि विषमाणि समानि च ।। 127.6

स्थानानि च निरस्यन्तां नन्दिग्रामादितः परम् ।
सिञ्चन्तु पृथिवीं कृत्स्नां हिमशीतेन वारिणा ।।

ततोऽभ्यव किरन्त्वन्ये लाजैः पुष्पैश्च सर्वतः ।
समुच्छ्रितपताकास्तु रथ्याः पुरवरोत्तमे ।।

शोभयन्तु च वेश्मानि सूर्यस्योदयनं प्रति ।
स्रग्दाममुक्तपुष्पैश्च सुवर्णैः पञ्चवर्णकैः ।।

ततो यानान्युपारूढाः सर्वा दशरथस्त्रियः ।
कौसल्यां प्रमुखे कृत्वा सुमित्रा चापि निर्यासुः ।
कैकेय्या सहिताः सर्वा नन्दिग्राममुपागमन् ।।

द्विजातिमुख्यैर्धर्मात्मा श्रेणीमुख्यैः सनैगमैः ।
माल्यमोदकहस्तैश्च मन्त्रिभिर्भरतो वृतः ।।

शङ्खभेरीनिनादैश्च वन्दिभिश्चाभिनन्दितः ।
आर्यपादौ गृहीत्वा तु शिरसा धर्मकोविदः ।।

पाण्डुरं छत्रमादाय शुक्लमाल्योपशोभितम् ।
शुक्ले च वालव्यजने राजार्हे हेमभूषिते ।।

उपवासकृशो दीनश्चीरकृष्णाजिनाम्वरः ।
भ्रातुरागमनं श्रुत्वा तत्पूर्वं हर्षमागतः ।।

प्रत्युद्ययौ यदा रामं महात्मा सचिवैः सह ।
ततो विमानाग्रगतं भरतो भ्रातरं तदा ।
ववन्दे प्रणतो रामं मेरुस्थमिव भास्करम् ।। 127.38

ततो रामभ्यनुज्ञातं तद् विमानमनुत्तमम् ।
हंसयुक्तं महावेगं निपपात महीतले ।।

तं समुत्थाय काकुत्स्थश्चिरस्याक्षिपथं गतम् ।
अङ्के भरतमारोप्य मुदितः परिषस्वजे ।।

ततो लक्ष्मणमासाद्य वैदेहीं च परंतपः ।
अथाऽभ्यवादयत् प्रीतो भरतो नाम चाब्रवीत् ।।

ते कृत्वा मानुषं रूपं वानराः कामरूपिणः ।
कुशलं पर्यपृच्छस्ते प्रहृष्टा भरतं तदा ।।

शत्रुघ्नश्च तदा राममभिवाद्य सलक्ष्मणम् ।
सीतायाश्चरणौ वीरो विनयादभ्यवादयत् ।।

रामो मातरमासाद्य विषण्णां शोककर्शिताम् ।
जग्राह प्रणतः पादौ मनो मातुः प्रहर्षयत् ।।

अभिवाद्य सुमित्रां च कैकेयीं च यशस्विनीम् ।
स मातृश्चततः सर्वाः पुरोहितमुपागमत् ।।

स्वागतं ते महाबाहो कौसल्यानन्दवर्धन ।
इति प्राञ्जलयः सर्वे नागरा राममब्रुवन् ।।

पादुके ते तु रामस्य गृहीत्वा भरतः स्वयम् ।
चरणाभ्यां नरेन्द्रस्य योजयामास धर्मवित् ।।

अब्रवीच्च तदा रामं भरतः स कृताञ्जलिः ।
एतत्ते सकलं राज्यं न्यासं निर्यातितं मया ।। 127.55

अवेक्षतां भवान् कोशं कोष्टागारं गृहं बलम् ।
भवतस्तेजसा सर्वं कृतं दशगुणं मया ।।

ततः प्रहर्षाद् भरतमङ्कमारोप्य राघवः ।
ययौ तेन त्रिमानेन ससैन्यो भरताश्रमम् ।।

भरताश्रममासाद्य ससैन्यो राघवस्तदा ।
अवतीर्य विमानाग्रादवतस्थे महीतले ।।

अब्रवीत्तु तदा रामस्तद् विमानमनुत्तमम् ।
वह वैश्रवणं देवमनुजानामि गम्यताम् ।।

विमानं पुष्पकं दिव्यं संगृहीतं तु रक्षसा ।
अगमद् धनदं वेगाद् रामवाक्यप्रचोदितम् ।।

शिरस्यञ्जलिमाधाय कैकेय्यानन्दवर्धनः ।
बभाषे भरतो ज्येष्ठं रामं सत्यपराक्रमम् ।।

पूजिता मामिका माता दत्तं राज्यमिदं मम ।
तद् ददामि पुनस्तुभ्यं यथा त्वमददा मम ।।

जगदद्याभिषिक्तंत्वामनुपश्यतु राघव ।
प्रतपन्तमिवादित्यं मध्याह्ने दीप्ततेजसम् ।।

यावदावर्तते चक्रं यावती च वसुन्धरा ।
तावत्त्वमिह लोकस्य स्वामित्वमनुवर्तय ।।

भरतस्य वचः श्रुत्वा रामः परपुरञ्जयः ।
तथेति प्रतिजग्राह निषसादासने शुभे ।। 128.12

ततः शत्रुघ्नवचनान्निपुणा श्मश्रुवर्धनाः ।
सुखहस्ताः सुशीघ्राश्च राघवं पर्यवारयन् ।।

पूर्वं तु भरते स्नाते लक्ष्मणे च महाबले ।
सुग्रीवे वानरेन्द्रे च राक्षसेन्द्रे विभीषणे ।।

विशोधितजटः स्नातश्चित्रमाल्यानुलेपनः ।
महार्हवसनोपेतस्तथौ तत्र श्रिया ज्वलन् ।।

प्रतिकर्म च रामस्य कारयामास वीर्यवान् ।
लक्ष्मणस्य च लक्ष्मीवानिक्ष्वाकुकुलवर्धनः ।।

प्रतिकर्म च सीतायाः सर्वाः दशरथस्त्रियः ।
आत्मनैव तदा चक्रुर्मनस्विन्यो मनोहरम् ।।

अग्न्यार्कामलसंकाशं दिव्यं दृष्ट्वा रथं स्थितम् ।
आरुरोह महाबाहू रामः परपुरञ्जयः ।।

अयोध्यायां च सचिवा राज्ञो दशरथस्य च ।
पुरोहितं पुरस्कृत्य मन्त्रयामासुरर्थवत् ।।

सर्वमेवाभिषेकार्थं जयार्हस्य महात्मनः ।
कर्तुमर्हथ रामस्य यद् यन्मङ्गलपूर्वकम् ।।

इति ते मन्त्रिणः सर्वे संदिश्य च पुरोहितः ।
नगरान्निर्ययुस्तूर्णं रामदर्शनबुद्धयः ।।

हरियुक्तं सहस्राक्षो रथमिन्द्रं इवानघः ।
प्रययौ रथमास्थाय रामो नगरमुत्तमम् ।। 128.27

ऋषिसंघैस्तदाऽऽकाशे देवैश्च समरुद्गणैः ।
स्तूयमानस्य रामस्य शुश्रुवे मधुरध्वनिः ।।

ते वर्धयित्वा काकुत्स्थं रामेण प्रतिनन्दिताः ।
अनुजग्मुर्महात्मानं भ्रातृभिः परिवारितम् ।।

अक्षतं जातरूपं च गावः कन्याः सहद्विजाः ।
नरा मोदकहस्ताश्च रामस्य पुरतो ययुः ।।

सौवर्णान् वानरेन्द्राणां चतुर्णां चतुरो घटान् ।।
ददौ क्षिप्रं ससुग्रीवः सर्वरत्नविभूषितान् ।।

नदीशतानां पञ्चानां जलं कुम्भैरुपाहरन् ।
पूर्वान् समुद्रात् कलशं जलपूर्णमथानयत् ।।

शुषेणः सत्वसम्पन्नः सर्वरत्नविभूषितम् ।
ऋषभो दक्षिणात् तूर्णं समुद्राज्जलमानयत् ।।

रक्तचन्दनकर्पूरैः संवृतं काञ्चनं घटम् ।
गवयः पश्चिमात् तोयमाजहार महार्णवात् ।।

रत्नकुम्भेन महता शीतं मारुतविक्रमः ।
उत्तराच्च जलं शीघ्रं गरुडानिलविक्रमः ।।

आजहार स धर्मात्माऽनिलः सर्वगुणान्वितः ।
ततः स प्रयतो वृद्धो वसिष्टो ब्राह्मणैः सह ।
रत्नं रत्नमये पीठे ससीतं संन्यवेशयत् ।।

अभ्यषिञ्चन्नरव्याघ्रं प्रसन्नेन सुगन्धिना ।
सलिलेन सहस्राक्षं वसवो वासवं यथा ।। 128.61

ब्रह्मणा निर्मितं पूर्वं किरीटं रत्नशोभितम् ।
अभिषिक्तः पुरा येन मनुस्तं दीप्ततेजसम् ।।

रत्नैर्नानाविधैश्चैव चित्रितायां सुशोभनैः ।
नानारत्नमये पीठे कल्पयित्वा यथाविधि ।।

किरीटेन ततः पश्चाद् वसिष्ठेन महात्मना ।
ऋत्विग्भिर्भूषणैश्चैव समयोक्ष्यत राघवः ।।

छत्रं तस्य च जग्राह शत्रुघ्नः पाण्डुरं शुभम् ।
श्वेतं च वालव्यजनं सुग्रीवो वानरेश्वरः ।।

अपरं चन्द्रसंकाशं राक्षसेन्द्रो विभीषणः ।
अभिषेके तदर्हस्य तदा रामस्य धीमतः ।
भूमिः सस्यवती चैव फलवन्तश्च पादपाः ।।

सीतायै प्रददौ रामश्चन्द्ररश्मिसमप्रभम् ।
अरजे वाससी दिव्ये शुभान्याभरणानि च ।।

अवैक्षत हरीन् सर्वान् भर्तारं च मुहुर्मुहुः ।
तामिङ्गितज्ञः सम्प्रेक्ष्य बभाषे जनकात्मजाम् ।।

प्रदेहि सुभगे हारं यस्य तुष्टासि भामिनि ।
अथ सा वायुपुत्राय तं हारमसितेक्षणा ।।

यथार्हं पूजिताः सर्वे कामैरत्नैश्च पुष्कलैः ।
प्रहृष्टमनसः सर्वे जग्मुरेव यथागतम् ।।

स राज्यमखिलं शासन्निहतारिर्महायशाः ।
राघवः परमोदारः शशास परया मुदा ।
उवाच लक्ष्मणं रामो धर्मज्ञं धर्मवत्सलः ।। 128.91

आतिष्ठ धर्मज्ञ मयासहेमां गां पूर्वराजाध्युषितां बलेन ।
तुल्यं मया त्वं पितृभिर्धृता या तां यौवराज्ये धुरमुद्वहस्व ।।

सर्वात्मना पर्यनुनीयमानो यदा न सौमित्रिरुपैति योगम् ।
नियुज्यमानो भुवि यौवराज्ये ततोऽभ्यषिञ्चद् भरतं महात्मा ।।

राज्यं दशसहस्राणि प्राप्य वर्षाणि राघवः ।
शताश्वमेधानाजह्रे सदश्वान् भूरिदक्षिणान् ।।

आजानुलम्बबाहुः स महावक्षाः प्रतापवान् ।
लक्ष्मणानुचरो रामः शशास पृथिवीमिमाम् ।।

राघवश्चापि धर्मात्मा प्राप्य राज्यमनुत्तमम् ।
ईजे बहुविधैर्यज्ञैः ससुहृज्ज्ञातिबान्धवः ।।

न पर्यदेवन् विधवा न च व्यालकृतं भयम् ।
न व्याधिजं भयं चासीद्रामे राज्यं प्रशासति ।।

सर्वे मुदितमेवासीत् सर्वो धर्मपरोऽभवत् ।
राममेवानुपश्यन्तो नाभ्यहिंसन् परस्परम् ।।

आसन् वर्षसहस्राणि तथा पुत्रसहस्रिणः ।
निरामया विशोकाश्च रामे राज्यं प्रशासति ।।

रामो रामो राम इति प्रजानामभवन्कथाः ।
रामभूतं जगदभूद् रामे राज्यं प्रशासति ।।

नित्यमूला नित्यफलास्तरवस्तत्र पुष्पिताः ।
कामवर्षी च पर्जन्यः सुखस्पर्शश्च मारुतः ।। 128.103

दशवर्षसहस्राणि दशवर्षशतानि च ।
भ्रातृभिः सहितः श्रीमान् रामो राज्यमकारयत् ।।

धर्म्यं यशस्यमायुष्यं राज्ञां च विजयावहम् ।
आदिकाव्यमिदं चार्षं पुरा वाल्मीकिना कृतम् ।।

यः श्रृणोति सदा लोके नरः पापान् प्रमुच्यते ।
पुत्रकामश्च पुत्रान् वै धनकामो धनानि च ।।

भविष्यन्ति सदानन्दाः पुत्रपौत्रसमन्विताः ।
श्रुत्वा रामायणमिदं दीर्घमायुश्च विन्दति ।।

रामस्य विजयं चेमं सर्वमक्लिष्टकर्मणः ।
श्रुणोति य इदं काव्यं पुरा वाल्मीकिना कृतम् ।।

शृण्वन्ति य इदं काव्यं पुरा वाल्मीकिना कृतम् ।
ते प्रार्थितान् वरान् सर्वान् प्राप्नुवन्तीह राघवात् ।।

रामायणमिदं कृत्स्नं श्रृण्वतः पठतः सदा ।
प्रीयते सततं रामः स हि विष्णुः सनातनः ।।

आदिदेवो महाबाहुर्हरिर्नारायणः प्रभुः ।
साक्षाद् रामो रघुश्रेष्टः शेषो लक्ष्मण उच्यते ।।

एवमेतत् पुरावृत्तमाख्यानं भद्रमस्तु वः ।
प्रव्याहरत विस्रब्धं बलं विष्णोः प्रवर्धताम् ।।

देवाश्च सर्वे तुष्यन्ति ग्रहणाच्छ्रवणात् तथा ।
रामायणस्य श्रवणे तुष्यन्ति पितरः सदा ।। 128.122

भक्त्या रामस्य ये चेमां संहितामृषिणा कृताम् ।
ये लिखन्तीह च नरास्तेषां वासस्त्रिविष्टपे ।।

कुटुम्बवृद्धिं धनधान्यवृद्धिं स्त्रियश्चमुख्याः सुखमुत्तमं च ।
श्रुत्वा शुभं काव्यमिदं महार्थं प्राप्नोति सर्वो भुवि चार्थसिद्धिम् ।।

आयुष्यमारोग्यकरं यशस्यं सौभ्रातृकं बुद्धिकरं शुभं च ।
श्रोतव्यमेतन्नियमेन सद्भिराख्यानमोजस्करमृद्धिकामैः ।।

**।। इत्यार्षे श्रीमद् वाल्मीकिरामायणसंग्रहे**
**युद्धकाण्डम् सम्पूर्णम् ।।**

**।। इति श्रीमद्वाल्मीकिरामायणसंग्रहः सम्पूर्णः ।।**

# फलानुकीर्तनम्

नास्ति गङ्गासमं तीर्थं नास्ति मातृसमो गुरुः ।
नास्ति विष्णुसमो देवो नास्ति रामायणात् परम् ।।

नास्ति वेदसमं शास्त्रं नास्ति शान्तिसमं सुखम् ।
नास्ति शान्तिपरं ज्योतिर्नास्ति रामायणात् परम् ।।

नास्ति क्षमासमं सारं नास्ति कीर्तिसमं धनम् ।
नास्ति ज्ञानसमो लाभो नास्ति रामायणात् परम् ।।

रामायणपरो नित्यं गङ्गास्नानपरायणः ।
धर्ममार्गप्रवक्तारो मुक्ता एव न संशयः ।।

स्मर्तॄणां सर्वपापानि नाशयत्याशु सत्तमाः ।
तदर्थकमिदं पुण्यं काव्यं श्राव्यमनुत्तमम् ।।

श्रवणात् पठनाद्वापि सर्वपापविनाशकृत् ।
यस्य रामरसे प्रीतिर्वर्तते भक्तिसंयुता ।।

त एव कृतकृत्याश्च घोरे कलियुगे द्विजाः ।
नवाह्ना किल श्रोतव्यं रामायणकथामृतम् ।।

सर्वपापहरं पुण्यं सर्वदुःखनिबर्हणम् ।
समस्तपुण्यफलदं सर्वयज्ञफलप्रदम् ।।

रामार्पितमिदं पुण्यं काव्यं तु सर्वकामदम् ।
भक्त्या शृण्वन्ति विन्दन्ति तेषां पुण्यफलं शृणु ।।

किं तीर्थगोप्रदानैर्वा किं तपोभिः किमध्वरैः ।
अहन्यहनि रामस्य कीर्तनं परिशृण्वताम् ।।

चैत्रे माघे कार्तिके च रामायणकथामृतम् ।
नवैरहोभिः श्रोतव्यं रामायणकथामृतम् ।।

रामप्रसादजनकं रामभक्तिविवर्धनम् ।
सर्वपापक्षयकरं सर्वसम्पद्विवर्धनम् ।।

यस्त्वेतद् शृणुयाद्वापि पठेद्वा सुसमाहितः ।
सर्वपापविनिर्मुक्तो विष्णुलोकं स गच्छति ।।

**।। इति श्रीरामायणमाहात्म्ये फलानुकीर्तनम् ।।**